नास्तिकाय च यद्दत्तं धर्मविक्रयिणे च यत् ।
कारकाय च यद्दत्तं दत्तं यत् कूटसाक्षिणे ॥२५
नचात्मानं तरन्त्येते न दातारं युधिष्ठिर ! ।
यत्तेभ्यो दत्तमात्राणि दानानि सुबहून्यपि ॥२६
वृथा भवन्ति राजेन्द्र ! भस्मन्याज्याहुतिर्यथा ।
यथेष्टं यत्फलं किञ्चित् भविष्यति कथञ्चन ॥२७
राक्षसाश्च पिशाचाश्च तद्विलुम्पन्ति संस्थिताः ।
वृथा ह्येतानि दानानि कथितानि समासतः २८
जीवितञ्च वृथा तेषां तच्छृणुष्व युधिष्ठिर ! ।

श्रीभगवानुवाच ।

ये च मां न प्रपद्यन्ते शङ्करं वा नराधमाः ।
ब्रह्माणं वा महीदेवा वृथा जीवन्ति ते नराः ॥२६
ये च निन्दन्ति मां मूढाः शङ्करं वा नराधमाः ।
कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः ॥३०
विप्रा निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः ।
विद्यमानधनोयस्तु दानधर्मविवर्जितः ॥३१
मृष्टमश्नाति यश्चैको वृथा जीवति सोऽपि च ।
वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते ॥३२
तमोनिविष्टचित्तेन दत्तं दानञ्च यद्भवेत् ।
न तस्य फलमश्नाति नरो गर्भगतो नृप ! ।
ईर्ष्यामात्सर्य्यसंयुक्तो भगवद्वाक्यकारणम् ।
ददाति दानं यो मर्त्यो बालभावस्तदश्नुते ॥३३

श्रद्धायुक्तः शुचिः स्नातः प्रसन्नोभयमानसः ।
ददाति दानं यो मर्त्यो यौवने स तदश्नुते ॥३४
स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते ।
तत् सार्वकामिकं विद्धि दान मामरणान्तिकम ॥३५
सात्विकं राजसञ्चैव तामसञ्च युधिष्ठिर ! ।
दानं दानफलञ्चैव गतिञ्च त्रिविधां शृणु ॥३६
दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै ।
उपकारवियुक्ताय दत्तं यत्तद्धि सात्विकम् ॥३७
श्रोत्रियाय दरिद्राय बहुभृत्याय पाण्डव ! ।
दीयते यत्प्रणष्टाय तत् सात्विकमुदाहृतम ॥३८
वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे ।
समृद्धाय च यद्दानं तद्राजसमुदाहृतम् ॥३९
सम्बन्धिने च यद्दानं व्रताय चैव पाण्डव ! ।
लाभादिभिरपात्राय तद्राजसमुदाहृतम ॥४०
वैश्वदेवविहीनाय यद्दानं श्रोत्रियाय च ।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ॥४१
सरोपमवधूतञ्च शोकयुक्तमवज्ञया ।
सेवकाय च यद्दत्तं तद्दानं तामसं स्मृतम ॥४२
देवाः पितृगणाश्चैव जनयश्चाग्नयस्तथा ।
सात्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर ! ॥४३
अथवा दैत्यसङ्घाश्च गृहयज्ञांश्च राक्षसाः ।
राजसं दानमश्नन्ति वर्जितं पितृदैवतः ।

पिशाचाः प्रेतसङ्घाश्च कश्मला ये मलीमसाः ।
तामसं दानमश्नन्ति गतिश्च त्रिविधां शृणु ॥४४
सात्विकानां तु दानाना मुत्तमं फलमिष्यते ।
मध्यमं राजसानान्तु तामसानां तु पश्चिमम् ॥४५
अभिगत्योपनीताना दानानामुत्तमं फलम् ।
मध्यमन्तु समाधाय जघन्याय च ते फलम् ॥४६
अयाचितप्रदाता वै स याति गतिमुत्तमाम् ।
समाहूय तु वै दद्यात् मध्यमां स गतिं व्रजेत् ॥४७
याचितो यस्तु वै दद्यात् जघन्यां स गतिं व्रजेत् ।
उत्तमा देवकी ज्ञेया मध्यमा मानुषी गतिः ॥४८
जघन्या याति तिर्यक्षु गतिरेषा क्रिया मता ।
पत्रभूतेषु विप्रेषु स्थितेषु चाहिताग्निषु ॥४९
यश्च यच्छति तीव्रोष्णं क्षयकृन स प्रकीर्त्यते ।
श्रोत्रियाणां दरिद्राणां भरणं कुरु पाण्डव ! ॥५०
समृद्धानां द्विजातीनां कार्य्यन्ते परिरक्षणम ।
दरिद्रान् वृत्तिहीनानां प्रदानैस्तांस्तु पूजयेत् ॥५१
आतुरस्यौषधैः कार्य्यं नीरुजस्य किमौषधैः ।
पापं प्रतिगृहीतारं प्रदातु मुपगच्छति ।
प्रतिगृहीतुर्य्यत्पुण्यं प्रदातारमुपैति तत् ॥५१
तस्माद्दानं सदा कार्य्यं परमं हितमिच्छता ।
वेदविद्यावता तेषु सदा गुर्वन्तवर्जनम् ॥५२

प्रयत्नेन हि दातव्यो महादानमयो निधिः।
यस्तु दाता प्रयच्छेत सहस्रस्यावलम्बनम्॥५३
भुक्तशेषस्य भक्तस्य तं निमन्त्रय भारत!।
अमन्त्रन्तु निराशास्ते न कर्तव्या हि पाण्डव!॥५४
कुलानि सन्ततिः प्राणा नैपामाशा हता भवेत्।
मद्भक्ता ये नरश्रेष्ठ! मद्गता मत्परायणाः।
मद्याजिनो मन्नियमास्तान् प्रयत्नेन पूजयेत्॥५५
तेपान्तु पावनायाह नित्यमेव युधिष्ठिर!।
उभे सर्वे प्रतिष्ठामि व्यसनं तच्च सुव्रतम्॥५६
तस्मादष्टाक्षरं मन्त्रं मद्भक्तै र्वीतकल्मपैः।
सन्ध्याकालेष्वकालेपु जप्तव्यश्चात्मशुद्धये॥५७
अन्येषामपि विप्राणां किल्विपं हि प्रणश्यति।
उभे सर्वे च पुरुषा स्तस्माद्विप्रो विशुद्धये॥५८
दैवे श्राद्धे च विप्रः सन् विधियुक्तो जुगुप्सितः।
जुगुप्सितन्तु तत् श्राद्धं दहत्यग्निरिवेन्धनम्॥५९
भारतं मानवोधर्मः साङ्गवेदश्चिकित्सितम्।
अज्ञाविद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥६०
न ब्राह्मणान् परीक्षेत दैवे कर्मणि मन्त्रवित्।
महान् भवेत् परीवादो ब्राह्मणानां परीक्षणे॥६१
ब्राह्मणानां परीवादं यः करोति नराधमः।
सहसैव शुनां योनिं स गच्छेत् ब्रह्मदूषकः॥६२

स्वल्पपापेन निन्दित्वा परीवादान् खरो भवेत्।
परिभाय कृमिर्भवति कीटो भवति मस्करी ॥६३
दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥६४
क्षत्रियञ्चैव स पञ्चब्राह्मणञ्च बहुश्रुतम्।
नावमन्येत मेधावी कृशानपि कदाचन ॥६५
इह तञ्चापि पुरुषं निर्दहेदवमानितम्।
तस्मादेतं प्रयत्नेन नावमन्येत बुद्धिमान् ॥६६
यथा सर्वास्ववस्थासु पावको दैवतं महत्।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत् ॥६७
व्यङ्गान् काणांश्च कुब्जांश्च वामनान् गास्तथैव च।
स निर्वदेद्युक्तश्च मिश्रिता वेदपारगैः ॥६८
मन्यून्नोत्पादयेत्तेषां नचानिष्टं समाचरेत्।
मन्युपहरणा विप्रा न विप्राः शस्त्रपाणयः ॥६९
मन्युना घ्नन्ति ते शत्रून वज्रेणेन्द्र इवासुरान्।
ब्राह्मणो हि महद्दैवं कथितं वेदपारगैः ॥७०
द्विजाश्च सर्वभूतानां धर्मकोशस्य गुप्तये।
किं पुनस्ते च कौन्तेय! सर्वे नित्यमुपासते ॥७१
यस्यास्येन सदाश्नन्ति हव्यानि विविधानि च।
तरामस्तान् द्विजान् वै किमभूतमधिकन्ततः ॥७२
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥७३

भुक्तेषु तेषु स्ववशे तस्य धर्मं ददाति च ।
अनुशंस्यात् ब्राह्मणस्य भुञ्जतेऽपीतरे जनाः ॥७४
तस्मात्त नावमन्तव्या मद्भक्ताश्च द्विजाः सदा ।
आरण्यकोपनिषद्भि ये तु पश्यन्ति मां द्विजाः ॥७५
कलावस्थान् द्विजान सर्व्वान प्रयत्नेन प्रपूजयेत् ।
स्वगृहे वा प्रवासे वा दिवा रात्रौ तथैव च ॥७६
वृद्धाश्च ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव ॥
नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ॥७७
नास्ति विप्रान् परो बन्धु र्नास्ति विप्रान परोनिधिः ।
नास्ति विप्रात् परं तीर्थं न पुण्यं ब्राह्मणात् परम् ॥७८
नास्ति विप्रान् परो धर्मो नास्ति विप्रान परा गतिः ।
पापकर्मसमाक्षिप्तं पतन्तं नरके नरम् ॥७९
त्रायते दानमप्येकं पात्रभूते कृते द्विजे ।
बाला हिताग्नयो ये च शान्ताः स्युर्वान्नवर्जिताः ॥८०
मामर्च्चयन्ति सद्भक्तास्तेभ्यो दत्तं महाफलम् ।
प्रदानैः पूजितो विप्रो वन्दितो वापि कृत्स्नशः ॥८१
संभावितो वा विप्रो वै मद्भक्तो दिवमुन्नयेत् ।
ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुपास्तुतम ॥८२
तं श्रुत्वा वाथवा दृष्ट्वा नरैः पापात् प्रमुच्यते ।
मद्भक्ता मद्गतप्राणा मद्भक्त्या मत्परायणाः ॥८३
बीजयोनिविशुद्धा ये श्रोत्रियाः संयतेन्द्रियाः ।
श्रुत्वान्नविरला नित्यन्ते पुनन्तीह दर्शनात् ॥८४

स्वयं नीत्वा विशेषेण दानन्तेषां गृहेष्वथ ।
निधापयेत्तु मद्भक्ता तद्दानङ्कोटिसम्मितम् ॥८५
जाग्रतः स्वपतोवापि प्रभासे स्वगृहेऽथ वा ।
हृदयानि प्रपश्यामि यस्य विप्रस्य भारत ! ॥८६
स पूजितो वास्पृष्टो वा पृष्टोवापि द्विजोत्तमः ।
सम्भाषितो वा राजेन्द्र पुनातीह नरः सदा ॥८७
एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव ! ।
मद्भक्तेभ्यः प्रदत्तानि तानि स्वर्गप्रदानि वै ॥८८

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

### अथ विप्राणां गुणदोषवर्णनम् ।

वैशम्पायन उवाच ।

श्रुत्वैवं सात्विकं दानं राजसन्तामसन्तथा ।
पृथक् पृथक् फलञ्चैव गतिञ्चैव पृथक् पृथक् ॥१
अवितृप्तः प्रसन्नात्मा पुण्यधर्मामृतं पुनः ।
युधिष्ठिरो धर्मनित्यः केशवं पुनरब्रवीत् ॥२

युधिष्ठिर उवाच ।

द्विजयोनिविशुद्धानां लक्षणानि वदस्व मे ।
बीजदोषेण लोके च जायते च कथन्तराम् ॥३
आचारदोषं देवेश ! वक्तुमर्हस्यशेषतः ।
ब्राह्मणानां विशेषश्च गुणदोषौ च केशव ! ॥४
चातुर्वर्ण्यस्य कृत्स्नस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तरन्ते तारयन्ति च ॥
एतत्कथय देवेश ! त्वद्भक्तस्य नमोऽस्तुते ॥५

श्रीभगवानुवाच ।

शृणु राजन्यथातत्वं बीजयोनिशुभाशुभम ।
येन तिष्ठति लोकोऽयं विनश्यति च पाण्डव ॥६
अवस्थितब्रह्मचर्योयं च विप्रो यथाविधि ।
स द्विजानामविज्ञेय स्तस्य बीजं शुभम्भवेत् ॥७
कन्या चाक्षतयोनिः स्यात् कुलीना पितृमातृतः ।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ॥८
सा प्रशस्ता वरारोहा शुद्धयोनिः प्रशस्यते ।
कानीनश्च सहोढश्च ता वुभौ कुण्डगोलकौ ॥९
आरूढवनितो ज्ञातः पतितस्यापि यः सुतः ।
षडेते विप्र चण्डाला निषिद्धाः श्वपचादपि ॥१०
यो यत्र तत्र वा रेतः सिक्त्वा गुर्वीषु वाचयेत् ।
कामचारी स पापात्मा बीजं तस्याशुभम्भवेत् ॥११

अशुभं तन्नवेद्बीजं शुद्धां योनिन्नचार्हति ।
दूषयत्येव तां वाणीं शृणुध्वं च हविर्यथा ॥१२
गुर्वीयोनौ पतन् वीजं हाहाशब्दो द्विजन्मनाम् ।
कुर्यान् पुरीषगर्तेषु पतितासि मतिः कुतः ॥१३
मामधः पातयेदेव कामात्मा पापमोहितः ।
अधोगतिं व्रजेत् क्षिप्र मिति शप्त्वा पतेत्तु यत् ॥१४
आत्मा हि शुक्रमुद्दिष्टं दैवतं परमं महत् ।
तस्मात्सर्वप्रयत्नेन निरुध्यात् शुक्रमात्मनः ॥१५
आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः ।
पुण्यश्च मत्प्रियत्वश्च हन्यते ब्रह्मचर्यया ॥१६
अविप्लुतब्रह्मचर्यैर्गृहस्थाश्रममाश्रितैः ।
पञ्चयज्ञपरैर्धर्मः स्थाप्यते पृथिवीतले ॥१७
सायं प्रातस्तु ये सन्ध्यां सम्यक् नित्यमुपासते ।
नावं वेदमधिकृत्य तारयन्ति तरन्ति च ॥१८
यो जपेत् पावनीं देवीं गायत्रीं वेदमातरम् ।
न सीदेत् प्रत्यगृह्णीत पृथिवीञ्च ससागराम् ॥१६
ये च स्यु· संस्थिताः केचिन् गृहे सूर्योदयादिव ।
ते चास्य सौम्या जायन्ते शिवाशुभकरास्तथा ॥२०
यत्र यत्रास्थिताश्चैव दारुणाः पिशिताशनाः ।
घोररूपा महाकाया वीजं न घोपयन्ति च ॥२१
पुनन्तीह पृथिव्यां हि चीर्णा स्तत्वव्रता नराः ।
ये चीर्णा व्रतवेदा ये विक्रमपथमाश्रिताः ॥२२

ब्राह्मणा नाममात्रेण तेऽपि पूज्या युधिष्ठिर ! ।
किं पुनर्यश्च सन्ध्ये द्वे नित्यमेवोपतिष्ठति ॥२३
शीलमध्ययनं दानं शौचमार्दवमार्जवम् ।
तस्माद्वेदान् विशिष्टान्वै मनुराह प्रजापतिः ॥२४
भूर्भुवः स्वरिति ब्रह्म यो वेद परमद्विजः ।
स्वदारनिरतो दान्तः स च विद्वान् स भूसुरः ।
सन्ध्यामुपासते विप्रा नित्यमेव द्विजोत्तमाः ॥२५
ते यान्ति नरशार्दूल ! ब्रह्मलोकं मसंशयम् ।
सावित्रीमात्रसारोऽपि वरोऽपि प्रमुयन्त्रितः ॥२६
नायन्त्रित श्चतुर्वेदी सर्वाशी सर्वविक्रयी ।
सावित्रीश्चैव वेदांश्च तुल्या तुल्यन पुरा ॥२७
देवा ऋषिगणाश्चैव सर्वे ब्रह्मपुरःसराः ।
चतुर्णामपि वेदानां सा हि राजन् ! गरीयसी ॥२८
यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः ।
समुत्सृज्य रसं सर्वं निरातङ्कमसारवत् ॥२९
एवं हि सर्ववेदानां सावित्री प्राणमुच्यते ।
निर्जपा हीतरे वेदा सावित्री मन्तरेण च ॥३०
एवं हि यश्चतुर्वेदी शीलभ्रष्टः स कुत्सितः ।
शीलव्रतसमायुक्तः सावित्रीपाठको वरः ॥३१
सहस्रं परमां देवीं शतमध्यां दशावराम् ।
सावित्रीं जप कौन्तेय ! सर्वपापप्रणाशिनीम् ॥३२

युधिष्ठिर उवाच ।

त्रिलोकनाथ ! भो कृष्ण ! सर्वभूतात्मको ह्यसि ।
नानायोगपरश्रेष्ठ ! तुष्यसे केन कर्मणा ॥३३

श्रीभगवानुवाच ।

यदि भारसहस्रन्तु गुग्गुल्यादि प्रधूपयेत् ।
करोषि च नमस्कार मुपहारञ्च कारयेत् ॥३४
पूजयेत् स्तुतिभिर्माञ्च ऋग्यजुः सामतस्तथा ।
न च तुष्यन्ति ते विप्रा नाहन्तुष्यामि भारत ! ॥३५
ब्राह्मणे पूजिते नित्यं पूजितोऽस्मि न संशयः ।
आतुष्टेचाहमाकृष्योभवामि भरतर्षभ ! ॥३६
परमाधिगतिस्तेषां पूजयन्ति च मां हि ते ।
यदहं द्विजरूपेण वसामि वसुधातले ॥३७
यस्तान् पूजयति प्राज्ञो मद्गतेनान्तरात्मना ।
तमहंस्वेन रूपेण पश्यामि नरपुङ्गव ! ॥३८
काणाः कुब्जा वामनाश्च दरिद्रा व्याधितास्तथा ।
नावमान्या द्विजाः प्राज्ञैर्मम रूपा हि ते द्विजाः ॥३९
ये तेऽपि सागरान्तायां पृथिव्यां द्विजसत्तमाः ।
मम रूपेषु तेष्वेव मर्चितेष्वर्चितो भवान् ॥४०
बहवस्तु न जानन्ति नरा ज्ञानबहिष्कृताः ।
यथाहं द्विजरूपेण वसामि वसुधातले ॥४१
अवमन्यन्ति ये विप्रान्विकर्मापादयन्ति च ।
प्रेषयन्ते च सततं सुश्रूणाङ्कारयन्ति च ॥४२

भूतांस्तान् करपत्रेण यमदूता महाबलाः।
निष्कृतन्ति यथाकाष्ठं सूत्रमार्गेण शिल्पिना ॥४३
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजादिषु।
तान् दूता यमलोकस्थान् निपात्य धरणीतले ॥४४
आक्रुश्योरसि पादेन श्रद्धासंरक्तलोचनाः।
अग्निवर्णैस्तु सन्दंशैर्यमो हिंसन माचरेत् ॥४५
ये च विप्रा निरीक्षन्ते पापाः पापेन चक्षुषा।
अब्रह्मण्यश्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः ॥४६
तेषां घोरमहाकायं वज्रतुल्या महाबलाः।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया ॥४७
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम्।
अस्थिभागञ्च यः कुर्यात् प्राणैर्वा विप्रयोजयेत् ॥४८
सोऽनुपूर्वेण यातीमान्नरकानेकविंशतिम्।
शूलमारोपितो गत्वा ज्वलनेनापि दह्यते ॥४९
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्शिराः।
नावमुच्येत दुर्मेधा न तस्य क्षीयते गतिः ॥५०
ब्राह्मणानविचार्यैव जयन्वै धर्मकाङ्क्षया।
शतवर्षसहस्राणि तामिस्रोपरि पच्यते ॥५१
उत्पाद्य शोणितं गात्रात् संरम्भा इति पूर्वकम्।
स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥५२
तस्मान्नाकुशलं ब्रूयात न शुष्काङ्गिरमीरयेत्।
तच्छ्रुत्वापरुषां वाणीं चैवैतानप्यतिक्रमेत्।
ये विप्रं स्निग्धया वाचा पूजयन्ति नरोत्तमाः ॥५३

तच्छ्रुत्वा वै स्तुतश्चैव भवामि च युधिष्ठिर ! ॥५४
सञ्जयन्ति च ये विप्रान् क्रोधयन्ति च भारत ! ।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः ॥५५
यश्चन्दनैश्चागुरुधूपदीपैरभ्यर्च्य यत्काष्ठमधूम मर्च्यात् ।
तेनार्चितो नैव भवामि सद्यो विप्रार्चनादर्चितोऽहं भवामि ५६
विप्रप्रसादाद्धरणीधरोऽहं विप्रप्रसादादसुराञ्जयामि ।
विप्रप्रसादाच्च सदक्षिणोऽहं विप्रप्रसादादजितोऽहमस्मि ॥५७

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे चतुर्थोऽध्यायः।

.........

## पञ्चमोऽध्यायः।

### अथ जीवस्य शुभाशुभकर्मणां फलवर्णनम।

युधिष्ठिर उवाच।

देव ! देवेश ! दत्यघ्न ! परं कौतुहलं हि मे ।
एतत्कथय सर्वज्ञ ! त्वद्भक्तस्य ममाच्युत ! ॥१
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरे ।
कीदृशं किं प्रमाणं वा किमधिष्ठानमेव च ॥२
तरन्ते मानवाः देवाः केनोपायेन मानवाः ।
क वास्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ॥३
कथयस्व महादेव ! सुखदुःख मशेषतः ।
जीवस्य यमलोके तु कर्मभिश्च शुभाशुभैः ॥४

अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः।
मृत्युदूतै दुराधर्षैं श्चौरै घोरपराक्रमैः ॥५
बद्धस्य क्षिप्यमाणस्य जनस्य च यमाज्ञया।
पुण्यं पापं कथन्तिष्ठेत् सुखदुःखमशेषतः ॥६
दुराधर्षैर्ह्रीयते वा मानुषैस्तैः कथं पुनः।
किं वा तत्र महादेवाः कर्म कुर्वन्ति मानवाः ॥७
कथं धर्मरता यान्ति देवता द्विजपूजकाः।
कथं वा प्रेतकर्माणो धर्मं प्रेतपुरं नराः ॥८
किं रूपं किं प्रदानं वा वर्णः को वास्य केशव !।
जीवस्य क्रोशतो नित्यं यमलोकं ब्रवीषि मे ॥९

श्रीभगवानुवाच।

शृणु राजन्यथातत्वं यमात्थ [यच्चपृच्छसि] यत्प्रयच्छसि।
तत्राहं कथयिष्यामि मद्भक्तस्य नरेश्वर ! ॥१०
षडशीतिसहस्राणि योजनानां शतानि च।
मानुषस्य च लोकस्य यमलोकस्य चान्तरम् ॥११
न तत्र वृक्षच्छाया च न तटाकं सरोहि वा।
न वाप्यो दीर्घिका वापि न कूपं वा युधिष्ठिर ! ॥१२
न मण्डपं सभा वाऽपि न प्रभा न निवेशनम्।
न पर्वतो नदी वाऽपि न भूमेर्विवरं क्वचित् ॥१३
न ग्रामो नाश्रमोवाऽपि नोद्यानं काननानि च।
न किञ्चिद्विश्रमस्थानं पथि तस्मिन्युधिष्ठिर ! ॥१४

जन्तोः सम्प्राप्तकालस्य वेदनार्त्तस्य वै भृशम् ।
करणैस्त्यक्तदेहस्य प्राणः कण्ठगतैः पुनः ॥१५
शरीराद्धार्यते जीवो ह्यवशो मातरिश्वना ।
निर्गतो वायुभूतस्तु सर्पकौशिकविग्रहात् ॥१६
शारीरं यच्च तद्रूप्यं तद्वर्णस्तत्प्रमाणकम् ।
अदृश्यं संप्रविष्टन्तु सोऽप्यदृष्टो न केनचित् ॥१७
सोऽन्तरात्मा देहवतामष्टाङ्गो यस्तु सञ्चरेत् ।
छेदनाद्भेदनाद्दाहात्तोदनाद्वा न नश्यति ॥१८
नानारूपधरैर्घोरैः प्रचण्डैश्चण्डशासनः ।
श्रूयमाणो दुराधर्षैर्यमदूतैर्यमाज्ञया ॥१९
पुत्रदारं यैश्च पाशैः सन्निरुद्धो वशोबलात् ।
कर्मभिश्चापि नुगतैः कृतैः सुकृतदुष्कृतैः ॥२०
अकृत्यमानकरणं बन्धुभिर्दुःखपण्डितैः ।
त्यक्त्वा बन्धुजनं सर्वं निरपेक्षस्तु गच्छति ॥२१
मातृभिः पितृभिश्चैव भ्रातृभिर्मातुलैस्तथा ।
दारैः पुत्रैर्वयस्यैश्च रुदद्भिस्त्यज्यते पुनः ॥२२
अदृश्यमानस्तैर्दीनै रश्रुपूर्णमुखेक्षणैः ।
स्वशरीरं परित्यज्य वायुभूतस्तु गच्छति ॥२३
अन्धकारं परतरं महाघोरं तमोवृतम् ।
दुःखाय दुष्प्रकाशञ्च तमाशु पापकर्मणाम् ॥२४
दुःसहं यमपुरञ्च दुर्निरीक्ष्यं दुरासदम् ।
दुराप मतिदुर्गञ्च पापिष्ठान्धान्तरोत्तमम् ॥२५

ऋषिभिः कथ्यमानन्तु पारम्पर्येण पार्थिव !
त्रासं जनयति प्रायः पूयमानकथास्वपि ॥२६
अपि तैश्चैव गन्तव्या स्तदर्थान् वा युधिष्ठिर ! ।
प्राप्तकालेन सन्त्यज्य बन्धून् भोगान धनानि च ॥२७
जरायुजैश्चाण्डजैश्च उद्भिज्जैः स्वेदजै स्तथा ।
जङ्गमैः स्थिरसंज्ञैश्च गन्तव्यं हि यमालयम ॥२८
देवासुरमनुष्याद्यैर्वैवस्वतवशानुगैः ।
स्त्रीपुंनपुंसकैश्चापि पृथिव्यां जीवसंज्ञकैः ॥२६
मध्यमै युवभिर्बालै र्वृद्धैर्वापि तथैव च ।
जातमात्रैश्च गर्भस्थैर्गन्तव्यः स महालयः ॥३०
पूर्वाह्णे वा पराह्णे वा सन्ध्याकालेऽथवा पुनः ।
प्रदोषे पश्चरात्रे वा प्रत्यूषे वाप्युपस्थिते ॥३१
प्रवासस्थैर्वनस्थैर्वा पर्वतस्थै र्जलस्थितैः ।
क्षेत्रस्थैर्वा स्थलस्थैर्वा गृहमध्यस्थितैरपि ॥३२
भुञ्जद्भिर्वा लिखद्भिर्वा खादद्भिर्वा नरोत्तम ! ।
आसीनै श्चास्थितैर्वापि शयनीयागतैरपि ॥३३
जाग्रद्भिर्वा प्रसुप्तैर्वा गन्तव्यः स महापथः ।
मृत्युदूतै र्दुराधर्षैः प्रचण्डै श्चण्डविक्रमैः ॥३४
आक्षिप्यमाणा ह्यवशा यान्ति शीघ्रं यमालयम् ।
कचिद्भीतैः कचित्स्तब्धैः प्रस्खलद्भिः कचित् कचित् ॥३५
दहद्भिर्वेदनार्त्तैस्तु गन्तव्यं यमसादनम् ।
निर्भर्त्स्यमानै रुद्विग्नै विक्रोशै भयविह्वलैः ॥३६

कण्टकाकीर्णमार्गेण नग्नपल्यङ्कपाशुना ।
दण्डमानैस्तु गन्धर्व वानरर्दानवर्जितः ॥३७
काष्ठोपलशिलाघातैर्दण्डोल्कुकशाङ्कुशैः ।
हन्यमानैर्यमपुरं गन्तव्यं धर्मवर्जितैः ॥३८
मेदःशोणितपूयाद्रवस्त्रैर्गात्रैश्च भीषण. ।
विद्धक्षेत्रं प्रपाकीर्णं गन्तव्यं जीवघातकः ॥३९
क्रुश्यद्भिश्च रुदद्भिश्च क्रोशद्भिश्चापि विस्वरम् ।
वेदनार्त्तैः पतद्भिश्च गन्तव्यं जीवघातकैः ॥४०
श्वभिर्व्याघ्रैर्वृकैः कङ्कैर्भक्ष्यमाणाः समन्ततः ।
तुद्यमानाश्च गच्छन्ति राक्षसैर्मांसखादिभिः ॥४१
महिषैश्च मृगैश्चापि शूकरैः क्रूरकर्मभिः ।
वीक्ष्यमाणाः खरध्वानं गन्तव्यं मांसखादिभिः ॥४२
सूचीमुखतीक्ष्णतुण्डिभिर्मक्षिकाभिः समन्ततः ।
तुद्यमानैस्तु गन्तव्यं पापिष्ठं मधुघातकैः । ४३
विवस्त्रं स्वामिनमिमं स्त्रियं वा घ्नन्ति ये नराः ।
शास्त्राणि निन्द्यमानैस्तु गन्तव्यं तैर्यमक्षयम ॥४४
घातयन्ति च ये पापा दुःखमापादयन्ति च ।
राक्षसैश्च श्वभिश्चैव भक्ष्यमाणा व्रजन्ति ते ॥४५
ये हरन्तीह वस्त्राणि शय्याप्रावरणानि च ।
ते यान्ति विद्रुता नग्नाः पिशाचा इव तत्पथम् ॥४६
गोश्वयान् ये हिरण्यञ्च खलु क्षत्रगृहं तथा ।
ये हरन्ति दुरात्मानः परस्परं पापकारिणः ॥४७

पाषण्डैः रुल्मकैर्दण्डैः काष्ठघातैर्निरीश्वरैः ।
हन्यमानैः क्षताकीर्णैर्गन्तव्यं यमसादनम् ॥४८

ये ब्रह्मस्वं हरन्तीह नरा नाकनिपातिनम् ।
आक्रोशयन्ति वा नित्यमाहरन्ति च ये द्विजान् ॥४९

शुष्ककर्णा निबध्यन्ते छिन्नजिह्वाक्षिनासिकाः ।
पूयशोणितदुर्गन्धैर्भक्ष्यमाणाश्च जम्बुकैः ॥५०

चण्डालैर्निर्घृणैश्चण्डैर्भक्ष्यमाणाः समन्ततः ।
क्रोशन्तः करुणं घोरं गच्छन्ति यमसादनम् ॥५१

तत्रैव पतिताः पापाः विष्ठापूयेष्वनेकशः ।
मज्जन्ते वर्षकोटीस्तु क्लिश्यन्ते वेदनान्विताः ॥५२

ततश्च मुक्ताः कालेन लोके चास्मिन्नराधमाः ।
विष्ठाक्रिमित्वं गच्छन्ति पतन्ति च ततोऽर्णवे ॥५३

विद्यमानधनैर्यैस्तु लोभदम्भाद्धतान्वितैः ।
श्रोत्रियेभ्यो न दत्तानि धनानि बहुधा नृप ! ॥५४

श्रीपा पाशनिबद्धास्ते हन्यमानाश्च राक्षसैः ।
क्षुत्पिपासाश्रमार्तास्तु यान्ति प्रेतपुरन्नराः ॥५५

अदत्तदाना गच्छन्ति शुष्ककण्ठास्यतालुकाः ।
अन्नं पानीयसहितं प्रार्थयन्त पुनः पुन. ॥५६

श्वासैर्बुभुक्षातृष्णार्त्ता गन्तुं नैवाद्यशक्नुमम ।
ममान्ते दीयता स्वामिन् ! पानीयं दीयतामिति ॥५७

इति ब्रुवन्तस्तेदूता. प्राप्नुवन्ति यमालयम् ॥५८

वैशम्पायन उवाच

तच्छ्रुत्वा वचनं विष्णोः पपात भुवि पाण्डवः।
निःसंज्ञोऽभूद्भयत्रस्तोनिश्चेष्टो भयविह्वलः॥५९
ततो लब्ध्वा शनैः संज्ञां समाश्वस्तोऽच्युतेन सः।
नेत्रे प्रक्षाल्य तोयेन भूयः केशव मब्रवीत्॥६०

युधिष्ठिर उवाच।

भीतोऽस्म्यहं महादेव ! श्रुत्वा वाक्यस्य विस्तरम्।
केन दानेन तं मार्गं तरन्ति पुरुषाः सुखम॥६१

श्रीभगवानुवाच।

इह ये धार्मिका लोके जीवघातकवर्जिताः।
गुरुशुश्रूषया युक्ता देवब्राह्मणपूजकाः॥६२
अस्मान्मानुष्यलोकान्ते समहायाः सबान्धवाः।
यमध्वानन्नु ते यान्ति यथावत्तु निबोध मे॥६३
ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पाण्डव !।
ये प्रयच्छन्ति विद्वद्भ्य स्ते सुख्या यान्ति तत्पदम॥६४
अन्नञ्च ये प्रयच्छन्ति ब्राह्मणेभ्यः सुसंस्कृतम।
श्रोत्रियेभ्यो विशेषेण भक्त्या परमया युताः॥६५
ते विमानै र्महात्मानो यान्ति चित्रै र्यमालयम्।
सेव्यमाना वरस्त्रीभि र्देवसङ्घै र्महापथे॥६६
ये तु नित्यं प्रभाषन्ते प्रिय मकिल्मिषं वचः।
ते च यान्ति महालाभै र्विमानै स्तैर्यमालयम॥६७

कपिलादीनि दानानि श्रद्धयक्ताश्च ये नराः।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रोत्रियेभ्यो विशेषतः ॥६७
ते यान्त्यादित्यवर्णाभ विमानै र्हेमभूषणैः।
वैवस्वतपुरं रम्य मप्सरोभिनिषेविताः ॥६८
उपानहौ च छत्रञ्च शयनान्यासनानि च।
विप्रेभ्यो ये प्रयच्छन्ति वस्त्रान्याभरणानि च ॥६९
ते यान्त्यश्वै र्गजैश्चैव कुञ्जरैश्चाप्यलङ्कृतैः ॥७०
धनदस्य पुरं रम्यं दण्डच्छत्रविभूषितः।
ये च वृक्षांश्च दाम्यन्ति भोज्यं रम्यं तथैव च।
स्निग्धतां चापि विप्रेभ्यश्छायया परया युताः ॥७१
ते यान्ति काञ्चनैर्यानैर्युता वैवश्वतक्षयम।
वरस्त्रीभिर्युवतिभिः सेव्यमानाः समन्ततः ॥७२
ये च क्षीरं प्रयच्छन्ति घृतं दधि गुडं मधु।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रद्दधानाः सुसंस्कृता ॥७३
चक्रवाकप्रयुक्तैस्तु यानैरूपममयैः शुभैः।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम्।
ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ॥७४
हंसयुक्तैर्विमानैस्तु यान्ति ब्रह्मपुरं नराः।
ये प्रयच्छन्ति विप्रेभ्यो विविधान्नं घृताप्लुतम ॥७५
ते यान्त्यमलवर्णाभै र्विमानैर्वायुवेगिभिः।
पुरं तत्प्रेतनाथस्य नानाजलसमाकुलम ॥७६

पानीयं ये प्रयच्छन्ति सर्वभूतप्रजीवनम्।
ते सुतृप्ताः सुखा यान्ति विमानैर्हंसचोदितैः ॥७७
ये तिलांस्तिलधेनुं वा घृतं सर्व मथापि वा।
श्रोत्रियेभ्यः प्रयच्छन्ति सौम्यभावमनन्विताः ॥७८
सोममण्डलसङ्काशैर्यानैस्तेयान्ति निर्मलैः।
गीयमानास्तु गन्धर्वै र्वैवस्वतपुरन्नरः ॥७९
येषां वाप्यश्चतुः पञ्च तटाकानि सरांसि च।
दीर्घिकां पुष्करिण्यश्च सजलाश्च जलाशयाः ॥८०
यानैस्ते यान्तिस्वर्णाभैर्दिव्यघण्टानिनादितैः।
चामरैस्तालवृन्तैश्च वीज्यमाना महाप्रभाः ॥८१
नित्यतृप्ता महात्मानो गच्छन्ति यमसादनम्।
येषां देवगृहाणीह छत्राण्याभरणानि च ॥८२
मनोहराणि कान्तानि दर्शनीयानि भूमिप !।
ते व्रजन्त्यमलाभ्राभै र्विमानैर्वायुवेगिभिः ॥८३
पुरं तत्प्रेतनाथस्य नानाजनसमाकुलम्।
वैवस्वतञ्च पश्यन्ति सुखचित्तं सुखस्थितम् ॥८४
यमेन पूजिता यान्ति यमसालोक्यतां गतिम्।
मृतानुद्दिश्य लोकेषु प्रपातशालमुच्छ्रितम् ॥८५
शीतलं सलिलं रम्यंनिष्ठ तेभ्यो दिशन्ति ये।
ते तु तृप्तिं पराम्प्राप्ता सुखं यान्ति महापथम् ॥८६
काष्ठपादुकतर्दायां तमध्वानं सुखन्तथा।
सुवर्णमणिपीठेषु पादौ कृत्वा रथोत्तमम्।
आरामान् वृक्षषण्डाश्च रोपयन्ति च ये नरा ॥८७

सम्वर्धयन्तिचाऽव्यग्राः फलपुष्पोपशोभितान् ।
वृक्षच्छायासु रम्यासु तमध्वानं स्वलङ्कृतम् ॥८८
यानैस्तु वाहनैर्दिव्यैः पूज्यमाना मुहुर्मुहुः ।
सुवर्णं रजतं वाऽपि विद्रुमं मौक्तिकं तथा ॥८९
ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ।
ते व्रजन्ति वरस्त्रीभि सेव्यमाना यथासुखम् ॥९०
भूमिदा यान्ति तं लोकं सर्वकामैः सुतर्पिताः ।
उदितादित्यसङ्काशैर्विमानैं वृक्षयोजितैः ।
कन्याश्च ये प्रयच्छन्ति विप्राय श्रोत्रियाय च ॥९१
दिव्यकन्यावृता यान्ति विमानैस्ते यमालयम् ।
सुगन्धान् गन्धसंयोगान् पुष्पाणि सुरभीणि च ॥९२
प्रयच्छन्ति द्विजाग्रेभ्यो ये भक्त्या परया युताः ।
दीपदा यान्ति यानैश्च दीपयन्तो दिशो दश ॥९३
आदित्यसदृशाकारैं दीप्यमाना यथाग्नयः ।
ग्रहावसथदाना ये गृहैः काञ्चनवेदिभिः ॥९४
व्रजन्ति बालसूर्याभे धर्मराजपुरन्नराः ।
जलभाजनदातारः कुण्डिकाकरकाप्रदाः ॥९५
पूज्यमाना वरस्त्रीभि र्यान्ति तस्मान्महागजैः ।
पादाभ्यङ्गं शिरोभ्यङ्गं यानपादोदकं ततः ॥९६
ये प्रयच्छन्ति विप्रेभ्यस्ते यान्त्यश्वैर्यमालयम् ।
विश्रामयति यो विप्रं श्रान्तमध्वनि कर्शितम् ॥९७

चक्रवाकैः प्रयुक्तेन याति यानेन सोऽपि च।
स्वागतेन च यो विप्रं पजयेदासनानि च ॥९८
स गच्छति तमध्वानं दिव्यं परमनिर्वृतम्।
नमो ब्रह्मण्यदेवाय सर्वदा चाभिवादयेत् ॥९९
प्रयतं प्रयतो नित्यं स सुखं याति तत्फलम्।
नमः सर्वसमेभ्यश्च त्वभियाय दिने दिने ॥१००
नमस्करोति यो भक्त्या स सुखं याति तत्फलम्।
नमोऽस्तु विप्रदत्ताय तुभ्यं देहि दिने दिने ॥१०१
भूमिमाक्रमते प्रातः शयनादुत्थितस्तु यः।
स सर्वकामतृप्तात्मा सर्वभूषणभूषितः ॥१०२
याति यानेन दिव्येन सुखं वैवस्वतालयम्।
अनन्तराशितोये तु दम्भाहङ्कारवर्जितः ॥१०३
तेऽपि सारसयुक्तेन यान्ति यानेन वै सुखम्।
ते चाप्येकेन भक्तेन वर्तन्ते दम्भवर्जिताः ॥१०४
हंसयुक्तैर्विमानैस्ते सुखं यान्ति यमालयम्।
चतुर्थेनैव भुक्तेन वर्तन्ते ये जितेन्द्रियाः ॥१०५
यान्ति ते धर्मनगरं यानैर्बर्हिणयोजितैः।
आनीय दिवसेनेह भुञ्जन्ते ये जितेन्द्रियाः ॥१०६
तेऽपि हस्तिरथैर्यान्ति तत्पथं कनकोज्ज्वलैः।
षष्ठानुकामिको यस्तु वर्षमेकन्तु वर्तते ॥१०७
कामक्रोधविनिर्मुक्तः शुचिर्नित्यं जितेन्द्रियः।
स याति कुञ्जरस्थस्तु जयशङ्खरवैर्युतः ॥१०८

पक्षोपवासिनो यान्ति यानैः शार्दूलयोजितैः ।
धर्मराजपुरं रम्यं दिव्यस्त्रीगणसेवितम् ॥१०९

ये च मासोपवासं वै कुर्वन्ते संयतेन्द्रियाः ।
तेऽपि सूर्योदयप्रख्यै र्यान्ति यानै र्यमालयम् ॥११०

अग्निप्रवेशं पश्चापि कुरुते मद्गतात्मना ।
स यात्यग्निप्रकाशेन विमानेन यमालयम् ॥१११

प्राणांस्त्यजति यो विप्रो मां प्रपन्नोऽघ्यनाशकम् ।
स बालार्कप्रकाशेन व्रजेद्यानेन तत्फलम् ॥११२

प्रविष्टोऽन्तर्जले यस्तु प्राणांस्त्यजति मानवः ।
सोममण्डलकल्पेन याति यानेन तत्पथम् ॥११३

स्वशरीरं हि गृध्राणां मज्जनाय प्रयच्छति ।
स याति रथमुख्येन काञ्चनेन यमालयम् ॥११४

गोकृते स्त्रीकृते चैव तयापि प्रकृतेपि च ।
ते यान्त्यमरकन्याभिः सेव्यमानो रविप्रभः ।
ये यजन्ति द्विजश्रेष्ठाः क्रतुभिर्भूरिदक्षिणैः ॥११५

हंससारसयुक्तेन याति यानेन तत्पथम् ।
परपीडामकृत्वैव भृत्यान् बिभ्रति ये नराः ॥११६

तत्पथं ते सुखं यान्ति विमानैः काञ्चनोज्वलैः ।
ये समास्थाय भूतेषु जीवानामभयप्रदाः ॥११७

क्रोधलोभविनिर्मुक्ता निगृहीतेन्द्रियास्तथा ।
पूर्णचन्द्रप्रतीकाशै र्विमानैस्ते महाप्रभाः ॥११८

यान्ति वैवस्वतपुरं देवगन्धर्वसेविताम् ।
ये मामेकात्मभावेन भक्त्या त्र्यम्बकमेव वा ॥११९
पूजयन्ति नमस्यन्ति स्तुवन्ति च दिने दिने ।
धर्मराजपुरं यान्ति यानैस्तत्र समप्रभैः ॥१२०
पूजितास्तत्र धर्मेण स्वधर्माद्यादिभिर्गुणैः ।
यान्त्येव मम लोकं वा रुद्रलोकमथापि वा ॥१२१

इति श्रीगौतमीये वैष्णवधर्मशास्त्रे पञ्चमोऽध्यायः ।

## षष्ठोऽध्यायः ।

### अथ सर्वदानफलवर्णनम् ।

वैशम्पायन उवाच ।

श्रुत्वा धर्मपुरार्थं वा जीवानां गमनं तथा ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ।

युधिष्ठिर उवाच ।

देव ! देवेश ! दैत्यघ्न ! सदा देवैरभिष्टुत ! ।
भवान् भवकर ! श्रीमान् सहस्रादित्यतेजसः ॥१
सर्वसंहारसर्वज्ञ ! सर्वधर्मप्रवर्तक ! ।
सर्वदानफलं सौम्य ! कथयस्व ममाच्युत ! ॥२
दानं कृत्वा कथं कृष्ण ! कीदृशाय द्विजाय वै ।
कीदृशं वा तपः कृत्वा तत्फलं वाथ भुज्यते ॥३

वैशम्पायनउवाच ।

एवमुक्तो हृषीकेशो धर्मपुत्रेण धीमता ।
उवाच धर्मपुत्राय धर्मान् पुण्यान महोदयान् ॥४

श्रीभगवानुवाच ।

शृणुष्वावहितो राजन ! पूतम्पावनमुत्तमम ।
सर्वदानफलं सौम्य ! तेन श्राव्यमकर्मणाम ॥५
यच्छ्रुत्वा पुरुषः स्त्री वा नष्टपापाः समाहिताः ।
तत्क्षणात्पूततां यान्ति पापकर्मरता अपि ॥६
एकाहमपि कौन्तेय ! भूमावुत्पादितं जलम् ।
सत्यं तारयते पूर्वा तृष्णा यत्र च गौर्भवेत् ॥७
पानीयं परमं लोके जीवानां जीवनं परम् ।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती ॥८
पानीयस्य गुणा दिव्या परलोकसुखावहा ।
तत्र पुण्योदकी नाम नदी परमपावनी ॥९
कामन्ददाति राजेन्द्र ! तोयदानं यमालये ।
शीतलं सलिलं तस्यामक्षय्यममृतोपमम ॥१०
क्षीरतोयं प्रदातॄणां भवेद्दीर्घं सुखावहम् ।
ये चापि तोयदातारो भूयस्तेषां विधीयते ॥११
प्रशान्त्यत्यम्बुपानेन विभक्षा च युधिष्ठिर ! ।
तृषितस्य नचान्येन पिपासापि प्रणश्यति ॥१२
तस्मात्तोयं सदा देयं तृषितेभ्यो विजानता ।
अग्निर्मूर्त्तिः क्षितेर्योनिः स्मृतस्य च सुखम्भुवा ॥१३

तत्तोयं सर्वदानानां मूलमित्युच्यते बुधैः।
यतः सर्वाणि भूतानि जीवन्ति प्रभवन्ति च ॥१४
तस्मात्सर्वेषु दानेषु तोयदानं विशिष्यते।
सर्वदानतपोयज्ञैर्यत्प्राप्यं फलमुत्तमम ॥१५
तत्सर्वं तोयदानेन प्राप्यते नात्र संशयः।
ये प्रयच्छन्ति विप्रेभ्यः स्वन्नदानं सुसंस्कृतम्।
तस्माज्जाताः स्वयं प्राणा भवन्ति पुरुषर्षभ ! ॥१६
अन्नभुक्तश्च भुक्तश्च अन्ने जीवः प्रतिष्ठितः।
इन्द्रियाणि च बुद्धिश्च पुष्यन्तेऽन्नेन नित्यशः ॥१७
अन्नेनेव हि जीवन्ति सर्वभूतानि पाण्डव !।
तेजोबलञ्च रूपञ्च सत्वं वीर्यं धृतिर्मतिः ॥१८
ज्ञानमेव तथायुश्च सर्वमन्ने प्रतिष्ठितम्।
देवदानवतिर्यक्षु सर्वलोकेषु सर्वथा ॥१९
सर्वकालं हि सर्वेषा मन्नं प्राणाः प्रतिष्ठिताः।
अन्नं पूज्यं यतो रूप मन्नं नित्यं नमस्कृतम् ॥२०
सर्वभूतमयञ्चैव सर्वप्राणमयं स्थितम्।
अन्नेनाधिष्ठितप्राणोऽन्नपानो व्यानमेव च ॥२१
उदानश्च समानश्च धारयन्ति शरीरिणः।
शयनोत्थानगमनग्रहणाकर्षणानि च ॥२२
सर्वसत्वकृतं कर्म अन्नादेव प्रवर्तते।
चतुर्विधानि भूतानि जङ्गमानि स्थिराणि च ॥२३

अन्नाद्भवन्ति राजेन्द्र ! श्रुतिरेषा सनातनी ।
विद्यास्थानानि सर्वाणि सर्वयज्ञाश्च पावनाः ॥२४
अन्नाद्यस्मात् प्रवर्तन्ते तस्मादन्नं परं स्मृतम् ।
देवा रुद्रादयः सर्वे पितरो जनयस्तथा ॥२५
जस्मादन्नेन तुष्यन्ति तस्मादन्नं विशिष्यते ।
यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृजत्प्रभुः ॥२६
तस्मादन्नात्परं दानं न भूतो न भविष्यति ।
यस्मादन्नं प्रवर्तन्ते धर्मार्थकाममेव हि ॥२७
तस्मादन्नात्परं दानं नामुत्रेह च पाण्डव ! ।
यक्षरक्षोगणा नागा भूता दैत्याश्च दानवाः ॥२८
तुष्यन्त्यन्नेन यस्मात्तु तस्मादन्नं परम्भवेत् ।
परान्नमुपभुञ्जानो यत्कर्म कुरुते शुभम् ॥२६
तच्छुभैकस्य भागस्तु कर्तुर्भवति भारत ! ।
अन्नदस्य त्रयो भागा भवन्ति भरतर्षभ ! ।
तस्मादन्नं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ।
ब्राह्मणाय दरिद्राय योऽन्नं सम्बत्सरं नृप ! ॥३१
श्रोत्रियाय प्रयच्छन् वै पाकवेदविवर्जितः ।
दम्भाचारवियुक्तस्तु परां भक्तिमुपागतः ॥३२
स्वधर्मेणार्जितायान्नं तस्य पुण्यफलं शृणु ।
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ॥३३
तत्पुण्यफलमाप्नोति नरो वै नात्र संशयः ।
अर्धसम्बत्सरं दद्यादग्रभैक्षमयाचते ॥७४

विविधं परमं भूप ! तस्यपुण्यफलं शृणु।
कपिलाद्यसहस्रे तु दत्ते यत्पुण्यमिष्यते ॥३५
तत्पुण्यमखिलं प्राप्य शक्रलोकं महीयते।
स शक्रभवने रम्ये वर्षकोटिशतं नृप ! ॥३६
यथाकामं महातेजाः क्रीड़त्यप्सरसाङ्गणैः।
अग्रान्नं यो दिनं दद्याद्द्विजाय नियतव्रतम ॥३७
दशवर्षाणि राजेन्द्र ! तस्य पुण्यफलं शृणु।
कपिलाशतसहस्रस्य विधिदत्तस्य यत्फलम ॥३८
तत्पुण्यफलमादाय पुरन्दरपुरं व्रजन।
स शक्रभवने रम्ये कामरूपी यथासुखम ॥३९
दशकोटिसमा राजन् ! क्रीड़ते सुरपूजितः।
शक्रतुल्यावतीर्णश्च अक्लेशेन महणुतिम् ॥४०
चतुर्वेदी द्विजः श्रीमान जायते राजपूजितः।
अध्वश्रान्ताय विप्राय क्षुधितायान्नकाङ्क्षिणे ॥४१
देशकालाभियाताय दीयते पाण्डुनन्दन !।
याचतेऽन्नं न दद्याद्वा हसमाने पराक्रमे ॥४२
स लुब्धो नरकं याति कृमीणां कालसूतकम।
स तत्र नरके घोरे लोभमोहितचेतनः ॥४३
शतवर्षसहस्राणि क्लिश्यते वेदनार्दितः।
तस्माच्च नरकात्त्यक्तः कालेन महता हि सः ॥४४
दरिद्रो मानुषे लोके चण्डालेष्ववजायते।
यस्तु पांसुलपादस्तु दूराध्वश्रमकर्शितः ॥४५

क्षुत्पिपासाश्रमार्त्तश्च श्रमखिन्नमतिर्द्विजः ।
प्रयच्छन् वै तु दातारं गृहस्वान्ते च यस्य वै ॥४६
तं पूजयति वान्नेन सोऽतिथि स्वर्गसंक्रमः ।
तस्मिंस्तुष्टे नरश्रेष्ठ ! तुष्टाः स्युः सर्वदेवताः ॥४७
न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः प्रार्थयिष्यन्ति यथाह्यतिथिपूजनात् ॥४८
कपिलायान्तु दत्तायां विधिवज्ज्येष्ठपुष्करे ।
न तत्फलमवाप्नोति यत्पुनर्विप्रभोजनात् ॥४९
द्विजपादजलक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलम् ॥५०
देवमालापनयनं द्विजोच्छिष्टापमार्जनम् ।
श्रान्तसंवाहनञ्चैव तथा पादावसेचनम् ॥५१
प्रतिश्रयप्रदानञ्च तथा शय्यासनस्य च ।
एकैकं पण्डवश्रेष्ठ ! गोप्रदानाद्विशिष्यते ॥५२
पादोदकं पादघृतं जीवमन्नं प्रतिश्रयम् ।
ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पति तान् यमः ॥५३
विप्रातिथ्ये कृते राजन् ! भक्त्या शुश्रूषितेऽपि च ।
देवाः शुश्रूषिताः सर्वे त्रयस्त्रिंशद्भवन्त्यतः ॥५४
अभ्यागतो ज्ञानपूर्वस्त्वज्ञातोऽतिथिरुच्यते ।
तयोः पूजामधः कुर्यादिति पौराणिकी श्रुतिः ॥५५
पादाभ्यङ्गोऽन्नपानैस्तु योऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र ! भवेदेव न संशयः ॥५६

शीघ्रं पापविनिर्मुक्तो मया चानुगृहीतकः।
विमानेनैव कल्पेन यमलोकं स गच्छति ॥५७

अभ्यागतं श्रान्तमनुव्रजद्भि र्देवाश्च सर्वे पितरोऽग्नयश्च।
अस्मिन् द्विजे तत्र च पूजिताः स्युर्गते निराशा अपि ते प्रयान्ति ॥५८

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते।
पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च ॥५६
वर्जितः पितृभिर्लुब्धः स देवैरग्निभिः सदा।
निरयं रौरवं गत्वा दशवर्षाणि पच्यते ॥६०
ततश्चापि च्युतः कालादिह लोके नराधमः।
श्वा वै द्वादशवर्षाणि जायते क्षुत्पिपासितः ॥६१
चाण्डालोऽप्यतिथिः प्राप्तो देशकालौ च काङ्क्षया।
अभ्युद्गतगृहस्थेन पूजनीयः स सर्वथा ॥६२
अनर्चयित्वा योऽश्नाति लोभमोहितचेतसः।
चण्डालत्व मवाप्नोति दशवर्षाणि पाण्डव! ॥६३
निराशमतिथिं कृत्वा भुक्तवान् स प्रणष्टवान।
न जानात्यात्मनात्मानं विष्ठाकूपे निपातितम् ॥६४
मोघं धूपं प्रोन्नयन्ति मोघं स्यात्तत्तु पच्यते।
मोघमन्नस्य चाश्नन्ति योऽतिथिं न प्रपूजयेत ॥६५
साङ्गोपाङ्गांस्तु यो वेदान् पठतीह दिने दिने।
नचातिथिं पूजयति वृथा स पठति द्विजः ॥६६
नित्यमग्नौ पाकयज्ञैः सोमसंस्थाभिरेव च।
ये यजन्ति न चाश्नन्ति गृहेष्वतिथिमागतम ॥६७

तेषां यशोभिः कामानां दत्तमिष्टञ्च यद्भवेत्।
वृथा भवनि तत्सर्वमाशया यतया हृतम् ॥६८
देशं कालञ्च पात्रञ्च स्वशक्तिञ्च निरीक्ष्य च।
अल्पं वा सुमद्वापि कुर्यादातिथ्यमात्मवान् ॥६९
सुमुखः सुप्रसन्नात्मा धीमानतिथिमागतम्।
स्वागतेनासनेनाद्भिरन्नाद्येन च पूजयेत् ॥७०
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
प्राप्तो यो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥७१
क्षुत्पिपासाश्रमार्त्ताय देशकालगताय च।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता ॥७२
भोजयेदात्मनश्रेष्ठान्विधिवत्पूजितात्मनः।
अन्नं प्राणो मनुष्याणा मन्नदः प्राणदोभवेत् ॥७३
तस्मादन्नं विशेषण दातव्यं भूति मिच्छता।
अन्नदः सर्वकामैस्तु सुपतृप्तस्त्वलङ्कृतः ॥७४
पूर्णचन्द्र प्रकाशेन विमानेन विराजितः।
सेव्यमानो वरस्त्रीभि र्देवलोकं स गच्छति ॥७५
क्रीड़ित्वा तु तत स्तस्मिन्वर्षकोटिं यथामरम्।
ततश्चापि च्युतः कालादिह लोके महायशाः ॥७६
वेदशास्त्रार्थ तत्वज्ञो भोगवान् ब्राह्मणो भवेत्।
सर्वातिथ्यन्तु यः कुर्य्यान्मनुष्य स्तूपजायते ॥७७
महाधनपतिः श्रीमान् वेदवेदाङ्गपारगः।
सर्वशास्त्रार्थविद्विद्वान् भोगवान् ब्राह्मणो भवेत् ॥७८

सर्वातिथ्यन्तु यः कुर्य्याद्वर्षमेकमकल्मषम्।
धर्मार्जितधनोभूत्वा पाकभेदविवर्जितः॥७९
देवानिव स्वयं विप्रानर्चयित्वा पितॄनपि।
विप्रो नाग्राशनाशी य स्तस्य पुण्यफलं शृणु॥८०
वर्षेणैकेन यावन्ति पुण्यानश्नन्ति वै द्विजाः।
तावद्वर्षसहस्राणि मम लोके महीयते॥८१
ततश्चापि च्युतः कालादिह लोके महीयते।
वेदशास्त्रार्थतत्वज्ञो भोगवान् ब्राह्मणोभवेत्॥८२
सर्वातिथ्यन्तु यः कुर्याद्यथाश्रद्धन्नरेश्वर!।
अकालनियमेनापि सत्यवादी जितेन्द्रियः॥८३
सत्यसन्धो जितक्रोधः सदा धर्मेषु निष्ठितः।
अधर्मभीरु र्धर्मिष्ठो मायामात्सर्य्यवर्जितः॥८४
श्रद्दधानः शुचिर्नित्यं पाकभेदविवर्जितः।
स विमानेन दिव्येन दिव्यरूपी महायशाः॥८५
पुरन्दरपुरं याति गीयमानोऽप्सरोगणैः।
मन्वन्तरञ्च तत्रैव क्रीड़ित्वा देवपूजितः॥८६
मानुष्यं लोकमागम्य भोगवान् ब्राह्मणोभवेत्।
दश जन्मानि भूपत्वं प्राप्नुयाद्राजपूजितः॥८७
जातिस्मरश्च भवति यत्र तत्रैव जायते।
अतः परं प्रवक्ष्यामि भूमिदान मनुत्तमम्॥८८
यः प्रयच्छति विप्राय भूमिं रम्यां सुदक्षिणाम्।
श्रोत्रियाय दरिद्राय साग्निहोत्राय पाण्डव!॥८९

स सर्वकामतृप्तात्मा सर्वरत्नविभूपितः।
सर्वपापविनिर्मुक्तो दीप्यमानो रवियथा ॥६०
बालसूर्य्यप्रकाशेन विचित्रध्वजशोभिना।
याति यानेन दिव्येन ममलोकं महातपाः ॥६१
तत्र दिव्याङ्गनाभिस्तु सेव्यमानो यथासुखम।
कामगः कामरूपी च क्रीडत्यप्सरसाङ्गणैः ॥६२
यावद्बिभर्ति लोकान्वै भूमिः कुरुकुलोद्वह!।
भूमिदानस्य पुण्यस्य क्षयो नवोपपद्यते ॥६३
ब्राह्मणाय दरिद्राय भूमिं दत्वा तु यो नरः।
न हिनस्ति नरव्याघ्र! तस्य पुण्यफलं शृणु ॥६४
सप्तद्वीपसमं प्रान्तं यत्र धान्यसमाकुला।
सशैलवनदुर्गान्ता तेन दत्ता भवेन्मही ॥६५
भूमिं हि दीयमानाश्च श्रोत्रियायाग्निहोत्रिणे।
सर्वभूतानि मन्यन्ते मे ददातीति ह श्रुतिः ॥६६
सुवर्णमणिरत्नानि धनधान्यवसूनि च।
सर्वदानानि वै राजन् ददाति वसुधान्ददन् ॥६७
सागरान सरितः शैलान् समानि विपमाणि च।
सर्वगन्धान्रसान ददाति वसुधां ददत् ॥६८
ओपधिः फलसम्पन्नान् नगान पुष्पफलोपगान्।
कमलोत्पलषण्डानि ददाति वसुधां ददन ॥६९
धर्मान् कामान् तथार्थंश्च वेदान् यज्ञांस्तथैव च।
स्वर्गमोक्षगतिञ्चैव ददाति वसुधां ददत् ॥१००

अग्निष्टोमादिभिर्यज्ञैर्ये यजन्ति सदक्षिणः।
न तत्फलं भवेत्तेषां भूमिदानस्य यत्फलम ॥१०१
श्रोत्रियाय महीं दत्त्वा यो हिनस्ति न पाण्डव !।
तज्जनाः कथयिष्यन्ति यावल्लोकाः प्रतिष्ठिताः ॥१०२
तावत्सर्गोपभोगानां भोक्तारं पाण्डुनन्दन !।
शस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति ॥१०३
पितरस्तस्य कुप्यन्ति यावदाभूतसंप्लवम।
मम रुद्रस्य सवितु स्त्रिदशानां तथैव च ॥१०४
प्रीतये विद्धि राजेन्द्र ! भूमि दत्त्वा द्विजाय वै।
स च पुण्येन पूतात्मा दाता भूमे युधिष्ठिर ! ॥१०५
मयि सायुज्यतां याति नात्र कार्या विचारणा।
यत्किञ्चित्कुरुते पापं पुरुषो वृत्तिकर्शितः ॥१०६
स च गोकर्णमात्रेण भूमिदानेन शुध्यति।
वेदानां पारगो यस्तु परं पुण्य मुदाहृतम ॥१०७
भूमिर्गोकर्णमात्रेण तत्फलन्तु विधीयते।
मासोपवासे यत्पुण्यं चीर्णे चान्द्रायणेऽपिवा ॥१०८
भूमेर्गोकर्णमात्रेण तत्फलन्तु विधीयते ॥१०९

युधिष्ठिरउवाच।

देवदेव ! नमस्तेऽस्तु वासुदेव ! सुरेश्वर !।
गोकर्णस्य प्रमाणं मे वक्तुमर्हसि मानद ! ॥११०

श्रीभगवानुवाच ।

शृणु गोकर्णमात्रस्य प्रमाणं पाण्डुनन्दन ! ।
त्रिंशद्दण्डप्रमाणेन प्रमितं सर्वतोदिशम् ॥१११
प्रत्यक्परागपि राजेन्द्र ! तत्तथा दक्षिणोत्तरम् ।
तत् गोकर्णमिति प्राहुः प्रमाणोद्धरणे नृप ! ॥११२
सर्वेषां गोशतं यत्र सुखं तिष्ठति यत्नतः ।
स वत्स ! नरशार्दूल ! व तद्गोकर्ण मुच्यते ॥११३
किङ्करा मृत्युदण्डाश्च कमपाकाश्च दारुणाः ।
घोराश्च वारुगाः पापाः नोपसर्पन्ति भूमिदम् ॥११४
निराधारा रवाद्यास्तु तथा वैतरणी नदी ।
तीव्रास्तु यातनाः कष्टाः नोपसर्पन्ति भूमिदम् ॥११५
चित्रगुप्तः कलिः कालो गृहा वै मृत्युरेव च ।
यमश्च भगवान् साक्षात्पूजयन्ति महीप्रदम् ॥११६
रुद्रः प्रजापतिः शक्रः सुराः ऋषिगणास्तथा ।
अहञ्च प्रीतिमान राजन् ! पूजयामो महीप्रदम् ॥११७
कृशशाकस्य वृत्तस्य कृशगोश्च कृशातिथेः ।
भूमिर्देया नरश्रेष्ठ ! सन्निधिः पारलौकिकम् ॥११८
सीदमानं कुटुम्बाय श्रोत्रियायाग्निहोत्रिणे ।
वृद्धस्थाय दरिद्राय भूमिर्देया नराधिप ! ॥११९
यथा जनित्री क्षीरेण पुत्रं वर्द्धयति स्वकम् ।
दातारमनुगृह्णाति दत्ता ह्येवं वसुन्धरा ॥१२०

यथा बिभर्ति गौर्वत्सं सृजति क्षीरमात्मनः।
तथासर्वगुणोपेतं भूमिदम्पाति सम्पदा ॥१२१
यथा द्विजा निराहन्ति जलसिक्तानि भूतले।
तथा कामत्रिपुरो हन्ति भूमिदस्य दिने दिने ॥१२२
यथोदयस्थसूर्यस्तु तमः सर्वं व्यपोहति।
तथा पापान्नरस्येह भूमिदानं व्यपोहति ॥१२३
दानादशानुगृह्णाति यो हरेदश हन्ति सः।
अतीतानागतानीह कुलानि कुरुनन्दन ! ॥१२४
आश्रित्य भूमिमदत्ता दत्त्वा वा यो हरेत् पुनः।
स चान्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥१२५
स्वदत्तां परदत्तां वा यो हरेत वै वसुन्धराम।
न तस्य नरका घोरा निवर्तन्ते न निष्कृतिः ॥१२६
ब्राह्मणस्य हृते क्षेत्रेहन्याद् द्वादशपूरुषान्।
प्राप्नोति भूमियोनिश्च न च मुच्येत जातु सः ॥१२७
दत्त्वा भूमिं द्विजेन्द्राय यस्तामेवोपजीवति।
पणं शतसहस्रस्य हन्तुः सा लभ्यते फलम् ॥१२८
सोऽवाक्शिरास्तु पापात्मा कुम्भीपाकेषु पच्यते।
दिव्यैर्वर्षसहस्रैस्तु कुम्भीपाकाद्विनिर्गतः ॥१२९
इह लोके भवेच्छ्वापः शतजन्मानि पाण्डव ! ।
दत्त्वा भूमिं तु देवानां यस्तामेवोपजीवति ॥१३०
विनाश्य स्वकुलं याति नरकानेकविंशतिम।
नरकेभ्योविनिर्मुक्तः शुनां योनिं स गच्छति ॥१३१

अयोनेश्च परिभ्रष्टो विष्ठायां जायते क्रिमिः ।
तत्र तत्रव जायेत नोत्तरं विन्दते पुनः ॥१३२
फालाकृष्टा मही देया सबीजा शस्यमालिनी ।
अथवा सोदका देया दरिद्राय द्विजाय वै ॥१३३
एवं दत्त्वा महीं राजन ! प्रहृष्टेनान्तरात्मना ।
सर्वान् कामानवाप्नोति मनसा चिन्तितानपि ।
बहुभिर्वसुधा दत्ता दीयन्ते च नराधिपैः ॥१३४
यस्य यस्य यदा भूमि स्तस्य तस्य तदा फलम् ।
यः प्रयच्छन्ति कन्यां वै सभूषां श्रोत्रियाय च ॥१३५
स ब्रह्मदो हि राजेन्द्र ! तस्य पुण्यफलं शृणु ।
वलीवर्दसहस्राणां दत्तानां धूर्यवाहिनाम् ॥१३६
यत्फलं लभ्यते राजन् ! कन्यादानेन तत्फलम् ।
षष्टिवर्षसहस्राणि मम लोके महीयते ॥१३७
ततश्चापि च्युतः कालादिह लोके स जायते ।
पितरस्तस्य तृप्यन्ति ये प्रयच्छन्ति कन्यकाम् ॥१३८
यावन्ति चैव रोमाणि कन्यायाः कुरुनन्दन ! ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥१३९
ततश्चापि च्युतः कालादिह लोके स जायते ।
षडङ्गविच्चतुर्वेदी सर्वलोकार्चितो द्विजः ॥१४०
यः सुवर्णं दरिद्राय ब्राह्मणाय प्रयच्छति ।
श्रोत्रियाय सुवृत्ताय बहु भूयश्च पाण्डव ! ॥१४१

स मुक्तः सवपापेभ्यो बालसूर्यसमप्रभः।
दिव्यं विमानमारूढः कामगः कामरूपवान् ॥१४२
वर्षकोटिं महातेजा मम लोके महीयते।
ततः कालावतीर्णश्च सोऽस्मिन् लोके महीयते ॥१४३
वेदवेदाङ्ग विद्विप्रः कोटियज्ञपति महान।
यश्चरूप्यं प्रयच्छेत दरिद्राय द्विजातये।
शक्रपृक्तः शक्रशङ्कः स मुक्त. सर्वकिल्विपैः ॥१४४
पूर्णचन्द्रप्रकाशेन विमानेन विराजता।
कामरूपो यथाकामं स्वर्गलोके महीयते ॥१४५
ततोऽवतीर्णः कालेन लोकेऽस्मिन् स महायशाः।
सर्वलोकार्चितः श्रीमान राजा भवति वीर्यवान् ॥१४६
तिलपर्वतकं यस्तु श्रोत्रियाय प्रयच्छति।
विशेपण दरिद्राय तस्यापि शृणु यत्फलम्।
पुण्यं वृषायुतोत्सर्गे यत्प्रोक्तं पाण्डुनन्दन ! ॥१४७
तत्पुण्यं समनुप्राप्तस्तत्क्षणाद्विरजा भवेत्।
यथा त्वचं भुजङ्गो वै त्यक्त्वा शुभ्रतनुर्भवेत् ॥१४८
तथा तिलप्रदानाद्वै पापं त्यक्त्वा विशुध्यति।
तिलवर्णप्रयुक्तश्च जाम्बूनदविभूपितः ॥१४६
विमानवरमारूढः पितृलोकं स गच्छति।
षष्टिवर्षसहस्राणि कामरूपी महायशाः ॥१६०
तिलप्रादानाद्रमते पितृलोके यथासुखम्।
यः प्रयच्छति विप्राय तिलधेनुं नराधिप ! ॥१६१

श्रोत्रियाय दरिद्राय शृणु तस्यापि यत्फलम् ।
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम ॥१६२
तत्पुण्यफलमाप्नोति तिलधेनुप्रदो नरः ।
तिलानान्तु यवैर्यस्तु तिलधेनुं प्रयच्छति ॥१६३
तावत्कोटिसहस्राणि स्वर्गलोके महीपते ।
आगाढकैस्तिलैः कृत्वा तिलधेनुं नराधिप ! ॥१६४
द्वात्रिंशन्निष्कसंयुक्तं विष्णवे यः प्रयच्छति ।
मद्भक्तो मद्गतात्मा च तस्य पुण्यफलं शृणु ।
कन्यादानसहस्रस्य विधिदत्तस्य यत्फलम ॥१६५
तत्पुण्यं समनुप्राप्तो मम लोके महीयते ।
मम लोकावतीर्णश्च सोऽस्मिन् लोके हि जायते ॥१६६
ऋग्यजुः सामवेदानां पारगो ब्राह्मणर्षभः ।
गान्तु यस्तु दरिद्राय ब्राह्मणाय प्रयच्छति ॥१६७
प्रसन्नाङ्क्षीरिणों पुण्यां सवत्सां कांस्यदोहनाम् ।
यत्किञ्चित् दुष्कृतं कर्म तस्य पूर्वकृतं नृप ! ॥१६८
तत्सर्वं तत्क्षणादेव विनश्यति न संशयः ।
यानञ्च दोपसंयुक्तं दीप्यमानमलङ्कृतम् ॥१६९
आरूढः कामगन्दिव्यङ्गोलोकमभिगच्छति ।
यावन्ति चैव रोमाणि तस्या गोस्तु नराधिप ! ॥१७०
तावद्वर्षसहस्राणि गवां लोके महीयते ।
गोलोकादवतीर्णस्तु लोकेऽस्मिन् ब्रह्मणो भवेत् ॥१७१

सत्रयाजी शतायुश्च जायते सद्भिरर्चितः ।
तिला गावः सुवर्णञ्च तथा कन्या वसुन्धरा ॥१७२
तारयन्तीह दत्तानि ब्राह्मणेभ्यो महाभुज ! ।
ब्राह्मणं वृत्तसम्पन्नमाहिताग्निमलोलुपम ॥१७३
दापयेद्विधिवद्राजन् ! मन्निधिः पारलौकिकः ।
आहिताग्नि दरिद्रञ्च श्रोत्रियञ्च जितेन्द्रियम ॥१७४
स्वकर्मनिरतञ्चैव द्विजं यत्नेन पूजयेत ।
अहिताग्निः सदा पात्रं सदा पात्रञ्च वेदवित ॥१७५
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ।
सर्ववेदमयं पात्रं सर्वपात्रं तपोमयम ॥१७६
असङ्कीर्णञ्च यत्पात्रं तत्पात्रं तारयिष्यति ।
दृढस्वाध्यायनियमाः स्वप्रकीर्णेन्द्रियाश्च ये ॥१७७
पञ्चयज्ञरता नित्यं पूजितास्तारयन्ति ते ॥१७८
ये क्षान्तदान्ताश्च तथाभिपूर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे सङ्कुचिता गृहस्था स्तेब्राह्मणास्तारयितुं समर्थाः ॥१७९
नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी वृषलान्नवर्जी ।
भृतञ्च छत्रादिकं योविधिनाददाति स ब्राह्मणस्तारयितुं समथः ॥
ब्राह्मणो यस्तु मद्भक्तो मद्याजी मत्परायणः ।
मयि सन्न्यस्तकर्मा च स विप्रस्तारयिष्यति ॥१८१
द्वादशाक्षरतत्वज्ञश्चातुर्वर्ण्यं विभागवित ।
अच्छिद्रः पञ्चकालज्ञः सविप्र स्तारयिष्यति ॥१८२
इति श्रीगौतमीये वैष्णवधर्मशास्त्रे षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः ।

### अथ वृषदान महत्त्ववर्णनम

वैशम्पायन उवाच ।

वासुदेवेन दानेषु कथितेषु यथाक्रमम ।
अवितृप्तस्तु धर्मेषु राजा केशवमब्रवीत् ॥१
देव ! धर्मामृतमिदं शृण्वतोऽपि परन्तप ! ।
न विद्यते नरश्रेष्ठ ! मम तृप्तिर्हि माधव ! ॥२
अनडुत्सम्प्रदानस्य यत्फलन्तु विधीयते ।
तत्फलं कथयस्वेह तव भक्तस्य मेऽच्युत ! ॥३
यानि दानानि वार्ष्णेय ! त्वया नोक्तानि कानि च ।
तान्याचक्ष्व सुरश्रेष्ठ ! तेषाञ्चापि क्रमात्फलम् ॥४

श्रीभगवानुवाच ।

शृणु धर्मविदां श्रेष्ठ ! दत्तस्यानडुहः फलम् ।
पवित्रत्वात् सुपुण्यत्वात् पावनत्वात्तथैव च ॥५
दशधेनुसमोऽनड्वानेकोऽपि कुरुपुङ्गव ! ।
मेदोमांसविपुष्टाङ्गोनीरोगः पापवर्जितः ॥६
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ।
धुरन्धरस्तारयति दत्तो विप्राय पाण्डव ! ॥७
स तेन पुण्यदानेन पञ्चकोटी युधिष्ठिर ! ।
यथा मम महातेजा मम लोके महीयते ॥८

दरिद्रायैव दातव्यं न समृद्धाय पाण्डव ! ।
वर्षाणां हि तटाकेषु पञ्चदश्यां समाहितः ॥९
योहि दद्यादनड्वाहौ द्वौ युक्तौ च धुरन्धरौ ।
सुवृत्ताय दरिद्राय श्रोत्रियाय विशेषतः ॥१०
तस्य यत्पुण्यमाख्यातं तच्छृणुष्व युधिष्ठिर ! ।
गोसहस्रप्रदानेन यत्प्रोक्तं फलमुत्तमम ॥११
तत्पुण्यफलमासाद्य याति लोकान स मामकान् ।
यावन्ति चैव रोमाणि तयोश्चानडुहो नृप ! ॥१२
तावद्वर्षसहस्राणि मम लोके महीयते ।
दरिद्रायैव दातव्यं न समृद्धाय पाण्डव ! ॥१३
वर्षाणां हि तटाकेपु फलं नैव पयोधिपु ।
तस्मादनडुहं दद्याद्दरिद्राय द्विजाय वै ॥१४
स तेन पुण्यदानेन पूतात्मा कुरुपुङ्गव ! ।
विमानं दिव्यमारूढो दिव्यरूपी यथासुखम् ॥१५
मम लोकेषु रमते यावदाभूतसंप्लवम ।
गृहं दीपप्रभायुक्तं शय्यासनविभूपितम् ॥१६
भाजनोपस्करैर्युक्तं धान्यं पूर्णमलङ्कृतम् ।
दासीगोभूमिसंयुक्तं संयुक्तं सर्वसाधनैः ॥१७
ब्राह्मणाय दरिद्राय श्रोत्रियाय युधिष्ठिर ! ।
दद्यात्सदक्षिणं यस्तु तस्य पुण्यफलं शृणु ॥१८
देवाः पितृगणाश्चैव सिद्धयस्त्वृषयस्तथा ।
प्रयच्छन्ति प्रणष्टा वै यानमादित्यसंनिभम् ॥१९

तेन गच्छेच्छ्रियायुक्तो ब्रह्मलोकमनुत्तमम् ।
स्त्रीसहस्रभृते दिव्ये भवने तत्र काञ्चने ॥२०
मोदते ब्रह्मलोकेषु यावदाभूतसंप्लवम् ।
शय्याप्रस्तरणोपेतां यः प्रयच्छति पाण्डव ! ॥२१
अर्चयित्वा द्विजं भक्त्या वस्त्रमाल्यनुलेपनैः ।
भोजयेच्च विचित्राणि तस्य पुण्यफलं शृणु ॥२२
आहिताग्निसहस्रस्य तर्पितस्य हि यत्फलम् ।
तत्पुण्यफलमाप्नोति यस्तु विप्राय यच्छति ॥२३
छन्दोभिः सह युज्यन्ते विमानेन विराजितः ।
सप्तर्षिलोकान् व्रजति पूज्यते ब्रह्मवादिभिः ॥२४
चतुर्युगानि वै तत्र क्रीडित्वा तत्र देववत् ।
इहैव मानुषे लोके विप्रो भवति वेदवित् ॥२५
विश्रामयति यो विप्रं श्रान्तमध्वपरिश्रमात् ।
विनश्यति तदा पापं तस्य वर्षकृतं नृप ! ॥२६
अथ प्रक्षालयेत्पादौ तस्य तोयेन भक्तिमान् ।
दशवर्षकृतं पापं व्यपोहति न संशयः ॥२७
घृतेन वाथ तैलेन पादौ यस्तस्य पूजयेत् ।
तद्द्वादशाब्द समारूढं पापमाशु व्यपोहति ॥२८
येन दानस्य दत्तस्य यच्च पुण्यमुदाहृतम् ।
तत्पुण्यफलमाप्नोति यस्त्वेवं विप्रमर्चयेत् ॥२९
स्वागतेन च यो विप्रं पूजयेदासनेन च ।
प्रत्युत्थानेन वा राजन् ! स देवानां प्रियो भवेत् ॥३०

स्वागतेनानलोराजन्नासनेन शतक्रतुः।
प्रत्युत्थानेन पितरः प्रीतिं यान्त्यथिप्रियाः ॥३१
अग्निशक्रपितॄणाञ्च तेषां प्रीत्या नराधिप !।
सम्वत्सरकृतं पापन्तत्र सद्यो विनश्यति ॥३२
यः प्रयच्छति विप्राय यानमाल्यविभूषितः।
स याति मणिचित्रेण रथेनेन्द्रनिकेतनम् ॥३३
पुरन्दरपुरे तत्र दिव्यनारीनिषेविते।
षष्टिवर्षसहस्राणि क्रीड़तेऽप्सरसाङ्गणैः ॥३४
वाहनं ये प्रयच्छन्ति ब्राह्मणाय युधिष्ठिर !।
ते यान्ति रत्नचित्रेण वाहनेन सुरालयम् ॥३५
स तत्र कामं क्रीड़ित्वा सेव्यमानोऽप्सरोगणैः।
इह लोके भवेद्विप्रो वेदवेदाङ्गतत्त्ववित् ॥३६
पादपं पल्लवाकीर्णं पुष्पितं सफलन्तथा।
गन्धमाल्यार्चितं कृत्वा वस्त्राभरणभूषितम् ॥३७
यः प्रयच्छति विप्राय श्रोत्रियाय दरिद्रिणे।
भोजयित्वा यथाकामं तस्य पुण्यफलं शृणु ॥३८
जाम्बूनदविचित्रेण विमानेन विराजता।
पुरन्दरपुरं याति जयशब्दरवैर्युतः ॥३९
तत्र शक्रपुरे रम्ये शक्रस्य कल्पपादपम्।
ददाति चेप्सितं सर्वं मनसा यद्यदिच्छति ॥४०
यावन्ति तस्य पत्राणि पुष्पाणि च फलानि च।
तावद्वर्षसहस्राणि शक्रलोके महीयते ॥४१

शक्रलोकावतीर्णश्च मानुष्यं लोकमागतः ।
रथाश्वगजसम्पूर्ण पुरं राष्ट्रञ्च रक्षति ॥४२
स्थापयित्वा तु भक्त्या यो मत्प्रकृतिमान् नरः ।
न स्नानं विधिवत्कृत्वा पूजाकर्माणि कारयेत् ॥४३
स्वयं वा पूजयेद्भक्त्या तस्य पुण्यफलं शृणु ॥४४
अश्वमेधसहस्रस्य यत्फलं समुदाहृतम् ।
तत्फलं समनुप्राप्य मत्सालोक्यं प्रपद्यते ॥४५
न जाने निर्गमं तस्य ममलोकाद्युधिष्ठिर ! ।
देवालये विप्रगृहे गोवाटे चत्वरेऽपि वा ॥४६
प्रज्वालयति यो दीपं तस्य पुण्यफलं शृणु ।
आरुह्य काञ्चनं यानं द्योतयन् सर्वतोदिशम् ॥४७
गच्छेदादित्यलोकं स सेव्यमानः सुरोत्तमैः ।
तत्र प्रकारं क्रीडित्वा वर्षकोटिं महायशाः ॥४८
इहलोके भवेद्विप्रो वेदवेदाङ्गपारगः ।
देवालयेषु वा राजन् ! ब्राह्मणावसथेषु वा ॥४९
चत्वरेषु चतुष्के वा रात्रौ वा यदि वा दिवा ।
नाट्यगान्धर्ववाद्यानि धर्मश्रावणिकाश्च याः ॥५०
यस्तु कारयते भक्त्या मद्गतेनान्तरात्मना ।
तस्य देवा नरश्रेष्ठ ! पितरश्चापि हर्षिताः ॥५१
सुप्रीताः सम्प्रयच्छन्ति विमानं कामगं शुभम् ।
स च तेन विमानेन याति देवपुरं नरः ॥५२

तत्र दिव्याप्सरोभिस्तु देवमानं प्रमोदते।
देवलोकावतीर्णश्च स लोकेऽस्मिन्नराधिप! ॥५३
वेदवेदाङ्गतत्त्वज्ञो भगवान् ब्राह्मणो भवेत्।
चत्वरे वा सभायां वा तोरणे वा गृहाङ्गणे ॥५४
वृत्वाग्निकुण्डं विपुलं स्थण्डिलं वा युधिष्ठिर!।
तत्राग्निश्चतुरोमासान् ज्वालयेद्यस्तु भक्तिमान् ॥५५
समाप्तेषु तु मासेषु पुण्यादिषु तथा द्विजान्।
भोजयेत्पायसं मृष्टं सघृतं मद्गतात्मना ॥५६
दक्षिणाञ्च यथाशक्ति ब्राह्मणेभ्यो निवेदयेत्।
एवं नित्यन्तु यः कुर्य्यात् नित्य मेवार्चयंस्तु माम् ॥५७
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर!।
तेनाहं शङ्करश्चास्मि पितरो ह्यग्नयस्तथा ॥५८
यास्यामः परमां प्रीतिं नात्र कार्य्या विचारणा।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥५९
सोऽस्मत्प्रीतिकरः श्रीमान् मम लोके महायशाः।
वेदवेदाङ्गविद्विप्रो जायतेऽमरपूजितः ॥६०
यः कोरोति नरश्रेष्ठ! भरणं ब्राह्मणस्य तु।
श्रोत्रियस्याभिजातस्य दरिद्रस्य विशेषतः ॥६१
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर!।
गवां कोटिप्रदानेन यत्पुण्यं समुदाहृतम् ॥६२
तत्पुण्यफलमाप्नोति वर्षेणैकेन पाण्डव!।
काञ्चनेन विचित्रेण यानेनाम्बरशोभिना ॥६३

स याति मामकं लोकं दिव्यस्त्रीशतसेवितः ।
गीयमानोऽमरस्त्रीभि वर्षाणां कोटिविंशतिम् ॥६४
क्रीडित्वा मामके लोके तत्र देवैरभिष्टुतः ।
मानुष्य मवतीर्णस्तु वेदविद् ब्राह्मणो भवेत् ॥६५
करकं कुसिकां वापि यो महज्जलभाजनम् ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥६६
ब्रह्मचर्ये तु यत्प्रोते फलं प्रोक्तं यथाविधि ।
तत्पुण्यफलमाप्नोति जलभाजनदो नरः ॥६७
सुतृप्तः सुप्रभः सौम्यः प्रहृष्टेन्द्रियमानसः ।
हंससारसयुक्तेन विमानेन विराजिता ॥६८
स याति वारुणं लोकं दिव्यगन्धवसेवितम् ।
पानीयं यः प्रयच्छेद्वै जीवानां जीवनं परम् ॥६९
नैष्ठिकेषु च मासेषु तस्य पुण्यफलं शृणु ।
कपिलाकोटिदानस्य यत्पुण्यन्तु विधीयते ॥७०
तत्पुण्यफलमाप्नोति पानीयं य. प्रयच्छति ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ॥७१
स गच्छेद्विभुसदनं सेव्यमानोऽप्सरोगणैः ।
त्रिंशत्कोटिसमास्तत्र दिव्यगन्धर्वसेवितः ॥७२
क्रीड़ित्वा मानुषे लोके चतुर्वेदी द्विजोभवेत् ।
शिरोऽभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ॥७३
सुभगो रूपवान् शूरः पण्डितश्च भवेन्नरः ।
वस्त्रदायी तु तेजस्वी रूपवान् प्रियदर्शनः ॥७४

भवेच्च सुभगश्रीणां स्त्रीणां नित्यं मनोहरः।
उपानहश्च च्छत्रञ्च यो ददाति नरोत्तमम् ॥७५
स याति रथमुख्येन काञ्चनच्छत्रशोभिना।
शक्रलोकं महातेजाः सेव्यमानोऽप्सरोगणैः ॥७६
काष्ठपादुकदा यान्ति विमानै र्वृषयोजितैः।
धर्मराजपुरं रम्यं सेव्यमानाः सुरोत्तमैः ॥७७
दन्तकाष्ठप्रदानेन मृष्टधातु र्भवेन्नरः।
सुगन्धवदनः श्रीमान् मेधासौभाग्यसंयुतः।
क्षीरं दधि घृतं वापि गुडं मधुरसं तथा ॥७८
ये प्रयच्छन्ति विप्रेभ्यः परां भक्ति मुपागताः।
ते वृषै रश्वयानैश्च श्वेतैः स्रग्दामभूषितैः।
गीयमानैश्च गन्धर्वैर्यान्ति शक्रपुरं नरः ॥७९
तत्र दिव्याप्सरोऽभिस्तु सेव्यमानो यथासुखम्।
षष्टिवर्षसहस्राणि मोदन्ते देवसन्निभाः ॥८०
ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः।
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ॥८१
वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन !।
वैवस्वतं समुद्दिश्य परां भक्ति मुपागताः ॥८२
अभ्यर्च्य विधिवद्विप्रास्तिलान गुडसमायुतान्।
ये प्रयच्छन्ति विप्रेभ्यः स्तेषां पुण्यफलं शृणु ॥८३
गोप्रदानेन यत्पुण्यं विधिवन्न पाण्डुनन्दन !।
तत्पुण्यं समनुप्राप्तो यम लोके महीयते ॥८४

ततश्चापि च्युतः कालादिह राजा भविष्यति ।
तस्मिन्नेव दिने विप्रान् भोजयित्वा सदक्षिणम् ॥८५
तोयपूर्णानि रम्याणि भाजनानि दिशन्ति ये ।
ते यान्त्यादित्यवर्णाभैः विमानैः वरुणालयम् ॥८६
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामगामिना ।
ततोऽवतीर्णाः कालेन ते चास्मिन मानुषे पुनः ॥८७
भोगवन्तो द्विजश्रेष्ठा भविष्यन्ति न संशयः ।
अनन्तराशी यश्चापि वर्तते मृतवत्सदा ॥८८
सत्यवान् क्रोधरहितः शुचिः स्नानरतः सदा ।
स विमानेन दिव्येन याति रत्नपुरं नरः ॥८९
तत्र दिव्याप्सरोभिस्तु वर्षकोटि महातपः ।
क्रीडित्वा मानुषे लोके जायते वेदविद् द्विजः ॥९०
एक भुक्तेन यश्चापि वर्षमेकन्तु वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यशौचसमन्वितः ॥९१
स विमानेन शुभ्रेण याति शक्रपुरं नरः ॥९२
दशकोटिसमास्तत्र क्रीडित्वाप्सरसाङ्गणैः ।
इह मानुष्यके लोके ब्राह्मणो वेदविद्भवेत् ॥९२
चतुर्थेनेह भक्तेन ब्रह्मचारी जितेन्द्रियः ।
वर्तते वर्षमेकं यस्तस्य पुण्यफलं शृणु ॥९४
चित्तवर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरन्नरः ॥९५

कर्कशाभि र्वरस्त्रीभिः सेव्यमानो यथासुखम् ।
तत्र च द्वादशकोटिसमाः सुखं प्रमोदते ॥९६
ततो लोकावतीर्णश्च लोके चास्मिन् नराधिप ! ।
भवेद्वै ब्राह्मणो विद्वान् क्षमावान् वेदपारगः ॥९७
षष्ठकाले तु योऽश्नाति वर्षमेकन्तु कल्पशः ।
ब्रह्मचर्याकृते युक्तः शुचि. क्रोधविवर्जितः ॥९८
तपोयुक्तस्य तस्यापि शृणुष्व फलमुत्तमम ।
अग्न्यादित्यप्रकाशेन विमानेनाग्निसन्निभः ॥९९
स याति मम लोकं वै दिव्यनारीनिषेवितः ।
तत्र सर्वैर्मरुद्भिश्च सेव्यमानो यथासुखम ॥१००
पश्यत्येव सदा मां तु क्रीडत्यप्सरसाङ्गणैः ।
पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ॥१०१
समाप्ते तु व्रते तस्मिंस्तर्पयेच्छ्रोत्रियं द्विजम् ।
सोऽपि यानेन दिव्येन सेव्यमानो महर्षिभिः ॥१०२
द्योतयन् प्रथमं व्योम मम लोकं प्रवर्तते ।
तत्र वै मोदते कामं कामरूपी यथासुखम् ।
त्रिंशत्कोटिसमा राजन् ! क्रीडित्वा देववत् सुखम् ॥१०३
इह मानुष्यके लोके पूजनीयो द्विजोत्तमः ।
त्रयाणामपि वेदानां साङ्गानां पारगो भवेत् ॥१०४
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधो जितधीः स्नानतत्परः ।
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ॥१०५

दक्षिणाश्च ततो दद्यात् प्रहृष्टेनान्तरात्मना ।
स गच्छति महातेजा ब्रह्मलोक मनुत्तमम् ॥१०६
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ।
तत्रैव ब्रह्मगो लोके देवर्षिगणसेवितः ॥१०७
शतकोटिसमा राजन्! यथाकामं प्रमोदते ।
ततः कालावतीर्णश्च सोऽस्मिन् लोके द्विजो भवेत् ॥१०८
षडङ्गविच्चतुर्वेदो त्रिंशज्जन्मन्यरोगवान् ।
यः स्तुत्वा सर्वकामस्तु शुचिः क्रोधविवर्जितः ॥१०६
महाप्रस्थानमेकाग्रो याति तद्गतमानसः ।
स गच्छेदिन्द्रसदनं विमानेन महातपाः ॥११०
महामणिविचित्रेण सुवर्णेन विराजता ।
शतकोटिसमास्तत्र सुराधिपतिपूजितः ॥१११
नागपृष्ठे निवसति दिव्यस्त्रीशतसेवितः ।
शक्रलोकावतीर्णश्च मानुषेषु प्रजायते ॥११२
राज्ञां राजन्! महातेजाः सर्वलोकार्चितः प्रभुः ।
प्रायोपवेशं यः कुर्यात् मद्गतेनान्तरात्मना ॥११३
नमो ब्रह्मण्यदेवायेत्युक्त्वा मन्त्रं समाहितः ।
पुनः स्वस्थो जितक्रोधस्तस्य पुण्यफलं शृणु ॥११४
कामगः कामरूपी च बालसूर्यसमप्रभः ।
स विमानेन दिव्येन याति लोकांस्तु मामकान् ॥११५
स्वर्गास्वर्गमहातेजा गत्वा दत्त्वा यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लवम् ॥११६

अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना।
सोऽपि यानेन दिव्येन मम लोकं प्रपद्यते ॥११७
तत्र सर्वगुणोपेतः पश्यत्येव च मां सदा।
त्रिंशत्कोटिसमा राजन ! मोदते मम सन्निधौ ॥११८
ततोऽवतीर्णः कालेन वेदविद् ब्राह्मणो भवेत्।
कारीषं साधयेद्यस्तु मां प्रपन्नः शुचिव्रतः ॥११६
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्र मुदीरयेत्।
बालसूर्यप्रकाशेन विमानेन विराजता ॥१२०
मम लोकं समासाद्य पञ्चकोटीः प्रमोदते।
मम लोकावतीर्णश्च लोकेऽस्मिन् क्षत्रियो भवेत् ॥१२१
निवेदयति मन्मूर्त्या मन्मना मद्गतः शुचिः।
रुद्रं दक्षिणमूर्ति वा चतुर्दश्यां विशेषतः ॥१२२
सिद्धैर्ब्रह्मर्षिभिश्चैव देवैः सर्वैश्च पूजितः।
गन्धर्वैर्भूतसङ्घैश्च गीयमानो महातपाः ॥१२३
प्रविशेत् स महातेजा मां वा शङ्करमेव वा।
तस्यापुनर्भवं राजन् ! विद्धि नात्र विचारणा ॥१२४
स्त्रीगृहे गोगृहे वाथ गुरुविप्रगृहेऽथवा।
हन्यते यैस्तु राजेन्द्र ! शक्रलोकं व्रजन्ति ते ॥१२५
तत्र जाम्बूनदमये विमाने कामगामिनि।
मन्वन्तरं प्रमादन्ते दिव्यनारीनिषेविताः ॥१२६
अश्रुतस्याप्रदानेन दत्तस्य हरणेन च।
जन्मप्रभृति यद्दत्तं सर्वं नश्यति भारत ! ॥१२७

नागोप्रदा स्तत्र पयः पिबन्ति
　　न भूमिदा भूमि मथाश्नुवन्ति ।
अन्यान् कामान् ब्राह्मणेभ्यो ददाति
　　तां स्तान् कामान् स्वर्गलोके स भुङ्क्ते ॥१२८
यद्यदिष्टतमं द्रव्यं न्यायेनोपार्जितञ्च यत् ।
ततो गुणवते देयं न देवात् क्षयमिच्छता ॥१२९
अनुपोष्य च रात्रिञ्च तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनङ्गाञ्च दरिद्रो नाम जायते ॥१३०
दानं यत्सफलं नैव श्रोत्रियाय न दीयते ।
न तद्गुणवते देयं न देवात् क्षय मिच्छता ॥१३१
अनुपोष्य च रात्रिञ्च तीर्थान्यनभिगम्य च ।
श्रोत्रिया यत्र नाश्नन्ति न देवा स्तत्र भुञ्जते ॥१३२
श्रोत्रियेभ्यः परं नास्ति दैवतं तारणं महत् ।
निधानञ्चापि राजेन्द्र ! नास्माच्छ्रोत्रियभाजनात् ॥१३३
इति गौतमीये श्रीवैष्णवधर्मशास्त्रे सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

## अथ पञ्चमहायज्ञवर्णनम् ।

### युधिष्ठिर उवाच ।

विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः ।
अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी ॥१

श्रीभगवानुवाच।

शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः।
स तु सर्वस्य भूतस्य परत्वन्नाम विद्यते ॥२
पञ्चत्वं पाण्डवश्रेष्ठ! पञ्चीभूतकरं परम्।
तेषां पञ्चमहायज्ञान् ये कुर्वन्ति द्विजोत्तमाः ॥३
पञ्चत्वं पञ्चभिर्भूतैर्वियोगं सम्प्रपद्यते।
न जायते न म्रियते पुरुषः शाश्वतः सदा ॥४
प्रायेण मरणं नाम पापिनामेव पाण्डव!।
येषान्तु न गतिः पुण्या तेषां मरणमुच्यते ॥५
प्रायेणाकृतकृत्यत्वाद् भूय उद्विजते जनः।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥६

युधिष्ठिर उवाच।

पञ्चयज्ञाः कथं देव! क्रियन्ते तु द्विजातिभिः।
तेषान्नाम च देवेश! वक्तुमर्हस्यशेषतः ॥७

श्रीभगवानुवाच।

शृणु पञ्च महायज्ञान् कीर्त्यमानान् युधिष्ठिर!।
यैरेव ब्रह्मसालोक्यं लभ्यते गृहमेधिना ॥८
ऋषियज्ञं ब्रह्मयज्ञं भूतयज्ञञ्च पार्थिव!।
नृयज्ञं पितृयज्ञं च पञ्चयज्ञान् प्रचक्षते ॥९
तर्पणं ऋषियज्ञः स्यात् स्वाध्यायो ब्रह्मयज्ञकम्।
भूतयज्ञो बलियज्ञो नृयज्ञोऽतिथिपूजनम् ॥१०

पितॄनुद्दिश्य यत्कर्म पितृयज्ञः प्रकीर्तितः ।
हुतञ्चाप्यहुतञ्चैव तथा प्रहुतमेव च ॥११
प्राशितं बलिदानञ्च पाकयज्ञान् प्रचक्षते ।
वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः ॥१२
आहुतन्तु भवेद्दत्तं प्रहुतं ब्राह्मणाशितम् ।
प्राणाग्निहोत्रहोमञ्च प्राशितं विधिवद् द्विजः ॥१३
बलिञ्च कर्म राजेन्द्र ! पाकयज्ञाः प्रकीर्तिताः ।
केचित्पञ्च महायज्ञाः पाकयज्ञान् प्रचक्षते ॥१४
अपरे ऋषियज्ञादि महायज्ञविदो विदुः ।
सर्व एते महायज्ञाः सर्वथा परिकीर्तिताः ॥१५
ब्राह्मणोभूष्णुरेतांस्तु यथाशक्तिमुपाहरेत् ।
अहन्यहनि ये त्वेतानकृत्वा भुञ्जते स्वयम् ॥१६
केवलं मलमश्नन्ति ते नरेन्द्र ! न संशयः ।
तस्मात्स्नात्वा द्विजो विद्वान् कुर्यादेतान् दिने दिने ॥१७
अतोन्यथा तु भुञ्जन्वै प्रायश्चित्तीयते द्विज ॥१८

युधिष्ठिर उवाच ।

देव देव ! नमस्तेऽस्तु त्वद्भक्तस्य जनार्दन ! ।
वक्तुमर्हसि देवेश ! स्नानस्य तु विधिं मम ॥१९

श्रीभगवानुवाच ।

शृणु पाण्डव ! तत्त्वेन पवित्रं पापनाशनम् ।
स्नात्वा येन विधानेन मुच्यते किल्विषाद् द्विजः ॥२०

मृदञ्च गोमयं चैव तिलदर्भांस्तथैव च।
पुष्पाण्यपि यथालाभमादाय तु जलं व्रजेत् ॥२१
नद्यां सत्यां न च स्नायादन्यत्र द्विजसत्तमः।
सति प्रभूते पयसि नाल्पे स्नायात्कदाचन ॥२२
गत्वोदकसमीपे तु शुचौ देशे मनोहरे।
ततो मृद्गोमयादीनि तत्र प्रोक्ष्य विनिक्षिपेत् ॥२३
प्रदक्षिणं समावृत्त्या नमस्कुर्यात्तु तज्जलम्।
न च प्रक्षालयेत्तीथन्ताभिर्विद्वान् कदाचन ॥२४
न च पादेन वा हन्याद्धस्तेनैव च वा जलम्।
सर्वदेवमया ह्यापो मम याः पाण्डुनन्दन ! ॥२५
तस्मात्तास्तु न हन्तव्यास्ताभिर्निग्राहयेन् स्थलम्।
केवलं प्रथमं मज्जेत् नाङ्गानि बिभृजेद् बुधः ॥२६
ततस्तीर्थं समासाद्य कुर्यादाचमनं बुधः।
गोपुच्छाकृतिवत् कृत्वा करंश्च प्रपिबज्जलम् ॥२७
द्विस्तत्परिमृजेद्वक्त्रं पादावभ्युक्ष्य चात्मनः।
शीर्षण्यांस्तु ततः प्राणान् सकृदेव समं स्पृशेत् ॥२८
बाहू द्वौ च ततः स्पृष्ट्वा हृदयं नाभिमेव च।
प्रत्यङ्गमुदकं स्पृष्ट्वा मूर्धानन्तु ततः स्पृशेत् ॥२६
आपः पुनन्त्वित्युक्त्वा च पुनराचमनञ्चरेत्।
सोङ्कारं व्याहृतिं वापि सदसस्पतिमित्यृचम् ॥३०
आचम्य प्रथमं पश्चात् तत्र कृत्वा समालभेत्।
ऋग्वेदं विष्णुरित्यङ्गमुत्तमाधममध्यमम् ॥३१

आलम्भ्य वारुणैः सूक्तैर्नमस्कृत्य जलं ततः ।
स्रवन्त्याश्चेत्प्रतिस्रोतः प्रतिकूलञ्च वारिषु ॥३२
मज्जेदोमित्युदाहृत्य न च प्रक्षोभयेज्जलम् ।
गोमयञ्च त्रिधा कृत्वा यथापूर्वं समालभेत् ॥३३
सव्याहृतिकां सप्रणवां सावित्रीञ्च जपेत् पुनः ।
पुनराचमनं कृत्वा मद्गतेनान्तरात्मना ॥३४
आपोहिष्ठेति तिसृभि र्दर्भपूतेन वारिणा ।
तथातरत् समन्दीति सिञ्चेच्चेतिजलं क्रमात् ॥३५
गोसूक्तेनाश्वशूक्तेन शुद्धवर्णेन चाप्यथ ।
वैष्णवैर्वारुणैः सूक्तैः सावित्रै रुद्रदैवतैः ॥३६
वामदेवेन चात्मानं मन्त्रैर्मन्मयसामभिः ।
सिक्तान्तः सलिले सूक्तं जपेच्चैवाघमर्षणम् ॥३७
सव्याहृतिकां सप्रणवां सावित्रीं वा ततो जपेत् ।
आश्वासमोक्षात् प्रणवं जपेद्वा मामनुस्मरन् ॥३८
ऋक्पादं वा जपेन्मन्त्र मष्टाक्षरमथापिवा ।
सम्लुत्य तीर्थमासाद्य धौते शुक्ले च वाससी ॥३९
शुक्लेचाच्छादयेत् कक्षे न कुर्य्यात् कटिपाशके ।
पासनिर्बन्धकक्षोयत् कुरुते कर्म वदिकम् ॥४०
राक्षसा दानवा दैत्या तद्विलम्पुन्ति हर्षिताः ।
तस्मात्सर्वप्रयत्नेन कक्षं पाशेन धारयेत् ॥४१
ततः प्रक्षाल्य पादौ द्वौ हस्तौ चैव मृदाशनैः ।
आचम्य पुनराचामेत् सावित्र्याञ्जलिना जपेत् ॥४२

जले जलगतः शुद्धः स्थल एव स्थलस्थितः।
उभयत्र स्थितस्तस्मादाचामेदात्मशुद्धये ॥४३
दर्भेषु दर्भपाणिः सन् प्राङ्मुखस्तु समाहितः।
प्राणायामन्ततः कुर्य्याद् मद्गतेनान्तरात्मना ॥४४
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत्।
समाप्ते तु जपे तस्मिन् सावित्र्या चानुमन्त्र्य च ॥४५
मन्देहानां विनाशाय राक्षसां विक्षिपेज्जलम्।
मद्गर्गोऽसीत्यथाचान्तः प्रायश्चित्तजलं क्षिपेत् ॥४६
अथादाय स पुष्पाणि तोयान्यञ्जलिना क्षिपेत्।
प्रक्षिप्य प्रतिसूर्य्यश्च व्योममुद्रां प्रकल्पयेत् ॥४७
ततो द्वादशकृत्वस्तु सूर्य्यस्यैकाक्षरं जपेत्।
ततस्त्वष्टाक्षरादीनि त्रिः कृत्वा परिवर्तयेत् ॥४८
प्रदक्षिणं परामृज्य मुद्रायाः स्वमुखन्तथा।
ऊर्द्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षन् समाहितः ॥४९
तन्मण्डलस्थं मां ध्यायेत् ततो मूर्त्तिश्चतुर्भुजम्।
उदुत्यश्च जपेन्मन्त्रं चित्रन्तच्चस्वरित्यपि ॥५०
सावित्रीश्च यथाशक्ति जप्त्वा सूक्तश्च मामकम्।
मन्मयानि च सामानि पूरुषं वृत्तमेव तु ॥५१
ततश्चालोकयेदर्कं हंसःशुचिषदित्यृचा।
प्रदक्षिणं समावृत्या नमस्कृत्य दिवाकरम् ॥५२
ततस्तु तर्पयेदद्भिर्मां ब्रह्माणश्च शङ्करम्।
प्रजापतिश्च देवांश्च तथा देवमुनीनपि ॥५३

साङ्गानपि तथा वेदानितिहासक्रतूंस्तथा।
पुराणानि च दिव्यानि कुलान्यप्सरसान्तथा ॥५४
ऋतून् संवत्सरञ्चैव कालङ्कालात्मकं तथा।
भूतग्रामांश्च भूतानि सरितः सागरांस्तथा ॥५५
शैलांश्चैव स्थितान् देवानोषधीः सवनस्पतीन्।
तर्पयेदुपवीती तु प्रत्येकं तृप्यतामिति ॥५६
अन्वारभ्य तु सव्येन पाणिना दक्षिणेन तु।
निवीती तर्पयेत्पश्चादृषीन् मन्त्रकृतस्तथा ॥५७
मरीच्यादीन्मुनींश्चैव नारदान्तान् समाहितः।
प्राचिनावीत्यथैतांस्तु तपयेद्दैवतान् पितॄन् ॥५८
ततस्तु हव्यमानाग्नि सोमं वैवस्वतं तथा।
ततश्च पितरश्चापि चाग्निष्वात्ता स्तथैव च ॥५९
सोमपांश्चैव दर्भैस्तु सतिलैरेव वारिभिः।
तृप्यध्वमिति पश्चात्तु स्वपितॄंस्तर्पयेत्ततः ॥६०
पितॄन् पितामहांश्चैव तथैव प्रपितामहान्।
पितामहीं तथा चापि तथैव प्रपितामहीम् ॥६१
मातृष्वसां तथा चापि तथैव च पितृष्वसाम्।
मातर श्चात्मनश्चापि तथा मातामहीमपि ॥६२
मातुर्मातामहीं चापि गुरूनाचार्य्यमेव च।
उपाध्यायांस्तु सम्बन्धीन् शिष्यर्त्विक्ज्ञातिपुत्रकान् ॥६३
प्रीतिमानानृशंस्यार्थं तर्पयेत्तान्नमत्सरः।
तर्पयित्वा तथाचम्य स्नानवस्त्रं प्रपीड़येत् ॥६४

तद्धि भृत्यजनस्यान्नं स्नानपानञ्च तद्विदुः।
अतर्पयित्वा तान् पूर्वं स्नानवस्त्रन्न पीड़येत् ॥६५
पीड़येद्यदि तन्मोहाद्देवाः सर्पिगणास्तथा।
पितरश्च निराशास्तं शप्त्वा यान्ति यथागमम् ॥६६
प्रक्षाल्य तु मृदा पादावाचम्य प्रयतः पुनः।
दर्भेषु दर्भपाणिः सन् स्वाध्यायन्तु समाचरेत् ॥६७
वेदवादौ समारभ्य तथोपर्य्युपरि क्रमात्।
यदधीते वदन् चित्या तत् स्वाधायं प्रचक्षते।
ऋचं वाऽथ यजुर्वापि सामगाथा मथापिवा ॥६८
इतिहासपुराणं वा यथाशक्ति न हापयेत्।
उत्थाय तु नमस्कृत्वा दिशोदिग्देवता अपि ॥६९
ब्रह्माणं श्वसनञ्चाग्निं पृथिवी मोषधीस्तथा।
वाचं वाचस्पतिञ्चापि विष्णुञ्च पितरं तथा ॥७०
नमस्कारात्तमद्भिस्तु प्रणवादि च पूजयेत्।
ततो नमोऽस्तु इत्युक्त्वा नमस्कुर्य्यात्तु तज्जलम्।
घृणी सूर्य्य स्तथादित्य इत्युक्त्वात्रिः स्वमूर्धनि ॥७१
सिक्त्वावलोकयेदन्तं प्रणवेन समाहितः।
ततोमामर्चयेत्पुष्पै र्मत्प्रियैरेव नित्यशः ॥७२

युधिष्ठिर उवाच।

त्वत्प्रियाणि प्रसूनानि त्वदनिष्टानि माधव !।
सर्वाण्याचक्ष्व देवेश ! त्वद्भक्तस्य ममाच्युत ! ॥७३

श्रीभगवानुवाच ।

शृणुष्वावहितोराजन् ! पुष्पाणि विविधानि मे ।
कुमुदं करवीरञ्च गणकञ्चम्पकन्तथा ।
मल्लिका जातिपुष्पञ्च नद्यावर्त्तञ्च मे प्रियम् ॥७४
पलाशपत्रं पुष्पञ्च दूर्वाञ्चर्हकमेव च ।
वनमाला च राजेन्द्र ! मत्प्रियाणि विशेषतः ॥७५
सर्वेषा मपि पुष्पाणां सहस्र गुणमुत्पलम् ।
तस्मात्पद्मं तथा राजन् ! पद्मात्तु शतपत्रकम् ॥७६
तस्मात्सहस्रपत्रन्तु पुण्डरीकं ततः परम् ।
पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ।
वकपुष्पं ततस्तस्याः सौवर्णन्तु ततोऽधिकम् ॥७७
सौवर्णाच्च प्रसूनात्तु मत्प्रियं नास्ति पाण्डव ! ।
पुष्पालाभे तुलस्यास्तु पत्रैर्मामर्चयेद्बुधः ॥७८
पत्रालाभे तु शाखाभिः शाखालाभे शिफालवैः ।
शिफालाभे मृदा तत्र भक्तिमानर्चयेत माम् ॥७९
वर्जनीयानि पुष्पाणि शृणु राजन् ! समाहितः ।
किङ्किणीं मुनिपुष्पञ्च धत्तूरं पाटलान्तथा ।
तथामुक्तवैभितकं पुन्नागनक्तमालकम् ।
यौधिकं क्षीरिकापुष्पं निर्गुण्डी जागलीजपा ।
कर्णिकारन्तथाशोकं शाल्मलीपुष्पमेव च ॥८०
ककुभं कोविदारञ्च वैभीतकमथाऽपि च ।
कुरण्डकप्रसूनञ्च तिल्वकं धातकी तथा ॥८१

अङ्कोलं गिरिकर्णी च नीपादन्यच्च सर्वशः।
एवं वर्णानि चान्यानि सर्वाण्येव विवर्जयेत्।
अर्कपुष्पाणि वर्ज्याणि चार्कपत्रस्थितानि च ॥८२
व्याघात मपि चान्यानि सर्वाण्येव विवर्जयेत्।
अन्यैस्तु शुक्लपुष्पैस्तु गन्धवद्भिर्नराधिप ! ॥८३
अवर्जितै र्यथालाभं मद्भक्तोमां सदाश्रयेत्।

युधिष्ठिर उवाच।

कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते ॥८४
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ॥८५

श्रीभगवानुवाच।

शृणु पाण्डव ! तत्सर्वमर्चनाक्रममुत्तमम्।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं स्वकं हितम् ॥८६
अष्टाक्षरविधानेनाप्यथवा द्वादशाक्षरैः।
वैदिकैरथवा मन्त्रै मम सूक्तेन वा पुनः ॥८७
स्थापितं मान्ततस्तस्मिन्नुद्धरीत विचक्षणः।
पूरुषञ्च ततः सूक्त मच्युतञ्च युधिष्ठिर ! ॥८८
अनिरुद्धञ्च मा प्राहुर्वैखानसविदोजनाः।
अन्ये त्वेवं विजानन्ति मां राजन् ! पाञ्चरात्रिकाः ॥८९
वासुदेवञ्च राजेन्द्र ! संकर्षण मथापि वा।
प्रद्युम्नञ्चाऽनिरुद्धञ्च चतुर्मूर्तिं प्रचक्षते ॥९०
एतान्यन्यानि राजेन्द्र ! संज्ञाभेदेन मूर्तयः।
विध्यनर्थान्तरायैव मामेवञ्चार्चयेद्बुधः ॥९१

युधिष्ठिर उवाच ।

त्वद्भक्ताः कीदृशा देव ! कानि वृत्तानि तन्नृणाम् ।
एतत्कथय देवेश ! त्वद्भक्तस्य ममाच्युत ! ॥९२

श्रीभगवानुवाच

अनन्यदेवता भक्त्या ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्ता मद्भक्तास्ते प्रकीर्तिताः ॥ ९३
स्वर्गाण्यपि यशस्यानि मत्प्रियाणि विशेषतः ।
मद्भक्ताः पाण्डवश्रेष्ठ ! वृत्तानीमानि धारयेत् ॥९४
नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ।
स्वस्थस्तु न दिवा स्वप्यात् मधुमांसानि वर्जयेत् ।
प्रदक्षिणं व्रजेद्विद्वान् गामश्वत्थं हुताशनम् ॥९६
निधावे पतिते वर्षे नाग्रभिाञ्च लोपयेत् ।
प्रत्यक्षलवणं नाद्यात्सौहाशनकव्रञ्जिनौ ॥९७
ग्रासमेषाङ्गवे दद्यात् धान्यान् पञ्चैव वर्जयेत् ।
तथा पर्युषितञ्चान्नं पक्वं परगृहायुतम ॥९८
त्रैदिकञ्चैव यद्द्रव्यं तत्प्रयत्नेन वर्जयेत् ।
विभीतक करञ्जानां छायां दूरात्तु वर्जयेत् ॥९९
विप्रवादपरीवादं न वदेत् पीडितोऽपि सन् ।
सात्विका राजसाश्चापि तामसाश्चापि पाण्डव ! ॥१००
मामर्चयन्ति भद्भक्तास्तेषामीदृग्विधा गतिः ।
तिर्यङ्मानुषदेहेषु तामसा भुञ्जते फलम् ॥१०१

नागयज्ञगृहस्थाने राजसा भुञ्जते फलम् ।
सात्विकाः सत्वसम्पन्ना मत्पदं यान्ति मानवाः ॥१०२
ये सिध्यन्ति च साङ्ख्येन योगसत्वबलेन च ।
नभस्यादित्यचन्द्राभ्यां पश्यन्ति पदविस्तरम ॥१०३
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चधातुके ।
एतस्मिन् देहनगरे ये वसन्ति कृतं शृणु ॥१०४
उदिते तस्य विप्रस्य क्रियायुक्तस्य धीमतः ।
चतुर्वेदविदश्चापि देहे षड्वृषलाः स्थिताः ॥१०५
क्षत्रियः सप्तविज्ञेयो वैश्यस्त्वष्टौ प्रकीर्तिताः ।
नियताः पाण्डवश्रेष्ठ ! शूद्राणामेकविंशतिः ॥१०६
कामः क्रोधश्च लोभश्च मानश्च मद एव च ।
महामोहस्तथेत्येते देहे षड्वृषलाः स्थिताः ॥१०७
गर्वो दम्भोऽप्यहङ्कार ईर्ष्याभिद्रोह एव वा ।
पारुष्यं क्रूरताचेति एते ते क्षत्रियाश्रिताः ॥१०८
तीक्ष्णता निकृतिर्माया शाठ्यं दम्भो ह्यनार्जवम् ।
पैशून्यमनृतञ्चैव वैश्यस्याष्टौ प्रकीर्तिताः ॥१०६
तृष्णां बुभुक्षां चालस्यं निद्रां चाप्यघृणां दमम् ।
अधृतिञ्च विवादञ्च प्रमादम् हीनसत्वता ॥११०
भयं वितथतां जाल्म्यं पापतां मन्युरेव च ।
आशां चाश्रद्दधानत्वादनवस्थाप्य यन्त्रणाम् ॥१११
अशौचं मलिनत्वञ्च शूद्रास्यैते प्रकीर्तिताः ।
यस्मिन्नेते न दृश्यन्ते सर्वे ब्राह्मण उच्यते ॥११२

येषु येषु हि भावेषु यत्कालं वर्त्तते द्विजः ।
तत्कालं नैव विज्ञेयो ब्राह्मणो ज्ञानदुर्बलः ॥११३
प्राणायामन्तु यत्काले येन माञ्चापि चिन्तयेत् ।
तत्कालं वै द्विजोज्ञेयः शेषकाल मर्थरित्तः ॥११४
तस्मात्तु सात्विको भूत्वा शुचिः क्रोधविवर्जितः ।
मामर्च्चयेद्यः सततं मित्प्रयत्वं यइच्छति ॥११५
अलोलजिह्वः समुपस्थितो धृतीर्निधाय चक्षुर्युगमात्र मेव ।
मानञ्च वाचञ्च निगृह्य चञ्चलोभोगान्निवृत्तोभगवान्निहोच्यते ।
संरम्भशाठ्यानि दलेति ब्राह्मणो नियतेन्द्रियाः ।
येषां श्राद्धेषु भोक्ष्यन्ति तेषां तृप्ताः पितामहाः ॥११७
धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधः क्षमावान् ब्राह्मणो भवेत् ॥११८
इति गौतमीये वैष्णवधर्मशास्त्रे अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

## अथ कपिलादानप्रशंसावर्णनम् ।

### वैशम्पायन उवाच ।

दानधर्मफलं श्रुत्वा तपः पुण्यफलानि च ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥१

या चैषा कपिला देया पूर्वं सम्पादिता विभो !।
होमधेनुः सदा पुण्या चतुर्वक्त्रेण माधव ! ॥२
सा कथं ब्राह्मणेभ्यो हि देया कस्मिन् दिनेऽपिवा।
कीदृशाय च विप्राय दातव्या पुण्यलक्षणा ॥३
कति वा कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा।
कैर्वा देयाश्च ता देव ! ज्ञातुमिच्छामि तत्त्वतः ॥४
एवमुक्तो हृषीकेशो धमपुत्रेण संसदि।
अब्रवीत्कपिलासङ्ख्या तासां माहात्म्यमेव च ॥५
शृणु पाण्डव ! तत्त्वेन पवित्रं पापनाशनम।
यच्छ्रुत्वा पापकर्मापि नरः पापै र्विमुच्यते ॥६
अग्निमध्योद्भवां दिव्या मग्निज्वालासमप्रभाम्।
अग्निज्वालोज्ज्वलच्छीर्षां प्रदीप्ताङ्गारलोचनाम् ॥७
अग्निपुच्छा मग्निखुरा मग्निरोमप्रभाविताम्।
तामाग्नेयी मग्निजिह्वा मग्निग्रीवां ज्वलत्प्रभाम् ॥८
भुञ्जते कपिलां ये तु शूद्रा लोभेन मोहिताः।
पतितांस्तान् विजानीया च्चण्डालसदृशा हि ते ॥९
न तेषां ब्राह्मणः कश्चिद्गृहे कूर्यात प्रतिग्रहम्।
दूराच्च परिहर्त्तव्या महापातकिनो हि ते ॥१०
सर्वकालं हि ते सर्वे वर्जिताः पितृदैवतैः।
ते सदा ह्यप्रतिग्राह्या असम्भाव्याश्च पापिनः ॥११
पिवन्ति कपिलां यावत्तावत्तेषां पितामहाः।
अमेध्य मुपभुञ्जन्ति भूम्यां वै श्वशृगालवत ॥१२

कपिलाया घृतं क्षीरं दधि तक्र मथा पिवा।
ये शूद्रा उपभुञ्जन्ते तेषां गति मिमां शृणु ॥१३
कपिलोपजीवी शूद्रस्तु मृतो गच्छति रौरवम्।
क्लिश्यते रौरवे घोरे वर्षकोटिशतं नृप ! ॥१४
ततश्च मुक्तः पापेन शुनां योनिशतं व्रजेत्।
श्वयोन्याश्च परिभ्रष्टो विष्ठायां जायते क्रिमिः ॥१५
विष्ठावर्गेषु पापिष्ठो दुर्गन्धेषु सहस्रशः।
तत्र तत्रैव जायेत नोत्तरं तत्र विन्दति ॥१६
ब्राह्मणश्चापि यस्तेषां गृहे कुर्यात्प्रतिग्रहम्।
ततः प्रभृति तस्यापि पितरः स्युरमेद्ध्यपाः ॥१७
न तेन सार्द्धं सम्भाषेन्नचाप्येकासनं व्रजेत्।
स नित्यं वर्जनीयो हि दूराद्दुर्ब्राह्मणोहि सः ॥१८
यस्तेन सह सम्भाषेदेकशय्यां व्रजेत वा।
प्राजापत्यञ्चरेत्कृच्छ्रं सच तेनैव शुध्यति ॥१९
कपिलोपजीविनः शूद्राद्यः करोति प्रतिग्रहम्।
प्रायश्चित्तं भवेत्तस्य विप्रस्येदं न संशयः ॥२०
वर्षं ब्रह्मकृच्छ्रान् कुर्वीत चान्द्रायण मथापिवा।
मुच्यते किल्विषात्तस्मात्तेन स्याद् ब्राह्मणो हि सः ॥२१
कपिला ह्यग्निहोत्रार्थे विप्रार्थे च स्वयम्भुवा।
सर्वतेजः समुद्धृत्य निर्मिता ब्रह्मणा पुरा ॥२२
पवित्रञ्च पवित्राणां मङ्गलानाञ्च मङ्गलम्।
पुण्यानां परमं पुण्यं कपिला पाण्डुनन्दन ! ॥२३

तपसान्तप एवाग्रं व्रताना मुत्तमं व्रतम्।
दानानामपरं दानं विमानं हैममक्षयम् ॥२४
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च।
पवित्राणि च रम्याणि सर्वलोकेषु पाण्डव ! ॥२५
तेभ्य स्तेजः समुद्धृत्य ब्रह्मणा लोक कारिणा।
लोकनिस्तरणार्थाय निर्मिता कपिला स्वयम् ॥२६
सर्वतेजोमयी ह्येषा कपिला पाण्डुनन्दन !।
सदामृतवहा मेध्या शुचिः पावनमुत्तमम् ॥२७
क्षीरेण कपिलायास्तु दध्ना चैव घृतेन च।
होतव्यान्यग्निहोत्राणि सायम्प्रात द्विजातिभिः ॥२८
कपिलाया घृतेनापि दध्ना क्षीरेण वा नृप !।
जुह्वते ये ऽग्निहोत्राणि ब्राह्मणो विधिवत्सदा ॥२९
पूजयन्त्यतिथींश्चैव परां भक्ति मुपागताः।
शूद्रान्नविरता नित्यं दम्भानृतविवर्जिताः ॥३०
ते यान्त्यादित्यकल्पेन विमानेन द्विजोत्तमाः।
सूर्यमण्डलमध्येन ब्रह्मलोक मनुत्तमम् ॥३१
ब्रह्मणो भवने दिव्ये कामगाः कामरूपिणः।
ब्रह्मणा पूज्यमानास्तु मोदन्ते कल्प मक्षयम् ॥३२
एवं हि कपिला राजन् ! पुण्यं पापौघतारिणी।
आदावेवाग्निहोत्रात्तु मन्त्रै ब्रह्मादिनिर्मिता ॥३३
शृङ्गाग्रे कपिलायास्तु सर्वतीर्थाणि पाण्डव !।
ब्रह्मणोहि नियोगेन निवसन्ति दिने दिने ॥३४

प्रातरुत्थाय यो मर्त्यो कपिलाशृङ्गमस्तकात् ।
च्युतात्पयस्तुशीर्षेण धारयेत्प्रयतः शुचिः ॥३५
स तेन पुण्यस्नानेन तत्क्षणाद्गतकिल्विषः ।
वर्षमेकण्डुहिप्राप्यं प्रदहत्यग्निवत्तृणम ॥३६
मूत्रेण कपिलायास्तु यस्तु प्रातरुपस्पृशेत् ।
स्नानेन तेन गुण्येन नष्टपापः समाहितः ॥३७
त्रिंसद्वर्षकृतात्पापात्पूयते नात्र संशयः ।
प्रातरुत्थाय यो भक्त्या प्रयच्छेत्तृणमुष्टिकम ॥३८
तस्य नश्यति तत्पापं त्रिंशद्रात्यकृतं नृप ! ।
प्रातरुत्थाय मद्भक्त्या कुर्याद्यस्तां प्रदक्षिणम ॥३९
प्रदक्षीणीकृता तेन पृथिवी नात्र संशयः ।
प्रदक्षिणेन चैकेन श्रद्धायुक्तस्य पाण्डव ! ॥४०
दशरात्रकृतं पापं तत्क्षणादेव नश्यति ।
दृष्ट्वा तु कपिलां भक्त्या श्रुत्वा हम्बारवं तथा ॥४१
व्यपोहति नरः पाप महोरात्रकृतं नृप ! ।
यत्र वा तत्र वा चाङ्गे कपिलायाः स्पृशेच्छुचिः ॥४२
सं वत्सरकृतं पापं स नाशयति पाण्डव ! ।
गोसहस्रञ्च यो दद्यादेकाञ्च कपिलां नरम् ॥४३
समन्तस्य फलम्प्राह ब्रह्मलोके पितामहः ।
यस्त्वेतां कपिलां हन्यान्नरः किञ्चित्प्रमादतः ॥४४
गोसहस्रहतं तेन भवेन्नात्र विचारणा ।
यस्त्वेकां कपिलां दद्याच्छ्रोत्रियायाग्निहोत्रिणे ॥४५

गवां सहस्रन्तेनेह दत्तं भवति पाण्डव!।
दशेह कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा ॥४६
या दत्ता श्रोत्रियेभ्यो वै स्वर्गं गच्छति तच्छृणु।
प्रथमा सुवर्णा कपिला द्वितीया गौरपिङ्गला ॥४७
त्रितीया रक्तपिङ्गाक्षी चतुर्थी वह्निपिङ्गला।
पञ्चमी ब्रह्मवर्णा स्यात् षष्ठी स्यात् श्वेतपिङ्गला ॥४८
सप्तमी कृष्णपिङ्गाक्षी अष्टमी खुरपिङ्गला।
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ॥४६
दशैताः कपिला प्रोक्ता स्तारयन्ति नरान्सदा।
मङ्गल्यश्च पवित्राश्च सर्वपापप्रणाशनाः ॥५०
एव मेवाप्य नड्वाहो दश प्रोक्ता नरेश्वर!।
ब्राह्मणो वाहयेत्तास्तुं नान्यवर्णः कथञ्चन।
वाहयेत्कपिलायास्तु क्षेत्रेवाध्वनि पाण्डव! ॥५१
बाहयेद्धुङ्कुतेनैव शाखया वा सपत्रया।
सुतृप्तेषु तु भुञ्जीयात् पिबेत्पीतेषु चोदकम् ॥५२
गुर्वीषड्भाविताश्चैते पितरस्ते प्रकीर्तिताः।
अन्नः पूर्वे त्रिभागे तु धूर्याणां वाहनं स्मृतम्।
विश्रामो मध्यमे भागे भाग्यश्चान्ते यथासुखम् ॥५३
यत्र वा त्वरया कृत्य संशयो यत्र वाञ्छति।
वाहयेत्तत्र धुर्यास्तु न स पापेन लिप्यते ॥५४
अन्यथा वाहनादेव निरयं याति रौरवम्।
रुधिरं पातयेत्तेषां यस्तु किञ्चिन्नराधमः ॥५५

भ्रूणहत्यासमं पापं तस्या स्यात्पाण्डुनन्दन !।
तेन पापेन पापात्मा नरकं याति सर्वशः ॥५६
नरकेषु स सर्वेषु समाः स्थित्वा शतं ततः।
इह मानुष्यके लोके बलीवर्दो भविष्यति ॥५७
तस्मान् विमुक्तिमन्विच्छन् दद्यात्तु कपिलान्नरः।
कपिलां वाहयेद्यस्तु वृषलो लोभमोहितः ॥५८
तेन देवास्त्रयस्त्रिंशत्पितरश्चापि वाहिताः।
स देवैः पितृभिर्नित्यं वर्जितास्तु सदुर्मतिः ॥५६
नरकान्नरकं घोरं गच्छेदाप्रलयं नृप !।
ब्रह्मा रुद्र स्तथाग्निश्च कपिलानां गतिङ्गताः ॥६०
तस्मात्ते तु नगन्तव्याः पुण्याश्चैव विशेषतः।
निवसन्ति यदा श्रान्तास्तदाहन्युश्च तत्कुलम् ॥६१
यावन्ति तेषां रोमाणि तावद्वर्षशतन्नृप !।
नरके परिपच्यन्ते तत्र तद्वाहका नराः ॥६२
कपिला सर्वयज्ञेषु दक्षिणार्थं विधीयते।
तस्मात्ता दक्षिणा देया यज्ञेष्वेव द्विजातिभिः ॥६३
होमार्थे चाग्निहोत्रस्य यः प्रयच्छेत्स यत्नतः।
श्रोत्रियाय दरिद्राय प्रशान्ताय यतात्मने ॥६४
तेन दानेन पूतात्मा सोऽग्निलोके महीयते।
यावन्ति चैव रोमाणि कपिलाया युधिष्ठिर ! ॥६५
तावद्वर्षसहस्राणि सोऽग्निलोके महीयते।
सुवर्णखुरशृङ्गीं यः कपिलां हि प्रयच्छति ॥६६

विषुवेत्यापि येनैव सोऽश्वमेधफलं लभेत्।
तेनाश्वमेधतुल्येन मम लोकं स गच्छति ॥६७
सुवर्णश्रृङ्गी रूप्यखुरा सवत्सा कांस्यदोहना ।
वस्त्रैरलङ्कृता पुष्टा पुष्पमाल्यैश्च पूजिता ॥६८
पवित्रं हि पवित्राणां सुवर्ण मिति मे मतिः ।
तस्मात् सुवर्णाभरणा दातव्या चाग्निहोत्रिणे ॥६९
एवं दत्त्वा तु राजेन्द्र ! सत्यपूर्वान्न परानपि ।
तारयिष्यति राजेन्द्र ! नात्रकार्या विचारणा ॥७०
अग्निष्टोमसहस्रञ्च वाजपेयश्च तत्समम्।
वाजपेयसहस्रञ्च अश्वमेधञ्च तत्समम् ॥७१
अश्वमेधसहस्रञ्च राजसूयञ्च तत्समम्।
कपिलानां सहस्रेण विद्धि दत्तेन पाण्डव ! ॥७२
राजसूयफलं प्राप्य मम लोके चहीयते।
न तस्य पुनरावृत्ति र्विद्यते कुरुपुङ्गव ! ॥७३
यच्छन्ति ये कपिलां सचैलां सकांस्यदोहां कनकाग्रश्रृङ्गीम्।
तैस्तैर्गुणैः कामदुघाभिभूत्वा नरं प्रदातार मुपैति सा गौः।
सा कर्मभिश्चाप्यनवुध्यमानातीव्रान्धकारे नरके पतन्तम् ॥७४
महार्णवे नौरिव वायुनीता दत्ताहि गौस्तारयते मनुष्यम्।
पुत्रांश्च पौत्रांश्च कुलञ्च सर्वमासन्ननाशं तारयते परत्र ॥७५
यावन्मनुष्यः पृथिवीं विभर्ति तावत्प्रदातार मुपैति तत्र।
यथौषधं मन्त्रकृतं नरस्य प्रयुक्तमात्रं विनिहन्ति रोगम्।
तथैव दत्ता कपिला सुपात्रे पापं निहत्याशु नरस्य सर्वम् ॥७६

यथैव दृष्ट्वा भुजगाः सुपर्णं नश्यन्ति दूराद्विवशा भयार्ताः ।
तथैवदृष्ट्वा ह कपिलाप्रदानं नश्यन्ति पापानि नरस्य शीघ्रम् ॥७७
यथा त्वचं स्वां भुजगो विहाय पुनर्नवं रूपमुपैति पुण्यम् ।
तथैवमुक्तः पुरुषः स्वपापाद्विराजते वै कपिलाप्रदानात् ॥७८
यथान्धकारं भुवनेषु लग्नं दीप्तो हि निर्वापयति प्रदीप्तः ।
तथा नरे पापमपि प्रलीनं निर्वापयेद्धि कपिलाप्रदानम् ॥७९
यावन्ति रोमाणि भवन्ति तस्या वत्सान्वितायाः स्वशरीरजानि ।
तावत्प्रदाता युगवर्षकोटी स ब्रह्मलोके रमते मनुष्यः ॥८०
यथाहितोऽग्नेरतिथिः प्रियस्य पूर्वाब्रदस्य जितेन्द्रियस्य ।
सत्यव्रतस्याध्ययनान्वितस्य दत्ता हि गौस्तारयते परत्र ॥८१

इति गौतमीये वैष्णवधर्मशास्त्रे कपिलादान प्रशंसोनाम
नवमोऽध्यायः ।

---

दशमोऽध्यायः ।

अथ कपिलागोःप्रशंसावर्णनम् ।

वैशम्पायन उवाच ।

उक्तं श्रुत्वावचः पुण्यं कपिलादानमुत्तमम् ।
धमपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥१
देवदेवश ! कपिला सदा विप्राय दीयते ।
कथं सर्वेषु चाङ्गेषु तस्या स्तिष्ठन्ति देवताः ॥२

२।

याश्चैताः कपिलाः प्रोक्ता देवदेव ! त्वया मम।
तासाङ्कृति सुरश्रेष्ठ ! कपिलाः पुण्यलक्षणाः ॥३
कथं वानुगृहीतास्ता सुरैः पितृगणैरपि।
केनात्मयुक्ता वर्णन श्रोतुं कौतूहलं हि मे।

वैशम्पायन उवाच।

युधिष्ठिरेणैवमुक्ते केशवः सत्यवल्लभः ॥४
गुह्यानामपरङ्गुह्यं वक्तुमेवोपचक्रमे।

श्रीभगवानुवाच।

शृणु राजन् ! पवित्रं वै रहस्यन्धर्ममुत्तमम्।
स्पृहणीयमिदं श्राव्यं उत्तमं हेतुवादिनाम्।
यथा वत्सस्य पादौ द्वौ प्रसवे शिरसा सह ॥५
दृश्यते कालदानन्तमाहु दानविदोजनाः।
अन्तरीक्षगतोवत्सो यावद्भूमिं न यास्यति।
गौस्तावत् पृथिवी ज्ञेया तस्माद्देया तु तादृशी ॥६
यावन्ति धेन्वा रोमाणि सवत्साया युधिष्ठिर !।
यावन्त्यः सिकताश्चापि गर्भोदकपरिप्लुताः ॥७
तावद्वर्षसहस्राणि दाता स्वर्गे महीयते।
सुवर्णाभरणं कृत्वा सवत्सां कपिलान्तु यः ॥८
तिलैः प्रच्छादितां दद्यात सर्वरत्नै रलङ्कृताम्।
ससमुद्रनदी तेन सशैलद्वीपपत्तना।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥९

पृथिव्यास्तु स्वतुल्येन तेन दानेन मानवः ।
संसारसागरात्तीर्णो याति लोकं प्रजापतेः ॥१०
ब्रह्महत्यादि वा गोघ्नो भ्रूणहा गुरुतल्पगः ।
महापातकयुक्तोऽपि दानेनानेन शुद्ध्यति ॥११
इदं पठति यः पुण्यं कपिलादानमुत्तमम् ।
प्रातरुत्थाय मद्भक्त स्तस्य पुण्यफलं शृणु ॥१२
मनसा कर्मणा वाचा मतिपूर्वं युधिष्ठिर ! ।
पापं रात्रिकृतं हन्यादस्याध्यायस्य पाठतः ॥१३
इदमावर्त्तमानस्तु श्राद्धं यस्तर्पयेद् द्विजान् ।
तस्याप्यमृत मश्नन्ति पितरोऽत्यन्तहर्षिताः ॥१४
यश्चेदं शृणुयाद् भक्तया मद्गतेनान्तरात्मना ।
तस्य रात्रि कृतं सर्वं पापमाशु व्यपोहति ॥१५
अतः परं विशेषन्तु कपिलानां शृणु क्रमात् ।
याश्चैताः कपिलाः प्रोक्ता दश राजन्मया तव ॥१६
तासाञ्च तस्य प्रवराः पुण्यं पापप्रणाशनम् ।
नमस्कृता वा स्पृष्टा वा घ्नन्ति पापं नरस्य तु ॥१७
यस्यैताः कपिला सन्ति गृहे पापप्रणाशनाः ।
तत्र श्रीर्विजयः कीर्तिः स्थिता नित्यं युधिष्ठिर ! ॥१८
ये तासां प्रीतिमायान्ति ददतस्त्रिदशाः सदा ।
पयसा पितरः सर्वे घृतेन च हुताशनाः ॥१९
ततः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर ! ॥२०

२८

कपिलाया घृतं क्षीरं दधि पायसमेव च।
श्रोत्रियस्य सकृद्दत्त्वा नरः पापैर्विमुच्यते ॥२१
उपवासन्तु यः कृत्वा अहोरात्रं जितेन्द्रियः।
कपिलापञ्चगव्यन्तु पीत्वा चान्द्रायणात्परम् ॥२२
सौम्ये मुहूर्ते तत्प्राश्यं शुद्धात्मा शुद्धमानसः।
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ॥२३
कपिलापञ्चगव्येन समन्त्रेण पृथक् पृथक्।
यो मत्कृतिकृतं वापि शङ्कराकृतिमेव वा ॥२४
स्नापयेद्विषुवे भक्त्या सोऽश्वमेधफलं लभेत्।
स मुक्तपापः पूतात्मा यानेनाम्बरशोभिना ॥२५
ममलोकं व्रजेद्युक्तो रुद्रलोक मथापिवा।
ब्रह्मणा तु पुरा सृष्टा कपिला काञ्चनप्रभा ॥२६
अग्निकुण्डात्परैर्मन्त्रै र्होमधेनु महाप्रभा।
स्पृष्टमात्रान्तु तां दृष्ट्वा देवाः शक्रादयो दिवि ॥२७
सिद्धा ब्रह्मर्षयश्चैव वेदाः साङ्गाः सहाध्वराः।
सागराः सरित श्चैव पर्वताः सबलाहकाः ॥२८
गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः।
सर्व विस्मयमापन्ना अग्निमध्ये महाप्रभाम् ॥२९
मन्त्रै स्तोत्रैश्च विविधै स्तुष्टुवुस्तामनेकशः।
कृताञ्जलि पुटाः सर्वे तान्त्रिशृङ्गीं त्रिलोचनाम् ॥३०
शिरोभिः प्रणता भूमौ वक्षसा मृततारिणीम्।
ऊचुः प्राञ्जलयः सर्वे चतुर्वक्त्रं पितामहम् ॥३१

किमिदं देव ! देवेश ! सर्वलोकपितामह ! ।
आज्ञापय महादेव ! किं कुर्मस्ते प्रियं प्रभो ! ॥३२
एवमुक्तः सुरैः सर्वैः प्रहृष्टेनान्तरात्मना ।
तत्र सानुनयं प्रीत्या ब्रह्मा वचन मब्रवीत् ॥३३
भवन्तो ह्यनुगृह्णन्तु दोग्ध्रीमेतां पयस्विनीम् ।
होमधेनुरियं ज्ञेया ह्यग्नि सन्तर्पयिष्यति ॥३४
पीतक्षीरा ये हि चास्याः जातवीर्य्यपराक्रमाः ।
जयिष्यथ यथाकामं दानवान् सर्व एव तु ॥३५
जातवीर्य्यबलैश्वर्य्याः सत्ववन्तो जितारयः ।
अदेवमातृकाः सर्वाः पालयिष्यथ वै प्रजाः ॥३६
पालिताश्च प्रजाः सर्वा भवद्भिरिह धर्मतः ।
पूजयिष्यति यो नित्यं यज्ञैर्विविधदक्षिणैः ॥३७
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना ।
ततः संहृष्टमनसः कपिलाय वरं ददुः ॥३८
यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता ।
तस्मात् पूता पवित्रा च भव पापव्यपोहिनी ॥३९
ये त्वां दृष्ट्वा नमस्यन्ति स्पृशन्ति च करैर्नराः ।
तेषां वर्षकृतं पापं त्वद्भक्तानां विनश्यतु ॥४०
कामतः कृतमज्ञात मनृतं यत्तु पातकम् ।
त्वां दृष्ट्वा ये नमस्यन्ति गावः सर्वसहेति च ॥४१
तेषां तद्विलयं यातु तमः सूर्य्योदये यथा ।

श्रीभगवानुवाच।

इत्युक्त्वा च वरं दत्त्वा प्रययु स्ते यथागतम् ॥४२
लोकनिस्तारणार्थन्तु सा च लोकं चचार ह।
तस्या एव समुद्भूताः शेषास्तु कपिला अपि ॥४३
विचरन्ति महीमेतां लोकानुग्रहकारणात्।
तस्मात्तु कपिला देया परत्र हितमिच्छता।
यदा च दीयते राजन्! कपिला ह्यग्निहोत्रिणे ॥४४
तदाग्रशृङ्गयोस्तस्या विष्णू रुद्रश्च तिष्ठतः।
चन्द्रवज्रधरौ वापि तिष्ठतः शृङ्गमूलयोः ॥४४
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः।
कर्णयो रश्विनीदेवौ चक्षुषोः शशिभास्करौ ॥४५
करयो र्वरुणो राजन्! हृदये हव्यवाहनः।
रोमान्ते मुनयः सर्वे चर्मण्येव प्रजापतिः ॥४६
निश्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः।
नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च ॥४७
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः।
साधु देवाः स्थिताः कक्षे ग्रीवायां पार्वती स्थिता ॥४८
पृष्ठे च नक्षत्रगणाः कटिदेशे यमः स्थितः।
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम् ॥४९
श्रोणीतटस्थाः पितरो रोमलाङ्गूल मास्थिताः।
पार्श्वयो रुभयोः सर्वे विश्वेदेवाः प्रतिष्ठिताः ॥५०

तिष्ठत्युरसि तस्यास्तु प्रीतः शक्तिधरो गुहः ।
जानुजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः ॥५१
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः ।
चत्वारः सागराः पूर्णा स्तस्याश्च सपयोधराः ॥५२
रतिर्मेधा स्वधा स्वाहा श्रद्धा शान्तिः स्मृतिधृ तिः ।
कीर्तिर्दीप्ति स्तथा कान्तिः पुष्टिस्तुष्टिस्तु सन्नतिः ॥५३
दिशश्च विदिशश्चैव सेवन्ते कपिलां सदा ।
देवाः पितृगणाश्चापि गन्धर्वाप्सरसाङ्गणाः ॥५४
लोका द्वीपार्णवाश्चैव गणाद्याः सरितस्तथा ।
गृहा मातृगणाश्चैव वेदाः साङ्गा महाध्वरैः ॥५५
वेदोक्तै र्विविधैर्मन्त्रैः स्तोत्रैः स्तुवन्ति हर्षिताः ।
विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा ॥५६
पुष्पवृष्टिं प्रमुञ्चन्ति प्रनृत्यन्ति च हर्षिताः ।
ब्रह्मणोत्पादिते ! देवि ! वाग्निकुण्डान्महाप्रभे ! ॥५७
नमस्ते कपिले ! पुण्ये ! सर्वदेव नमस्कृते ! ।
कपिले ! च महासत्वे ! सर्वतीर्थमये ! शुभे ! ॥
दातारं स्वजनोपेतं ब्रह्मलोकं नय स्वयम् ।
अहोरात्र मिदं पुण्यं सर्वदुःखघ्न मुत्तमम् ॥५८
अहो धर्मार्जितशिव मिदमग्र्यं महाधनम् ।
इत्याकाशगतास्ते तु जल्पन्ति च रमन्ति च ॥६०
तस्याः प्रतिगृहीता च भुङ्क्ते यां च द्विजोत्तमः ।
तावद्देवगणाः सर्वे कपिलाञ्च नमन्ति वै ॥६१

स्वर्णशृङ्गी रौप्यखुरा गन्धैः पुष्पैश्च पूजिता।
वस्त्राभ्यामेव ताभ्यान्तु धावंस्तिष्ठत्यलङ्कृताम् ॥६२
तावद्यदिच्छेत कपिला मन्त्रपूता सुसंस्कृता।
भूलोकवासिनः सर्वान् ब्रह्मलोकं नयेत् स्वयम् ॥६३
भूरश्वः कनकं गावो रौप्यं कृष्णतिला यवाः।
दीयमानानि विप्राय प्रहृष्यन्ति दिने दिने।
अथवा श्रोत्रियेभ्यो वै तानि दत्तानि पाण्डव !।
तानि निन्दन्त्यथात्मानमशुभं किन्नु नः कृतम ॥६४
अहोरात्रं पिशाचैश्च अर्च्यमानाः समन्ततः।
यास्यामो विलयं शीघ्र मिति शोचन्ति तानि व ॥६५
अथैतानि द्विजेभ्यो वै श्रोत्रियेभ्यो विशेषतः।
दीयमानानि वर्धन्ते दातारं तारयन्ति च ॥६६

युधिष्ठिर उवाच।

देव ! देवेश ! दैत्यघ्न ! कालः को हव्यकव्ययोः।
के तत्वपूजा मर्हन्ति वर्जनीयाश्च के द्विजाः ॥६७

श्रीभगवानुवाच।

दैवं पूर्वाह्णिकं कर्म पैतृकञ्चापराह्णिकम्।
कालहीनञ्च यद्दानं तद्दानं राक्षसं विदुः ॥६८
खादितं चावलीढञ्च कलिपूर्वञ्च यत्कृतम्।
रजस्वलाभिमृष्टञ्च तद्दानं राक्षसं विदुः ॥६९
अवक्रुष्टञ्च यद्वृत्तया अवृतेनापि भारत !।
परामृष्टं शुना चापि तद्भागं राक्षसं विदुः ॥७०

यावन्तः पतिता विप्रा संसर्गात् पतितास्तथा।
दैवे वा पैतृके वापि राजन ! नार्हन्ति सत्कृतिम् ॥७१
क्लीबः श्वित्री च कुष्ठी च राजयक्ष्मान्वितश्च यः।
अपस्मारी च यश्चाधः पित्र्ये नार्हन्ति सत्कृतिम् ॥७२
चिकित्सका देवलका वृद्धा नियमधारिणः।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ॥७३
एकोद्दिष्टस्य ये चान्नं भुञ्जते विधिवद् द्विजाः।
चान्द्रायण मकृत्वा ते पुनर्नार्हन्ति सत्कृतम् ॥७४
गायका नर्तकाश्चैव प्लावका वादकास्तथा।
कथका योधकाश्चैव श्राद्धं नार्हन्ति सत्कृतिम् ॥७५
अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये !
ते नरा हि विकर्मस्था राजन ! नार्हन्ति सत्कृतिम् ॥७६
अपरिज्ञातपूर्वश्च गणपुत्रश्च यो द्विजः।
पुत्रिकापूर्वपुत्रश्च श्राद्धं नार्हन्ति सत्कृतिम् ॥७७
ऋणकर्ता च यो विप्रो यश्च वाणिजको द्विजः।
प्राणविक्रयवृत्तिश्च श्राद्धं नार्हन्ति सत्कृतिम् ॥७८
चीर्णावृता गुणैर्युक्ता ये च स्वाध्यायतत्पराः।
सावित्रीज्ञाः क्रियावन्त स्ते श्राद्धं सत्कृतिक्षमाः ॥७९
श्राद्धस्य ब्राह्मण कालः प्राप्तं दधि घृतं तथा।
दर्भाः सुमनसा क्षेत्रं तत्कालं श्राद्धदो भवेत् ॥८०
चारित्रनियता राजन ! कृशा ये कृशवृत्तयः।
अर्थिनश्चोपगच्छन्ति तेभ्यो दत्तं महत्फलम् ॥८१

तपस्विनश्च ये युक्ता स्तथा भैक्षचराश्च ये।
अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महत्फलम् ॥८२
एवं धर्मविदां श्रेष्ठ! ज्ञात्वा सर्वात्मना सदा।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे ॥८३
दानं यत्ते प्रियं किञ्चिच्छ्रोत्रियाणाञ्च यत्प्रियम्।
तत्प्रयच्छ स्वधर्मज्ञ! यदिच्छसि तमक्षयम् ॥८४
निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर!।
गुर्वर्थं वा गवार्थं वा नोचेदन्यत्र पाण्डव! ॥८५
वदन्ति येऽनृतं विप्रास्ते वै निरयगामिनः।
परदारापहर्तारः परदाराभिमर्शकाः ॥८६
परदारप्रयोक्तार स्ते वै निरयगामिनः।
अनाथान् प्रमदा बालान् वृद्धान भीतान् तपस्विनः ॥८७
प्रयच्छन्ति नरा ये च ते वै निरयगामिनः।
वृत्तिच्छेदं गृहच्छेदं दाराच्छेदश्च भारत! ॥८८
मित्रच्छेदं तथा कुर्य्यु स्ते वै निरयगामिनः।
वर्णाश्रमाणां ये संस्थाः पापण्डा ये च पापिनः ॥८९
उपासते च तान्ये तु ते सर्व नरकालयाः।
वेदविक्रयिणश्चैव वेदानाञ्चैव दूपकाः ॥९०
वेदानां लेखिनश्चैव ते वै निरयगामिन।
रसविक्रयिणो राजन्! विपविक्रयिणश्च ये ॥९१
क्षीरविक्रयिणश्चापि ते व निरयगामिनः।
चण्डालेभ्यश्च ये क्षीरं प्रयच्छन्ति नराधमाः ॥९२

अर्थार्थमथवा स्नेहात्तं वै निरयगामिनः ।
ब्राह्मणानाङ्गवाञ्चैव वृद्धानाञ्च युधिष्ठिर ! ॥९३
ये नाडयन्ति कार्येषु ते वै निरयगामिनः ।
उपाध्यायञ्च पितरं गुरुञ्च भरतर्षभ ! ।
ये त्यजन्ति सहायांश्च ते वै निरयगामिनः ॥९४
अदातारं समर्था ये द्रव्याद्यालोभकारणात् ।
दीनानाथान्न पश्यन्ति ते वै निरयगामिनः ॥९५
क्षान्तान् दान्तान् कृशान् प्राज्ञान् दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥९६
बालानामथ वृद्धानां श्रान्तानाञ्चापि ये नराः ।
अदत्त्वाश्नन्ति मृष्टान्नन्ते वै निरयगामिनः ॥९७
एते पूर्वर्षिभिः प्रोक्ताः पुराणानाञ्च दूषकाः ।
ये च विप्रान् प्रदुष्यन्ति ते वै निरयगामिनः ।
ये स्वर्गन्तु समायान्ति तान् शृणुष्व युधिष्ठिर ! ॥९८
दानेन तपसा चैव सत्येन च दमेन च ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥९९
शुश्रूषाभिरुपाध्यायाच्छ्रुतिमादाय भारत ! ।
ये प्रतिग्रहनिस्नेहा स्ते नराः स्वर्गगामिनः ॥१००
प्रतिप्रदानदातारः श्रद्धयाश्रद्धयापि वा ।
दातारश्चापि विद्यानान्ते नराः स्वर्गगामिनः ।
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ॥१०१

मङ्गलाचार युक्ताश्च ते नराः स्वर्गगामिनः ।
मधुमांसासवेभ्यस्तु निवृत्ताश्चानुमत्यापि ॥१०२
परदारनिवृत्ताश्च ते नराः स्वर्गगामिनः ।
वैवाहिकन्तु कन्याना दरिद्राणाञ्च ये नराः ॥१०२
कारयन्ति च कुर्वन्ति ते नराः स्वर्गगामिनः ।
तपसा चैव दानेन येत्वशक्ता नरेश्वर ! ।
धर्मोपदेशान् कुर्वन्ति ते नराः स्वर्गगामिनः ॥१०३
दानाना मुपदेशञ्च तपसो नियमञ्च तु ।
व्रतानामपि ये कुर्य्युस्ते नराः स्वर्गगामिनः ॥१०४
ये च मार्गोपदेष्टार स्तथा संक्रमकारिणः ।
मार्गशुद्धिकरा ये च ते नराः स्वर्गगामिनः ॥१०५
रसानामथवीजाना मौपधानान्तथैव च ।
दातारः श्रद्धयोपेता स्ते नराः स्वर्गगामिनः ॥१०६
सायं प्रातर्द्दिवा सन्ध्यां नित्यं ये चाप्युपासते ।
हव्यकव्यकरा नित्यं ते नराः स्वर्गगामिनः ॥१०७
क्षेमाक्षेमञ्च मार्गेपु समानि विपमाणि च ।
अध्वानं ये च वक्ष्यन्ति ते नराः स्वर्गगामिनः ॥१०८
हव्यकव्यविदो ये च ते नराः स्वर्गगामिनः ।
पर्वद्वये चतुर्दश्या मष्टम्यां सन्ध्ययोर्द्वयोः ॥१०९
आर्द्रायां जन्मनक्षत्रे विपुवे श्रावणे हि ये ।
ग्रामधर्माद्धि विरता स्तेनराः स्वर्गगामिनः ॥११०
धर्माधर्मौ च कथितौ भूयः श्रोतुं किमिच्छसि ॥१११

इति श्रीगौतमीये वैष्णवशास्त्रे धर्माधर्मकथनोनाम
दशमोऽध्यायः ।

## एकादशोऽध्यायः।

### ब्रह्मघातकलक्षणवर्णनम्।

युधिष्ठिर उवाच।

इदं मे तत्वतो देव! वक्तुमर्हस्यशेषतः।
हिंसा मकृत्वा यो मर्त्यो ब्रह्महत्या मवाप्नुयात्॥१

श्रीभगवानुवाच।

ब्राह्मणं स्वयमादाय भैक्षार्थं कृशवृत्तिकम्।
क्लेशान्तस्तृतीयः पश्चात् तमाहुर्ब्रह्मघातकम्॥२
उच्यते सहि विप्रस्य यश्च तस्य च भारत!।
वृत्तिं हरति दुर्बुद्धिस्तमाहु र्ब्रह्मघातकम्॥३
यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतम्।
दूषयेत्परमार्थं यस्तं विद्याद् ब्रह्मघातकम्॥४
गोकुलस्य तृषार्त्तस्य वलात्त वसुधाधिप!।
उत्पादयति यो विघ्नन्तं विद्याद् ब्रह्मघातकम्॥५
आश्रमे वा वने वापि ग्रामे वा नगरेऽपि वा।
अग्निं यः प्रक्षिपेत क्रूरस्तं विद्याद् ब्रह्मघातकम्॥६
मातरं पितरं वाऽपि भृत्यं दत्वा भयं सुतम्।
त्यजेच्च करुणां भार्य्यां तं विद्याद् ब्रह्मघातकम्॥७
क्रोधाद्वा यदि वा द्वेषादाकृष्टस्तर्जितोऽपि वा।
ऋतौ स्त्रियं यो नोपेयात्तं विद्याद् ब्रह्माघातकम्॥८
यावत्सारो भवेद्दीनस्तन्नाशे यस्य दुःस्थितिः।
तत्सव संहरेद्यो वै तं विद्याद् ब्रह्मघातकम्॥६

युधिष्ठिर उवाच।

सर्वेषामेव दानानां यत्तु दानं विशिष्यते।
अभोज्यानाञ्च यो विप्र स्तान् ब्रवीहि सुरेश्वर ! ॥१०

श्रीभगवानुवाच।

अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरस्सराः।
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥११
अन्नकुण्डं शरीरं स्वं प्राणाश्चान्ने प्रतिष्ठिताः।
अभोज्यान्नानिमान् सर्वान् निखिलं तन्निबोध मे ॥१२
दीक्षितस्य कदर्य्यस्य बद्धस्य निगडेन तु।
अभिशस्तस्य पण्ढस्य पाकभेदकरस्य च ॥१३
चिकित्सकस्य सर्वस्य तथाचोच्छिष्टभोजिनः।
शूद्रान्नं सूतकान्नञ्च शूद्रोच्छेपणमेव च ॥१४
द्विपदान्नं नगर्यन्नं पतितान्न मनर्चितम्।
तथा च पिशुनस्यान्नं यज्ञविक्रयिण स्तथा ॥१५
शैलूषान्नन्तु पापान्नं कृतघ्नस्यान्नमेव च।
अम्बष्ठस्य निषादस्य रङ्गावतरणस्य च ॥१६
सौवर्णिकस्य वैश्यस्य शस्त्रविक्रयिणस्तथा।
सुक्रुष्टं शौण्डिकान्नञ्च चेल निर्णेजकस्य च ॥१७
अनिर्देशञ्च प्रेतान्नं गणिकान्नं तथैव च।
बन्दिनोद्यतकर्त्तुश्च तथा द्यूतविदामपि ॥१८
परिवित्तस्य यच्चान्नं परिवेत्तु स्तथैव च।

यश्चाग्रेदिधीषुर्विप्रो दिधीषुरेव वा पतिः ॥१६
तयोरप्युभयो रन्नं सवत्रापि विवर्जयेत्।
गोलकस्य च कुण्डस्य राजान्नञ्चापि वर्जयेत् ॥२०
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्।
आयुः सुवर्णकारान्नं यशश्चर्मावकृन्तिनः ॥२१
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति।
पूयश्चिकित्सकस्यान्नं शुक्रन्त वृषलीपतेः ॥२२
विष्ठा वार्द्धुषिकस्यान्नं तस्मात् तत्परिवर्जयेत्।
तेषां त्वगस्थिरोमाणि भुङ्क्ते योऽन्नं तु भक्षयेत् ॥२३
दानानान्तु फलञ्चान्यत् शृणु पाण्डव ! तत्वतः।
वारिद स्तृप्तिमाप्नोति सुखमक्षयमन्नदः।
तिलदस्तु प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥२४
भूमिदो भूमिमाप्नोति दीर्घमायु र्हिरण्यदः।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥२५
वासदश्चन्द्रसालोक्य मश्विसालोक्यमश्वदः।
अनडुहः श्रिया जुष्टोऽन्नदो ब्रध्नस्य विष्टपम् ॥२६
यानशय्याप्रदो भार्य्या मैश्वर्य्य मभयप्रदः।
याति दशशतं सौख्यं ब्रह्मदो ब्रह्मसत्यताम् ॥२७
सर्वेषान्तु प्रदानानां ब्रह्मदानं विशिष्यते।
हिरण्यभूगवाश्वाज वस्त्रशय्यासनादिषु ॥२८
यो वित्तं प्रतिगृह्णीते ददात्यर्च्चितमेव च।
ता वुभौ गच्छतः स्वर्गं नरकन्तु विपर्यये ॥२६

अनृतं न वदेद्दृष्ट्वा तपस्तप्त्वा न विस्मयेत् ।
नातोह्यपवदेद्विप्रोविप्रान्नत्वात प्रकीर्तयेत ॥३०
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुश्च पापवादेन दानन्तु परिकीर्तितम् ॥३१
एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एको हि भुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् ॥३२
मृतं शरीर मुत्सृज्य काष्ठलोष्ट्र समं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥३३
अनागतानि कार्याणि कर्तुङ्गणयते जनः ।
स शिरःकम्पमुद्वीक्ष्य सूयते दिनमन्तकम् ॥३४
तस्माद्धर्मं सहायोऽस्तु धर्मं सञ्चिनुयात्सदा ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥३५
येषान्तटाकानि समाः प्रपाश्च कूपांश्च यूपांश्च प्रतिश्रयांश्च ।
अन्नप्रदानं मधुरा च वाणी यमस्य ते निर्वचना भवन्ति ॥३६

इति गौतमीये वैष्णवधर्मशास्त्रे भोज्याभोज्यान्नविधिरेकादशोऽध्यायः ।

द्वादशोऽध्यायः।

अथ धर्मशौचविधिवर्णनम्।

युधिष्ठिर उवाच।

अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः।
किं लक्षणोऽसौ भवति तन्मे ब्रूहि सुरेश्वर ! ॥१

श्रीभगवानुवाच।

शृणु राजन् ! समासेन धर्मशौचविधिक्रमम।
अहिंसा सत्यमस्तेय मानृशंस्यं दमः शमः ॥२
आर्जवञ्चैव राजेन्द्र ! निश्चितं धर्मलक्षणम।
ब्रह्मचर्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम ॥३
मर्यादाया स्थितिश्चैव मशौचस्य च लक्षणम।
बाल्ये विद्यान्निषेवेत यौवने दारसंग्रहम् ॥४
स्थाविर्ये मोक्षमातिष्ठेत सर्वदा धर्ममाचरेत्।
ब्राह्मणान्नावमन्येत गुरून् परिवदेन्नच ॥५
यतीना मनुकूलः स्यादेष धर्मः सनातनः।
यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ॥६
पतिरेव गुरुः स्त्रीणां सर्वेषां पार्थिवो गुरुः।
यद्‌गृहस्थार्जितं पापं ज्ञानतोऽज्ञानतोऽपि वा ॥७
निर्दहष्यति तत्सर्व मेकरात्रोषितो यतिः।
दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञानिनोऽपि वा ॥८
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः।
एकदण्डी त्रिदण्डी वा शिखी मुण्डी तथैव च ॥९

काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर ! ।
अपूजितो गृहस्थैर्वा तथाचाप्यवमानितः ॥१०
यतिः सर्वातिथिर्वापि नरके पातयिष्यति ।
तस्माच्च यतयः पूज्या मद्भक्ता मत्परायणाः ॥११
मयि सन्न्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ।
प्रहरेन्न द्विजान् प्राज्ञो गा न हन्यात् कदाचन ॥१२
भ्रूणहत्यासमञ्चैतदुभयं यो निषेवते ।
नाग्निमुखे नोपयमे न च पादौ प्रतापयेत् ॥१३
नान्तरागमनं कुर्यान्नचामेध्यं विनिक्षिपेत् ।
उच्छिष्टो न स्पृशेदग्निमशौचस्थश्च जातुचित् ॥१४
श्वचण्डालादिभिः स्पृष्टोनाङ्गमग्नौ प्रतापयेत् ।
सर्वदेवमयो वह्निस्तस्माच्छुद्धतमः स्पृशेत् ॥१५
प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान् ।
यावत्तु धारयेद्वेदाः स्तावदप्रयतो भवेत् ॥१६
पचनाग्निं न गृह्णीयात्परवेश्मनि जातुचित् ।
तेन दत्तेन चान्नेन यत्कर्म कुरुते शुभम् ॥१७
तत्कर्मणः फलस्यार्द्धं मग्निदस्य भवेत् नृप ।।
तस्माच्च लिङ्गितं वह्निं कुर्यादेवाविनाशिनम ॥१८
प्रमादाद्यदि वा ज्ञानात् तस्य नाशो भविष्यति ।
गृह्णीयात्तुमथित्वा वा श्रोत्रियागारतोऽपिवा ॥१६

युधिष्ठिर उवाच ।

कीदृशाः साधवो विप्राः केभ्यो दत्तं महत्फलम् ।
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्दन ।।२०

श्रीभगवानुवाच ।

अक्रोधनाः सत्यपरा धर्मनित्या दमे रताः ।
तादृशाः साधवो लोके तेभ्यो दत्तं महत्फलम् ।।२१
अमानिनः सर्वसहा अदृष्टार्था जितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महत्फलम् ।।२२
अलुब्धाश्चयो वंषां श्रीमन्तः सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महत्फलम् ।।२३
साङ्गांश्च चतुरो वेदान् योऽधीयीत दिने दिने ।
शूद्रान्नं यस्य नो देहे तम्पात्र मृषयो विदुः ।।२४
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन न च समन्वितः ।
तारयेत् सकुलं सर्वमेकोऽपीह युधिष्ठिर ।।२५
गामन्नमश्वं वित्तं वा तद्विधे प्रतिपादयेत् ।
नियच्छेच्च गुणोपेतं ब्राह्मणं साधुसम्मतम् ।।२६
दूरादाहूय सत्कृत्य प्रयत्नेनैव पूजयेत् ।।२७

युधिष्ठिर उवाच ।

धर्माधर्मविधिः कृत्स्नो मम भीष्मेण भाषितः ।
भीष्मवाक्यात्सारभूतं वद धर्मं सुरेश्वर ! ।।२८

श्रीभगवानुवाच।

अन्नेन धार्यते सर्वं जगदेतच्चराचरम्।
अन्नात्प्रभवति प्राणः प्रत्यक्षो नास्ति संशयः ॥२९
अन्नं च पीडयित्वा तु देशकाले च भक्तितः।
दातव्यं विपुवे चान्न मात्मनो भूतिमिच्छता।
विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ॥३०
अर्चयेद्गुरुवत् प्रीतो गृहस्थो गृहमागतम्।
क्रोधमुत्पादितं कृत्वा सुशीलो वीतमत्सरः ॥३१
अर्चयेदतिथिं प्रीतः परत्रेह च भूतये।
अतिथीन्नावमन्येत न शुष्काङ्गिरमीरयन् ॥३२
न पृच्छेत् गोत्रचरणं नाधिकं वा कदाचन।
चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ॥३३
अन्नेन पूजनीयः स परत्र हितमिच्छता।
यः पिधाय गृहद्वारं भुङ्क्तेह्येकः प्रहृष्टवत् ॥३४
स्वर्गद्वार विधानं वै कृतन्तेन युधिष्ठिर !।
विप्रदेवान्नृपीन् विप्रानतिथींश्च निराश्रयान् ॥३५
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत्।
कृत्वापि बहुशः पापं यो दद्यादन्नमर्थिने ॥३६
ब्राह्मणाय विशेषेण सर्वपापैः प्रमुच्यते।
अन्नदः प्राणदो लोके प्राणदः सर्वदो भवेत् ॥३७
तस्मादन्नं प्रयत्नेन दातव्यं भूतिमिच्छता।
अन्नं ह्यमृतमित्याहुरन्नं पूजितकं स्मृतम् ॥३८

अन्नप्रणाशे सीदन्ति शरीरे सर्वधातवः।
बलं बलवतो न स्यादन्नं तस्य च देहिनः ॥३९
तस्मादन्नं प्रदातव्यं श्रद्धयाऽश्रद्धयापि वा।
आदित्योऽपि रसं सर्व मादत्ते स गभस्तिभिः ॥४०
वायुस्तस्मात्समाधाय रसमन्ने निपेचयेत्।
तत्तु मेघगतं भूमौ शक्रो वर्षति पाण्डव ! ॥४१
तस्यां शस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः।
मांसमेदोऽस्थिमज्जाना सम्भवस्त्वन्न एव हि ॥४२
एवमन्नञ्च सूर्यश्च पवनः शक्र एव च।
एक एव स्मृतोराशि र्यतो भूतानि जज्ञिरे ॥४३
वरं ददाति भूतानां तेजश्च भरतर्षभ !।
अन्नदानेन सम्प्रीता देवाश्च पितृभिः सह ॥४४
तस्मात्तेजो यशो वीर्य बलायुर्वृद्धयः सदा।
श्रद्धयान्नं प्रदातव्यमिति पौराणिकी श्रुतिः ॥४५
अन्नदानं तु ये लोके कुर्वन्ति श्रद्धया नराः।
भवनानि च दिव्यानि दिवि तेषां महात्मनाम् ॥४६
नानासंस्थानि रूपाणि नानाभूतयुतानि च।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥४७
तरुणादित्यवर्णानि स्थावराणि महान्ति च।
अनेकशतसंख्यानि सान्तर्जलवनानि च ॥४८
वदूर्यमणिचित्राणि रूप्यरुक्ममयानि च।
तत्र पुष्पफलोपेताः कामदाः सुरपादपाः ॥४९

वाप्यो वीथ्यः सभाः कूपाः दीर्घिकाश्चैव सर्वशः ।
निर्घोषवन्ति यानानि युक्तानि च सहस्रशः ॥५१
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ।
क्षीरस्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ॥५२
प्रासादाः पाण्डराभ्राभाः शय्याश्च कनकोज्वलाः ।
अन्नदानात्तु सिध्यन्ति तस्मादन्नप्रदो भवेत् ॥५३
इति गौतमीये वैष्णवधर्मशास्त्रे अन्नदानविधिर्नाम द्वादशोऽध्यायः ।

## त्रयोदशोऽध्यायः ।

### अथ भोजनविधिवर्णनम् ।

अन्नदानफलं श्रुत्वा प्रीतोऽस्म्यसुरसूदन ! ।
भोजनस्य विधिं वक्तुं देवदेव ! त्वमर्हसि ॥१
श्रीभगवानुवाच ।
भोजनस्य द्विजातीनां विधानं शृणु पाण्डव ! ।
स्नातः शुचिः शुचौ देशे निर्जने हुतपावकाः ॥२
मण्डलं कारयित्वा तु चतुरस्रं द्विजोत्तमः ।
क्षत्रियस्य ततो वृत्तं वैश्यस्य धनुसन्निभम् ॥३
कुर्चपादस्तु भुञ्जीयात् प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥४
नैकवासास्तु भुञ्जीयान् नैवान्तर्धाय वै द्विजः ।
न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च ॥५

अन्नं पूर्वं नमस्कुर्यान्न प्रहृष्टेनान्तरात्मना।
नान्यदालोकयेदन्नान्नजुगुप्सेत वा पुनः ॥६
जुगुप्सितन्तु यच्चान्नं राक्षसा एव भुञ्जते।
पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम ॥७
अपेयन्तद्विजानीयात् पीत्वा चान्द्रायणञ्चरेत्।
परिषेकबलादन्यन्न पेयत्वे त्वनुमन्त्रवत ॥८
पञ्चप्राणाहुति कुर्यात्समन्त्रस्तु पृथक् पृथक्।
यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ! ॥९
तथा समाहितः कुर्यान् प्राणाहुतिमतन्द्रितः।
विदित्वा चान्न मन्नादं पञ्च प्राणांश्च पाण्डव ! ॥१०
यः कुर्यादाहुती. पञ्च तेनेष्टाः पञ्च वायवः।
अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ॥११
तेनान्नेन सुरान प्रेतान् राजसास्तर्पयिष्यति।
वक्त्रप्रमाणपिण्डानि ग्रासेनैकेन वा पुनः ॥१२
वक्त्राधिकन्तु यत्पिण्डमात्मोच्छिष्टन्तदुच्यते।
दष्टावशिष्टमन्नञ्च वक्त्रान्निःसृतमेव च ॥१३
अभोज्यन्तद्विजानीयान् भुक्त्वा चान्द्रायणञ्चरेत्।
स्वमुच्छिष्टन्तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने ॥१४
चान्द्रायणञ्च यत्कृच्छ्रं प्राजापत्यमथापि वा।
पिबतः पतिते तोये भाजने मुखनिःसृते ॥१५
अभोज्यन्तद्भवेदन्नं भुक्त्वा चान्द्रायणञ्चरेत्।
केशकीटावपन्नञ्च मुखमारुतवीजितम ॥१६

अभोज्यं तद्विजानीयाद् भुक्त्वा चान्द्रायणञ्चरेत् ।
उत्थाय च पुनर्भुक्तं पादस्पृष्टञ्च लङ्घितम् ॥१७
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत् ।
राक्षसोच्छिष्टभुग्विप्रः सत्यपूर्वान् परानपि ॥१८
निरये रौरवे घोरे स पितॄन् घातयिष्यति ।
तस्मिन्नाचमनं कुर्यात् यस्मिन् पात्रे स भुक्तवान् ॥१९
यश्चतिष्ठत्यनाचान्तो भुक्तवान्नासने ततः ।
स्नानं सद्यः प्रकुर्वीत नान्यथा प्रयतो भवेत् ॥२०

युधिष्ठिर उवाच ।

तृणमुष्टिविधानञ्च तिलमाहात्म्यमेव च ।
इक्षुसोमसमुद्भूतिं वक्तुमर्हसि मानद ! ॥२१

श्रीभगवानुवाच ।

पितरो वृषभा ज्ञेया गावो लोकस्य मातरः ।
तासान्तु पूजया राजन् ! पूजिताः पितृमातरः ॥२२
सभा विप्रगृहाश्चापि देवतायतनानि च ।
शुध्यन्ति स्वत एवासां किम्भूतमधिकं ततः ॥२३
ग्रासमुष्टिं परगवे दद्यात् संवत्सरन्तु यः ।
अकृत्वास्तेयमाहारं वृतवत्सार्वकामिकम् ॥२४
गावो मे मातरः सर्वाः पितरश्चैव मे वृषाः ।
ग्रासमुष्टिं मया दत्तां प्रतिगृह्णन्तु मातरः ॥२५
इत्युक्त्वा तेन मन्त्रेण सावित्र्या वा समाहितः ।
दद्यात्तु ग्रासमुष्टिं यस्तस्य पुण्यफलं शृणु ॥२६

यत्कृतं दुष्कृतेन ज्ञानतोऽज्ञानतोऽपि वा ।
तस्य नश्यति तत्सर्वं दुःस्वप्नश्च विनश्यति ।।२७
तिलाः पवित्राः पापघ्ना नारायणसमुद्भवाः ।
तिलाः श्राद्धे प्रशंसन्ति दानमेतदनुत्तमम ।।२८
तिलानद्यात्तिलान् दद्यात्तिलान् प्रातरुपस्पृशेत् ।
तिलास्तिला इति ब्रूयान् महत्पापविमुक्तये ।।२९
तिलास्तु देवतारूपा नावमन्या द्विजातिभिः ।
भोजनाभ्यञ्जनाद्दानाद्यो न तत् कुरुते तिलैः ।।३०
कृमिर्भूत्वाश्वविष्ठायां पितृभिः सह मज्जति ।
तिलान् यो पीड़येद्विप्रो स्ववक्त्रेण स्वयं नृप ! ।।३१
पीडयेद्यदि तान् मोहान्नरकं याति रौरवम ।
इतिवंशोद्भवे सोमः सोमवंशोद्भवे द्विजः ।।३२
इक्षून यः पीडयेत्तस्मादिक्षुघात्यात्मघातकः ।
इक्षुदण्डसहस्रेण एकैकेन द्विजोत्तमः ।।३३
ब्रह्महत्यामवाप्नोति ब्राह्मणो यत्र पीड़कः ।
तस्मान्न पीड़येदिक्षून् मन्त्रचक्रे द्विजोत्तमः ।।३४

इति गौतमीये वैष्णवधर्मशास्त्रे तिलान्नदानादि प्रशंसानाम
त्रयोदशोऽध्यायः ।

---

## चतुर्दशोऽध्यायः ।

### अथापद्धर्मवर्णनम् ।

युधिष्ठिर उवाच ।

समुच्चयं तु धर्माणो भोज्याभोज्यञ्च केशव !
श्रुतं मया त्वत्प्रसादादापद्धर्मं ब्रवीहि मे ॥१

श्रीभगवानुवाच ।

दुर्भिक्षे राष्ट्रसम्पाते त्वशौचे मृतसूतके ।
कर्मकालेऽध्वनि तथा नियमस्थो न लुप्यते ॥२
दूराध्वचलनात्खिन्नो द्विजालाभे तु शूद्रतः ।
अकृतान्नञ्च यत्किञ्चिद्गृह्णीयादात्मवृत्तये ॥३
आतुरो दुःखितो वाऽपि भयार्तो वा बुभुक्षितः ।
भुञ्जन्नविधिना विप्रः प्रायश्चित्तीयते न च ॥४
यत्किञ्चिदपि कुर्वाणो विद्वान गुरुनियोगकः ।
तेषां वचनसामर्थ्यात्प्रायश्चित्तीयते न च ॥५
अनृतावृतुकाले वा दिवा रात्रौ तथापि वा ।
प्रोषितस्तु स्त्रियं गच्छन् प्रायश्चित्तीयते न च ॥६
निमन्त्रितस्तु यो विप्रो विधिवद्धव्यकव्ययोः ।
मांसादीन्यपि भुञ्जानः प्रायश्चित्तीयते न च ॥७
अष्टौ तान्यव्रतघ्नानि आपोमूलं घृतं पयः ।
हवि र्ब्राह्मणकाम्या च गुरोर्वचन मौषधम ॥८
अशक्तं विधिवत्कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां कलनेनापि दानेनापि विशुद्ध्यति ॥९

युधिष्ठिर उवाच ।

प्रशस्यः कीदृशो विप्रो निन्द्याश्चापि सुरेश्वर ! ।
अष्टकापञ्चकः कालस्तन्मे कथय माधव ! ॥१०

श्रीभगवानुवाच ।

सत्यं यद्धि द्विजं दृष्ट्वा स्थानाद्वपति भास्करः ।
एष मे मण्डलं भित्वा याति ब्रह्म सनातनम ॥११
कुलीनः कर्मकृद्वैद्य स्तथैवाप्यनृशंसकः ।
सदानृजुः सत्यवादी पात्रं सर्वे इमे द्विजाः ॥१२
ये ते चाग्रासने स्थातुं भुञ्जानाः प्रथमं द्विजाः ।
तस्यां पंक्त्यां तु ये चान्ये तन् पुनन्त्येव दर्शनात् ॥१३
मद्भक्ता ये द्विजश्रेष्ठा मद्गता मत्परायणाः ।
तान् पङ्क्तिपावनान् विद्धि पूज्याश्चैव विशेषतः ॥१४
निंद्याञ्छृणु द्विजान राजन् ! मपि वा वेदपारगान ।
ब्राह्मणेष्वात्मनालोक्य चरन्तः पापकर्मणः ॥१५
अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः ।
यत्र कुत्र च भुञ्जान स्वंविद्यात्पङ्क्तिदूपकम ॥१६
मृतसूतकपुष्टाङ्गो यस्तु शूद्रान्नभोजनः ।
अहञ्चापि न जानामि गतिमस्य नराधिप ! ॥१७
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः ।
जपतोजुह्वतो वाऽपि गतिरूर्द्ध्वं न विद्यते ॥१८
आहिताग्निस्तु यो विप्रः शूद्रान्नेनापि वर्तते ।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥१९

शूद्रप्रेषणकर्तुश्च ब्राह्मणस्य युधिष्ठिर ! ।
भूम्यामन्नं प्रदातव्यं श्वशृगालसमो हि सः ॥२०
प्रेतीभूतञ्च यः शूद्रं ब्राह्मणोऽज्ञानदुर्बलः ।
अनुगच्छेन्नीयमान स्त्रिरात्र मशुचिर्भवेत् ॥२१
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥२२
अनाथब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः ।
पदे पदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि ॥२३
न तेषा मशुभं किञ्चित् पापं वा शुभकर्मणाम् ।
जलावगाहनादेव सद्यः शौचं विधीयते ॥२४
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
घृतन्तेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत् ॥२५
विप्राणां भोक्तुकामाना मत्यन्तञ्चान्तकाङ्क्षया ।
यो विघ्नं कुरुते मर्त्य स्ततोऽन्यो नास्ति पापकृत् ॥२६

सव च वेदाः ऋषिभिः सहाङ्गैः साङ्ख्यं पुराणञ्च कुलञ्च जन्मनोः ।
एतानि सर्वाणि गतौ भवन्ति शीलव्यपेतस्य न हि द्विजस्य ॥२७
गृहोपरागे विषुवायनादि सुपुण्यतिथ्याञ्च सुते च जाते ।
नवेषु पद्मेषु च पाण्डुपुत्र ! गच्छेत्सनिष्कन्तु सहस्र तुल्यम् ॥ २८
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च मासे ।
उपप्लवे चन्द्रमसोरवेश्च श्राद्धस्य काले ह्ययनद्वयं न ॥२९
य स्त्वेकपंक्तयां विषमं ददाति स्नेहाद्भयाद्वा यदिवार्थहेतोः ।
क्रूरं दुराचार मनात्मवन्तं ब्रह्मघ्नमेनं मुनयो वदन्ति ॥३०

धनानि येषां विफलानि सन्ति नित्यं रमन्ते परलोकमूढ़ाः ।
तेषा मयं शत्रुवरघ्नलोको नासौ सदेहः ससुखं रमेत ॥३१
ये युक्तयोगास्तपसि प्रयुक्ताः स्वाध्यायशीला जरयन्ति देहम् ।
जितेन्द्रिया भूतहिते निविष्टास्तेषा मसौ नायमरिघ्नलोकः ॥३२
ये धर्ममेव प्रथमञ्चरन्ति श्रमेण लब्धा निधनानि काले ।
दारानवाप्य क्रतुभि र्यजन्ति तेषा मयञ्चैव परश्च लोकः ॥३३
ये नैवविद्या न तपो न दानं न चापि मूढ़ाः प्रजने यतन्ते ।
न चापि गच्छन्ति सुखान्यभावात् तेषामयञ्चैव परस्य नास्ति ॥३४

युधिष्ठिर उवाच ।

नारायण ! पुराणेश ! योगवास ! नमोऽस्तु ते ।
श्रोतुमिच्छामि कार्त्स्न्येन धर्मसारसमुच्चयम् ॥३५

श्रीभगवानुवाच ।

धर्मसारं महाराज ! मनुना प्रोक्त मादितः ।
प्रयच्छामि मनुप्रोक्तं पौराणं श्रुतिसन्ततम् ॥३६
अग्निचित्कपिला सत्री राजा भिक्षु र्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत तान् सदा ॥३७
गौरेकस्य प्रदातव्या न बहूनां युधिष्ठिर ! ।
या गौर्विक्रयमापन्नादहत्यासप्तमं कुलम् ॥३८
बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः ।
तादृक् भूतन्तु यद्दानं दातारं नोपतिष्ठति ॥३९

आक्रुश्य ब्राह्मणो मत्क मन्न' येषान्तु वेश्मनि।
गोभिश्च पुण्यकं तेषां राजसूयाद्विशिष्यते ॥४०

मा दम्या इति यो ब्रूयाद् गोरग्ने ब्राह्मणस्य च।
तिर्यग्योनिशतं गत्वा चण्डालेषु प्रजायते ॥४१

ब्राह्मणस्य तु देवस्य दरिद्रस्य च यद्धनम्।
गुरोश्चापि हृतं राजन्! स्वर्गस्थमपि पातयेत् ॥४२

धर्मं जिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः।
द्वितीयन्तु स्वशास्त्राणि तृतीयं लोकसंग्रहः ॥४३

आसमुद्राच्च वै पूर्वादासमुद्राच्च पश्चिमात्।
हिमवद्विन्ध्ययो मध्य मार्यावर्तं प्रचक्षते।
सरस्वतीदृषद्वत्यो स्तथा नद्योर्यदन्तरम् ॥४४

तद्देव मातृकं देशं ब्रह्मावर्तं प्रचक्षते।
तस्मिन्देशे सदाचारः पारम्पर्यक्रमागतः ॥४५
वर्णानां सान्तरालानां स सदाचार उच्यते।
कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसैनिकाः ॥४६
एते महर्षिदेशास्तु ब्रह्मावर्तादनन्तरम्।
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ॥४७
स्वं स्वं चरित्रं शिक्षन्ते पृथिव्यां सर्वमानवाः।
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि ॥४८
प्रत्यगेव प्रयागश्च मध्यदेशः प्रकीर्तितः।
कृष्णसारस्तु चरति मृगोयत्र स्वभावतः ॥४९

संज्ञया ज्ञायते देशो म्लेच्छदेशस्तु तत्परम्।
एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः ॥५०
शूद्रस्तु यस्मिन् वा निवसेद्वृत्तिकर्शितः।
आचारप्रभवोधर्मो ह्यहिंसा सत्यमेव च ॥५१
दानञ्चैव यथा शान्ति र्नियमानियमैः सह।
वैदिकैः कर्मभिः पुण्यैः निषेकादि द्विजात्मनाम ॥५२
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।
गार्भै र्होमैर्जातकर्म नामचौडोपनायनैः ॥५३
स्वाध्यायैस्तर्पणैश्चैव विवाहस्नातकव्रतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयः क्रियते ततः ॥५४
धर्मार्थौ यस्य महतां शुश्रूषामपि तद्विधः।
न तस्य विद्या वक्तव्या कदाचिदपि चोषरे ॥५५
लौकिकं वैदिकं वाऽपि तथाध्यात्मिकमेव च।
यतो ज्ञानागमं प्राप्त स्तं पूर्वमभिवादयेत ॥५६
सव्येषु सव्यं स्पृष्टव्यो दक्षिणेन तु दक्षिणम्।
न कुर्य्यादेकहस्तेन गुरोः पादाभिवन्दनम् ॥५७
निषेकादीनि कर्माणि यः करोति यथाविधि।
अध्यापयन्ति वेदांश्च स विप्रो गुरुरुच्यते ॥५८
इहोपनयनं वेदान्योऽध्यापयति नित्यशः।
सुकल्पान् इतिहासांश्च स उपाध्याय उच्यते।
साङ्गान् वेदांश्च योऽध्याप्य शिक्षयित्वा व्रतानि च ॥५९

विवृणोति च मन्त्रार्थां नाचार्यः सोऽभिधीयते।
उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता ॥६०
पितुर्दशगुणं माता गौरवेणातिरिच्यते।
तस्मात्तेषां वशे तिष्टेत्तच्छुश्रूपापरोभवेत् ॥६१
अवमानात्तु तेषां हि नरकान्याति सर्वशः।
अनङ्गाननिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ॥६२
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत्।
शपतो यत् कृतं पुण्यं सेव्यमानन्तु गच्छति ॥६३
सेव्यमानस्य यत्पापं शपन्त मनुगच्छति।
नास्तिक्यं लोकनिन्दाञ्च देवतानाञ्च तुच्छनम्।
द्वेषं स्तम्भञ्च मोहञ्च क्रोधन्तैक्ष्ण्यं विवर्जयेत् ॥६४
यस्य यस्य हि यो भाव स्तेन तेन हि तं रथम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशन्नयेत् ॥६५

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे धर्मसारसमुच्चयो नाम
चतुर्दशोऽध्यायः।

---

पञ्चदशोऽध्यायः ।

अथ धर्ममहत्त्ववर्णनम् ।

युधिष्ठिर उवाच ।

भगवंस्तव भक्तस्य मम धर्मजनप्रिय ! ।
धर्मं पुण्यतमं देव ! पृच्छतः कथयस्व मे ॥१
यदेकमग्निहोत्रं वै सृष्टं वर्णत्रयस्य तु ।
मन्त्रस्य वृध्या तं सम्यग्विधिना चाप्युपासितम् ॥२
आहिताग्निर्नयत्यूर्द्ध्वं सपत्नीकं सबान्धवम् ।
कथं तद्ब्राह्मणर्देव ! होतव्यं क्षत्रियैः कथम् ॥३
वैश्यैर्वा देव ! देवेश ! कथं वा सुहुतं भवेत् ।
कस्मिन् काले कथं कस्यचेयोऽग्निः स्यात् सुरेश्वर ! ॥४
आहितस्य कथं वाऽपि सम्यगाचरणं भवेत् ।
कत्यग्नयः किमात्मानं स्थानं किं कस्य वा विभो ! ॥५
कतरस्मिन्नु वा स्थाने किं व्रजेदग्निहोत्रकः ।
अग्निहोत्रनिमित्तश्च किमुत्पन्नं पुराऽनघ ! ॥६
कथमेवाथ हूयन्ते प्रीयन्ते च सुरैः कथम् ।
विधिवन्मन्त्रवद्भक्त्या पूजिता स्त्वग्नयः कथम् ॥७
कां गतिं वदतां श्रेष्ठ ! नयन्ति ह्यग्निहोत्रिणम् ।
दुर्हुताश्चाग्निहूताश्चाप्यविज्ञातास्त्रयोऽग्नयः ॥८
किमाहिताग्नेः कुर्वन्ति चीर्णा वा अपि केशव ! ।
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव ! गच्छति ॥९

एतत्सर्वं हि देवेश ! भक्त्या भूपगतस्य मे ।
वक्तुमर्हसि धर्मज्ञ ! सर्वावास ! नमोऽस्तु ते ॥१०

श्रीभगवानुवाच ।

शृणु राजन् ! महत् पुण्यमिदं धर्मामृतं परम ।
यत्तु तारयते भक्तान् ब्राह्मणानग्निहोत्रिणः ॥११
ब्रह्मा त्वेतान् सृजन् लोकान् महदाद्यान् महाद्युतीन् ।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ॥१२
यस्मादग्रे स भूतानां सर्वेषान्निर्मितो मया ।
तस्मादग्नीत्यभिहितं पुराणज्ञैर्महर्षिभिः ॥१३
यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते ।
आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते ॥१४
यस्माच्च नयति ह्यग्रां गतिं विप्रान् सुपूजितान् ।
तस्माच्च नयनाद्राजन् ! वेदेष्वग्नीति चोच्यते ॥१५
यस्माच्च दुर्हुतान् सोऽय मलम्भक्षयितुं क्षणात् ।
यजमाना नरश्रेष्ठाः क्रव्यादोऽग्निस्तु न स्थितः ॥१६
सर्वभूताधिपो राजन् ! देवानामेष वै मुखम् ।
प्रथमं मन्मुखात् सृष्टो लोकार्थं पचनप्रभुः ॥१७
सृष्टमात्रो जगत्सर्वं मुत्तमैश्च युतं खलु ।
ततः प्रशमितः सोऽग्निरूपः स मायया पुरा ॥१८
स्मृतादुपासनात् सोऽयमौपासन इति स्मृतः ।
आहुतिः सर्वमाख्यातस्तस्मिन् वसति योऽनलः ।
आवसथ इति ख्यातस्तेनासौ ब्रह्मवादिभिः ॥१९

तस्मिन् पञ्च महायज्ञा वर्तन्ते यस्य धर्मतः।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः ॥२०
तेन सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः
गतात्मभासा युज्यन्ते मेध्याग्नेश्च न तत्पराः ॥२१
अपरे चावशंसन्ते पचनाग्निं प्रचक्षते।
तस्मिन् पञ्च महायज्ञा वैश्वदेवश्च वर्तते ॥२२
स्थालीपाकश्च गृह्याश्च सर्वे तस्मिन् प्रतिष्ठिताः।
गृह्यकर्मवहो यस्माद् ततो गृहपतिस्तु सः ॥२३
औपासनञ्चावसथं सभ्यं पचनपावकम्।
आहुर्ब्रह्मविदः केचिदेतमेव ममापि च ॥२४
अग्निहोत्रप्रकारन्तु शृणु राजन्! समाहितः।
त्रयाणां गणनामापि अग्नीनामुच्यते मया ॥२५
गृहाणान्तु पतित्वाद्धि गार्हपत्यमिति स्मृतम्।
यजमानन्तु यस्मात्तु दक्षिणान्तु गतिं नयेत् ॥२६
दक्षिणाग्निं तदाहुस्ते दक्षिणत्वाच्च तद्द्विजाः।
आहुतीः सर्वमाख्यातं हवनं हव्यवाहनम् ॥२७
आहूय योऽग्निं नियतं यश्चाहवनसंरतः।
आभिमुख्येन होमस्तु यस्माद्यज्ञेषु वर्तते ॥२८
तेनास्याहवनीयत्वं गतोवह्निर्महाद्युतिः।
आहोमादग्निहोत्रेषु यज्ञे ये यत्र सर्वशः ॥२९
यस्मादस्मिन् प्रवर्तन्ते ततोह्याहवनीयता।
आवसथन्तु येचाग्निं पचनाग्निं प्रचक्षते ॥३०

तेषां सभागतोवह्निः सभ्य इत्यभिधीयते।
आवसथस्तु यो वह्निः प्रथमः स प्रजापतिः ॥३१
ब्रह्मा वै गार्हपत्योऽग्नि स्तस्माद्दवो हि वा भवेत्।
दक्षिणाग्निः स्वयं रुद्रः क्रोधात्मा चण्ड एव सः ॥३२
अहमाहवनीयोऽग्नि रन्तरीक्षञ्च दक्षिणः।
स्वर्गमाहवनीयोऽग्निरेव मग्नित्रयं स्मृतम ॥३३
वृत्तो वै गार्हपत्योऽग्नि र्यस्माद्वृत्ता च मेदिनी।
अर्द्धचन्द्राकृतिः खं वै दक्षिणाग्नि स्तथा भवेत् ॥३४
चतुरस्रं ततः स्वर्गं निर्मलं ह्यग्निसन्निभम्।
तस्मादाहवनीयोऽग्नि श्चतुरस्रो भवेन्नृप ! ॥३५
जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः।
जुहुयाद्दक्षिणाग्निं यः स जयत्यन्तरीक्षकम ॥३६
पृथिवी मन्तरीक्षं वा दिवमृक्षगणैः सह।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान् द्विजः ॥३७
यस्त्वावसथे जुहुयात्तुलाग्निं विधिवद्द्विजः।
स च सप्तर्पिलोकेपु सपत्नीकः प्रमोदते ॥३८
यश्चाप्युपास्ते सभ्यं वा विधिवत्प्रयतात्मवान्।
स जयेद्वा यमभयं सर्वं तथाप्यहिसभामपि ॥३६
अग्नीनामथवाग्नेस्तु यस्य होमः प्रदीयते।
ईर्ष्याभवति सर्वोऽग्निरग्निहोत्रञ्च वै भवेत् ॥४०
त्रयणामपि वह्नीनामग्निहोत्रमिति स्मृतम्।
त्राणाद्वै यजमानस्य चाग्निहोत्र मिति स्मृतम् ॥४१

हो इत्येष विवादो वै विषादो दुःख मुच्यते ।
दुःखं तापत्रयं प्रोक्तं तापो हि नरकं विदुः ॥४२
यस्माद्वा त्रायते दु खाद्यजमानं हुतोऽनलः ।
तस्मात्तु विधिवत्प्रोक्त मग्निहोत्रमिति श्रुतम ॥४३
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककारिणा ।
वेदाश्चाप्यग्निहोत्राथ जज्ञिरे स्वयमेव तु ॥४४
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला नारी दानहोमफलं धनम् ॥४५
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रचक्षते ।
ऋग्यजुः सामभिः पुण्यैः स्थाप्यते सूत्रसंयतैः ॥४६
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्नि नराधिप ! ।
वसन्तो ब्राह्मणः प्रोक्तो ब्रह्मयोनिः स उच्यते ॥४७
अग्न्याधानन्तु येनाथ वसन्ते क्रियते नृप ! ।
तस्य श्रीर्ब्रह्मपुष्टिश्च ब्राह्मणस्य विवर्द्धते ॥४८
क्रतवः सर्व एवैते त्रिभिर्वेदैरलङ्कृताः ।
अग्निहोत्राः प्रवर्तन्ते यैरिदं ध्रियते जगत् ॥४९
ग्राम्यारण्याश्च पशवस्तथा वृक्षास्तृणानि च ।
फलान्योषधयश्चापि चाग्निहोत्रकृतेऽभवन् ॥५०
रसाः स्नेहा स्तथा गन्धा रत्नानि मणयस्तथा ।
काञ्चनाद्यानि लोहानि चाग्निहोत्रकृतेऽभवन् ॥५१
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रञ्च तत्सर्व मग्निहोत्रकृतेऽभवत् ॥५२

छन्दः शिक्षाश्च कल्पाश्च तथा व्याकरणं नृप ! ।
ज्योतिर्ज्ञानं निरुक्तञ्च ह्यग्निहोत्रकृते कृतम् ॥५३
इतिहासपुराणञ्च गाथाश्चोपनिषद्तथा ।
आथर्वणानि कर्माणि अग्निहोत्रकृतेऽभवन् ॥५४
यश्चैतस्यां पृथिव्यां हि किञ्चिदस्ति चराचरम् ।
तत्सर्व मग्निहोत्रस्य कृते सृष्टं स्वयम्भुवा ॥५५
अग्निहोत्रस्य दर्शस्य पौर्णमासस्य चाप्यथ ।
यूपेष्टिपशुबद्धानां सोमपानक्रियावताम् ॥५६
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मनाम् ।
कालानां वेदनार्थन्तु ज्योतिर्ज्ञानं कृतं पुरा ॥५७
ऋग्यजुः साममन्त्राणां लोकचित्तार्थचिन्तनात् ।
प्रत्यापत्तिविकल्पार्थं छन्दोज्ञानं प्रकल्पितम् ॥५८
वर्णाक्षरपदार्थानां सुपि लिङ्गविभक्तितः ।
नामधातुविवेकार्थं पुरा व्याकरणं कृतम् ॥५९
यूपवेद्यध्वरार्थन्तु प्रोक्षणं ग्रहणाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ॥६०
यज्ञपात्रपवित्रार्थं द्रव्यसम्भरणाय च ।
सर्वयज्ञविकल्पाय पुरा तुल्यं प्रकल्पितम् ॥६१
नाममन्त्रविभक्तानां तत्त्वार्थनियमाय च ।
सर्ववेदनिरुक्तञ्च निरुक्त मृषिभिः कृतम् ॥६२
वेद्यर्थं पृथिवी सृष्टा सम्भारार्थं तथैव च ।
इध्मनार्थञ्च यूपार्थं ब्रह्मा चक्रे वनस्पतीन् ॥६३

ग्राम्यारण्याश्च पशवः सूयन्ते यज्ञकारणात् ।
मन्त्राणां विनियोगञ्च प्रोक्षणं श्रवणं तथा ॥६४
अनुयाजप्रयाजांश्च मरुतां शासिनस्तथा ।
उद्गात्रञ्चैव साम्नां वै वलिप्रस्थानमेव च ॥६५
विष्णुक्रमाणां क्रमणं दक्षिणावभृतं तथा ।
त्रिकालं चैव भूमिश ! स्थानेपूपभृतस्तथा ॥६६
श्रवणम्मोक्षणञ्चैव हविषां श्रवणन्तथा ।
नावतुल्यन्ति ये विप्रा निवृत्ताश्च पशोर्वशम् ॥६७
ते या न्ति नरकं घोरं रौरवं तमसावृतम् ।
शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः ॥६८
क्रिमिभि र्भक्ष्यमाणाश्च तिष्टेयुः पूयशोणिते ।
यूपास्तु उक्तसंस्कारै रोषध्यः पशवस्तथा ॥६९
यजमानेन सहिताः स्वर्गं यान्ति नरेश्वर ! ।
यावत्कालं हि यज्ञो वै स्वर्गलोके महीयते ॥७०
तावत्कालं प्रमोदन्ते पशवोह्यध्वरे हताः ।
वृक्षा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा ॥७१
तृणा इच्छन्ति दर्भत्व मोषध्यश्च हविष्मताम् ।
सोमत्वञ्च लताः सर्वा वेदित्वञ्च वसुन्धरा ॥७२
यस्मात्पशुत्वमिच्छन्ति पशवः स्वर्गलिप्सया ।
तस्मात्पशुवधे हिंसा नास्ति यज्ञेषु पाण्डव ! ॥७३
अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत् स्मृतम् ।
वेदोक्तं ये न कुर्वन्ति हिंसाबुध्या क्रतुं द्विजाः ॥७४

सद्यः शूद्रत्वमायान्ति प्रेत्य चण्डालतामपि।
गावो यज्ञाथ मुत्पन्ना दक्षिणार्थं तथैव च ॥७५
सुवर्णं रजतञ्चैव पात्रिकं भार्यमेव च।
दर्भसंस्करणार्थन्तु रक्षसां रक्षणाय च ॥७६
यजनार्थं द्विजाः सृष्टा स्तारका भुवि दैवताः।
क्षत्रिया रक्षणार्थन्तु वैश्या वार्तानिमित्ततः ॥७७
शुश्रूषार्थं त्रयाणान्तु शूद्राः सृष्टाः स्वयम्भुवा।
एवमेतत् जगत्सर्वं मग्निहोत्रकृते कृतम ॥७८
नावबुध्यन्ति ये वैतदीदृशान्तत्समावृतम्।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ॥७९
रौरवाद्विप्रमुक्तास्तु कृमियोनिं व्रजन्ति ते।
यथोक्तमग्नि होत्राणि शुश्रूषन्ति च ये द्विजाः ॥८०
तैस्तु दत्तं हुतं तप्तं जप्तमध्यापितं भवेत्।
एवमिष्टञ्च पूर्तञ्च यद्द्विजैः क्रियते नृप! ॥८१
तत्सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम्।
मया स्थापितमादित्ये लोकस्य सुकृतं हि यत् ॥८२
तारयेत्तत् सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम्।
तावत्तेषां हि पुण्येन दीप्यते रविरम्बरे ॥८३
स्वर्गे स्वर्गं गतानान्तु वीर्याद्भवति वीर्यवान्।
तत्र ते ह्युपयुज्यन्ति ह्यग्निहोत्रस्य यत् फलम् ॥८४
समानरूपा देवानां तिष्ठन्त्याभूतसंप्लवम्।
वृथाग्निना च ये केचिद्दह्यन्ते ह्यग्निहोत्रिणः ॥८५

न तेऽग्नि होत्रिणां लोकान् मनसापि व्रजन्ति वै ।
वीरघ्नास्ते दुराचाराः सुदरिद्रा नराधमाः ॥८६
विकला व्याधिताश्चापि जायन्ते शूद्रयोनिषु ।
तस्मात्प्रौषितकै नित्य मग्निहोत्रं द्विजन्मभिः ॥८७
होतव्यं विधिवद्राजनृध्वमिच्छन्ति ते गतिम् ।
अमृज्यं सूत्रमेतस्मादग्निहोत्रं युधिष्ठिर ! ॥८८
न त्याज्य मप्येतद्गृहीतव्यं द्विजातिभिः ।
वृद्धत्वेऽप्यग्निहोत्रं ये गृह्णन्ति विधिवद्द्विजा ॥८९
शूद्रान्नाद्विरताः सन्तः संयन्तेन्द्रियबुद्धयः ।
पञ्चयज्ञपरा नित्यं क्रोधलोभविवर्जिताः ॥९०
द्विकाल मतिथिञ्चैव पूजयन्ति च भक्तितः ।
तेऽपि सूर्योदयप्रख्यै विमानै र्वायुवेगिभिः ॥९१
मम लोके प्रमोदन्ते दृष्ट्वा माञ्च युधिष्ठिर ! ।
मन्वन्तरञ्च तत्रैकं मोदित्वा द्विजसत्तमाः ॥९२
इह म नुष्यके लोके भवन्ति द्विजपुङ्गवाः ।
बाला हिताग्नयो ये च शूद्रान्नाद्विरताः सदा ॥९३
क्रोधलोभविनिर्मुक्ताः प्रातःस्नानपरायणाः ।
यथोक्त मग्निहोत्रं वै जुह्वते संयतेन्द्रियाः ॥९४
संतिष्ठेद्वा सदा सौम्यो द्विकालं मत्परायणः ।
ते यान्त्यपुनरावृत्ति भित्वा चादित्यमण्डलम् ॥९५
मम लोकं सपत्नीका यानैः सूर्योदयप्रभैः ।
तत्र बालाः ससंस्काराः कालगाः कमरूपिणः ॥९६

ऐश्वर्यंगुणसम्पन्नाः क्रीडन्ति च यथासुखम्।
इत्येषा ह्यहिताग्नीनां विभूतिः पाण्डुनन्दन ! ॥६७
ये च वेदश्रुतिङ्केचिन् निन्द्यमाना ह्यबुद्धयः ॥६८

इति गौतमीये वैष्णवधर्मशास्त्रे पञ्चदशोऽध्यायः।

---

## षोड़शोऽध्यायः।

### अथ चान्द्रायणविधिवर्णनम्।

युधिष्ठिर उवाच।

चक्रायुध ! नमस्तेऽस्तु देवेश ! गरुड़ध्वज ! ।
चान्द्रायणविधिं पुण्य माख्याहि भगवन्मम ॥१

श्रीभगवानुवाच।

शृणु पाण्डव ! तत्त्वेन सर्वपापप्रणाशनम्।
पापिनो येन शुध्यन्ति तत्ते वक्ष्यामि सर्वशः ॥२
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽऽचरितव्रतः।
यथावत्कर्तुकामोयस्तस्य यं प्रथमन्तु यः।
शोधयेत्तु शरीरं स्वं पञ्चगव्ये पवित्रितः ॥३
सशिरः कर्तुं पक्षान्तं ततः कुर्वीत पावनम।
शुद्धवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ॥४
पालाशदण्डमादाय ब्रह्मचारीव्रते स्थितः।
कृतोपवासः पूर्वन्तु शुक्लप्रतिपदि द्विजः ॥५

नदीसङ्गमतीर्थेषु शुचौ देशे गृहेऽपि वा।
गोमयेनोपलिप्तेऽथ स्थण्डिलेऽग्निं निधापयेत् ॥६
आधारवाज्यभागौ च प्रणवं व्याहृतिस्तथा।
वारुणश्चापि पञ्चैव श्रुत्वा सर्वान्यथाक्रमम् ॥७
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे।
विश्वेभ्यश्चैव देवेभ्योऽथ प्रजापतये तथा ॥८
षट् पञ्च जुहुयात्पश्चात्प्रायश्चित्ताहुतीर्द्विजः।
ततः समापयेदग्निं शान्तिं कृत्वाथ पौष्टिकम् ॥९
प्रणम्याग्निञ्च सोमञ्च भस्म दत्त्वा तथात्मनः।
नदीङ्गत्वा विविक्तानां सोमाय वरुणाय च ॥१०
आदित्याय ततः स्नायादन्नं कृत्वा समाहितः।
शुचिर्वोदकमाचम्य स्वाधीनः पूर्वतोमुखः ॥११
प्राणायामन्ततः कृत्वा पवित्रैरभिषेचनम।
आचान्तस्त्वभिवीक्षेत चोर्द्ध्वबाहुर्दिवाकरम् ॥१२
कृताञ्जलिरुपश्रान्तः कुर्याच्चापि प्रदक्षिणम्।
नारायणं वा रुद्रं वा स्वाध्यायं ब्राह्मणन्तथा ॥१३
आरण्यं मम सूक्तं वा प्राक् भोजनमथापि वा।
वीरघ्नमृषभस्यापि तथावाप्यघमर्षणम् ॥१४
गायत्रीं मम वा देवीं सावित्रीं वा जपेत्ततः।
शतं वाष्टशतं वाऽपि सहस्रमथवा परम ॥१५
ततो मध्याह्नकालो वै पायसं यावकन्तु वा।
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः ॥१६

ततः पात्रं समादाय सौवर्णं राजतन्तु वा।
ताम्रं वा मृण्मयं वाऽपि ह्यौदुम्बरमथापि वा ॥१७
वृक्षाणां याज्ञियानान्तु पर्णैरार्द्यैरकुत्सितैः।
पुटकेन तु गुप्तेन चरेद्भैक्षं समाहितः ॥१८
ब्राह्मणानां गृहाणान्तु सप्तान्नान्नापरं व्रजेत्।
गोदोहमात्रंतिष्ठेत्तु वाग्यतः संयतेन्द्रियः ॥१९
न हसेन्न न वीक्षेत नाभिभाषेत वा स्त्रियम्।
विष्ठामूत्रपुरीषञ्च चण्डालं वा रजस्वलाम् ॥२०
पतितञ्च तथाध्वानमादित्यमवलोकयेत्।
यो हि पादुकमारुह्य सर्वदा प्रचरेद्विजः ॥२१
तद्दृष्ट्वा पापकर्माणमादित्यमवलोकयेत्।
ततस्त्वावसथं प्राप्तो भिक्षान्निक्षिप्य भूतले ॥२२
प्रक्षाल्य पादावाचम्य हस्तौ वा कोऽपरः पुनः।
आचम्य वारुगान्तेन वह्निं विप्रांश्च पूजयेत् ॥२३
पञ्च सप्ताथ वा कुर्याद्भागान् भैक्षस्य तस्य वै।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत् ॥२४
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च।
विश्वेभ्यश्चैव देवेभ्यो ह्यादित्याय यथाक्रमम् ॥१५
अवशिष्टमथैकन्तु वक्तुं मात्रं प्रकल्पयेत्।
अङ्गुल्यग्रं स्थितं पिण्डं जायते चाभिमन्त्रयेत् ॥२६
अङ्गुलीभि स्त्रिभिः पुण्यं प्राश्नीयात्प्राङ्मुखः पुनः।
यथा च वर्धते सोमो ग्रसते च तथा पुनः ॥२७

तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिने दिने ।
त्रिकालस्नानमस्योक्तं द्विकालमथवा सकृत ॥२८
ब्रह्मचारी सदा चापि न च वस्त्रं प्रपीडयेत् ।
स्थाने च दिवसे तिष्ठेत् रात्रौ वीरासनं व्रजेत ॥२९
भवेत् स्थण्डिलशायी वा ह्यथवा वृक्षमूलकः ।
वल्कलं यदि वा क्षौमं शाणञ्च पौमकन्तथा ॥३०
आच्छादनं भवेत्तस्य वस्त्रार्थ पुरुषर्षभ ! ।
एवञ्चन्द्रायणं पूर्णे मासस्यान्ते प्रवृत्तिमान् ॥३१
ब्राह्मणान् भोजयेद्भक्त्या दद्याच्चैव तु दक्षिणाम् ।
चान्द्रायणेन चीर्णेन यत्कृतन्तेन दुष्कृतम ॥३२
तत्सर्वं तत्क्षणादेव भस्मीभवति काष्ठवत् ।
ब्रह्महत्याथ गोहत्या सुवर्णस्तैन्यमेव तु ॥३३
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ।
एवमन्यानि पापानि पतनीयानि यानि च ॥३४
चान्द्रायणेन नश्यन्ति वायुना पांशवो यथा ।
अनिदशाया गोः क्षीरं मौष्ट्रमाविकमेव च ॥३५
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायश्चरेत् ।
सुरामांसामिषं सर्पिर्लाक्षा लवणमेव च ॥३६
तैलं सोमञ्च विक्रीणन् द्विजश्चान्द्रायणञ्चरेत ।
एकोद्दिष्टञ्च योभुङ्क्ते योभुङ्क्ते वासनस्थितः ॥३७
भिन्नभाण्डेतु योभुङ्क्ते द्विजश्चान्द्रायणञ्चरेत् ।
आकाशस्थितहस्तोय आसनस्थस्तथैव च ॥३८

परहस्तस्थितश्चैव भुक्त्वा चान्द्रायणञ्चरेत् ।
आसनस्थश्च यो भुङ्क्ते शयनीयगतोऽपि वा ॥३९
यो भुङ्क्ते वासनस्थस्तु द्विजश्चान्द्रायणञ्चरेत् ।
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह ॥४०
यो भुङ्क्ते अन्यथा सार्द्धं द्विजश्चान्द्रायणञ्चरेत् ।
उच्छिष्टं स्थापयेद्विप्रो योमोहाद्भोजनान्तरे ॥४१
दद्याद्वा यदिवा स्नेहाद्द्विजश्चान्द्रायणञ्चरेत् ।
तुम्बं कोशातकञ्चैव पलाण्डुं गृञ्जनन्तथा ॥४२
छत्राकं लशुनञ्चैव जग्ध्वा चान्द्रायणञ्चरेत् ।
तथा पर्युषितं चान्नं पक्वं परगृहागतम् ॥४३
द्विपक्वञ्च वृथामांसं जग्ध्वा चान्द्रायणञ्चरेत् ।
उदक्या च शुना वाऽपि चण्डालैर्वा नराधिप ! ॥४४
स्पृष्टमन्नन्तु भुञ्जानो द्विजश्चान्द्रायणञ्चरेत् ।
एतत्परं हि शुध्यर्थमृषिभिश्चरितव्रतम् ॥४५
पावनं सर्वपापानां पुण्यं पाण्डव ! चोत्तमम् ।
एतेन वसवो रुद्रा आदित्याश्च दिवङ्गताः ॥४६
एतदाद्यं परं गुह्यं पवित्रं पावनं स्मृतम् ।
यथोक्तमेतद्यः कुर्याद्द्विजः पापप्रणाशनम् ॥४७
स दिवं याति पूतात्मा निर्मलादित्यसन्निभः ॥४८

इति गौतमीये वैष्णवधर्मशास्त्रे षोड़शोऽध्यायः ।

सप्तदशोऽध्यायः।

अथ द्वादशमासेषु धर्मकृत्यवर्णनम्।

वैशम्पायन उवाच।

केशवेनैवमाख्याते चान्द्रायणविधिक्रमे।
पप्रच्छ पुनरप्यन्यान् धर्मान् धर्मात्मजो नृपः ॥१

युधिष्ठिर उवाच।

सर्वभूतहिते श्रीमन्! सर्वभूतनमस्कृत!।
सर्वभूतहितं धर्मं सर्वज्ञ! कथयस्व मे ॥२
यद्दरिद्रजनस्यापि स्वर्गं सुखकरम्भवेत्।
सर्वपापप्रशमनन्तच्छृणुष्व युधिष्ठिर! ॥३
कार्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्तिताः।
तेष्वेकभक्तनियमः सर्वेषा मुच्यते मया ॥४
कार्तिके यस्तु वै मासे नन्दया संयतो नरः।
एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ॥५
जलपानं पिवेन्मासो नान्तराभोजनात्परम्।
आदित्यरूपं मांश्चापि नित्यमध्ये समाहितः ॥६
व्रतान्ते भोजयेद्विप्रान् दक्षिणाञ्चापि तत्पुनः।
क्रोधलोभविमुक्तस्य तस्य पुण्यफलं शृणु ॥७
विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम्।
तत्पुण्यं समनुप्राप्य सूर्यलोके महीयते ॥८

ततश्चापि च्युतः कालान् मानुषेपूपजायते।
तत्र प्रकामं क्रीड़ित्वा सर्वलोकेषु पूजितः ॥६
राजराजार्चितोविप्रः कोटिधनपतिर्भवेत्।
मार्गशीर्षे तु यो मासे एकभुक्तेन वर्तते ॥१०
कामं क्रोधञ्च लोभञ्च परित्यज्य यथाविधि।
स्नात्वा चादित्यरूपं मामर्चयन्ति यतेन्द्रियाः ॥११
जपन्नेव तु गायत्रीं मामिकां वाग्यतः शुचिः।
मासे परिसमाप्ते तु भोजयित्वा द्विजान् शुचीन् ॥१२
तानर्चयन्ति मद्भक्त्या तस्य पुण्यफलं शृणु।
अग्निहोत्र हुतं पुण्य माहिताग्नेस्तु यद्भवेत् ॥१३
तत्पुण्यफलमाप्नोति यानेनाम्बरयोगिना।
सप्तर्षिलोके चरति यथाकामं यथासुखम् ॥१४
ततश्चापि च्युतः कालाद्धरिवर्षेषु जायते।
तत्र प्रकामं क्रीडित्वा राजा पश्चाद्भविष्यति ॥१५
पौषमासं क्षपेदेक मेकभक्तेन यो नरः।
अर्चयेत्तु च मां नित्यं मद्गतेनान्तरात्मना ॥१६
अहिंसासत्यनिरतः क्रोधदर्पविवर्जितः।
एवं युक्तस्य राजेन्द्र! शृणुयाः फलमुत्तमम् ॥१७
विप्रातिथ्यसहस्रे तु यत्पुण्यं समुदाहृतम्।
तत्फलं समनुप्राप्तः शक्रलोके महीयते ॥१८
अवतीर्ण स्ततः कालादिलावर्षेषुजायते।
तत्र स्थित्वा चिरं कालमिह विप्रो भविष्यति ॥१६

माघमासन्तथा यस्तु वर्तते चैकभुक्ततः ।
मदर्चनपरो भूत्वा दम्भक्रोधविवर्जितः ।
मामिका मपि गायत्री सन्ध्यायां तु जपेद्द्विजः ॥२०
दत्त्वा तु दक्षिणामन्ते भोजयित्वा द्विजानपि ।
नमस्करोति तान भक्त्या मद्गतेनान्तरात्मना ॥२१
त्रिकालस्नानयुक्तस्य तस्य पुण्यफलं शृणु ।
नीलकर्णाप्रयुक्तेन यानेन सचरो भवेत् ॥२२
पितृलोकं पूजयित्वा सेव्यमानोऽप्सरोगणैः ।
तत्र प्रकामं क्रीड़ित्वा भद्राश्वेपूपजायते ॥२३
तत्र च्युतश्चतुर्वेदी विप्रो भवति भूतले ।
क्षपेत् फाल्गुनमासं य एकभुक्तेन संयतः ॥२४
नमो ब्रह्मण्यदेवायेत्यजस्रंत्रिर्जपन सदा ।
पायसं भोजयेद्विप्रान व्रतान्ते संयतेन्द्रियः ॥२५
मदर्चनपरः क्रोधलोभमोहविवर्जितः ।
सदाचारव्रतपरस्तस्य पुण्यफलं शृणु ॥२६
विमानः सारसैयुक्तमारूढः कामगं सुखम् ।
नक्षत्रलोके रमते सर्वनक्षत्रशोभितः ॥२७
ततश्चापि च्युतः कालात् केतुमालेषु जायते ।
तत्र प्रकामं क्रीड़ित्वा मानुषे नृपतिर्भवेत ॥२८
चैत्रमासेषु योमत्य एक भुक्ते न वर्तते ।
ब्रह्मचारी तु मद्भक्तस्तस्य पुण्यफलं शृणु ॥२९

यदग्निहोत्रे यः पुण्यं यथोक्तव्रतचारिणः ।
तत्पुण्यफलमासाद्य चन्द्रलोके महीयते ॥३०
ततोऽवतीर्णो जायेत वर्षे रमणके पुनः ।
भुक्त्वा कामन्ततस्तस्मिन्निह राजा भविष्यति ॥३१
वैशाखं यस्तु वै मास मेकभुक्तेन वर्तते ।
द्विजमग्रासने कृत्वा भुञ्जन भूमौ च वाग्यतः ॥३२
नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम् ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ॥३३
फलं यद्विधिवत्प्रोक्त मग्निष्टोमातिरात्रयोः ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥३४
ततो हैमवते वर्षे जायते कालपर्युपान् ।
तत्र प्रकामं मोदित्वा विप्रः पश्चाद्भविष्यति ॥३५
ज्यैष्ठमासे तु भो राजन्नेकभुक्तेन वर्तते ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन् जितेन्द्रियः ॥३६
नमो ब्रह्मण्यदेवायेत्यर्चयन्मां समाहितः ।
दम्भानृतविनिर्मुक्तस्तस्य पुण्यफलं शृणु ।
चीर्णे चान्द्रायणे सम्यक् यत्पुण्यं समुदाहृतम् ॥३७
तत्पुण्यफलमासाद्य देवलोके महीयते ।
अथोत्तरकुरुष्वेव जायते निर्गतस्ततः ॥३८
ततश्चापि च्युतः कालादिह लोके द्विजो भवेत् ।
आषाढमासं यो राजन्नेकभुक्तेन वर्तते ॥३९

ब्रह्मचारी जितक्रोधो मद्वचनपरायणः ।
विप्रमग्रासने कृत्वा भुञ्जन भूमौ जितेन्द्रियः ॥४०
कृत्वा त्रिषवणस्नान मष्टाक्षरविधाननः ।
व्रतान्ते भोजयेद्विप्रान पायसेन युधिष्ठिर ! ॥४१
गुडौदनेन वा राजंस्तस्य पुण्यफलं शृणु ।
कपिलाशतदत्तस्य यत्पुण्यं पाण्डुनन्दन ! ॥४२
तत्पुण्यफलमासाद्य देवलोके महीयते ।
ततोऽवतीर्णः कालेन शाकद्वीपे प्रजायते ॥४३
ततश्चापि च्युतः कालादिह विप्रो भविष्यति ।
श्रावणं यः क्षपेन्मासमेकं भुक्ते न संशयः ॥४४
नमो ब्रह्मण्यदेवायेत्युक्त्वा मा मर्चयेत्सदा ।
विप्रमग्रासने कृत्वा भूमौ भुजन्यथाविधि ॥४५
पायसेनार्चयन्विप्रान् जितक्रोधो जितेन्द्रियः ।
लोभमोहविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥४६
कपिलाशतस्य यत्पुण्यं विधिदत्तस्य वासव ! ।
तत्पुण्यं समनुप्राप्तः शक्रलोके महीयते ॥४७
ततश्चापि च्युतः कालात् कुशद्वीपे प्रजायते ।
तत्र प्रकामं क्रीडित्वा विप्रो भवति मानुषे ॥४८
यस्तु भाद्रपदं मासमेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यसन्धो जितेन्द्रियः ॥४९
विप्रमग्रासने कृत्वा पाकभेदविवर्जितः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा सुचरणौ स्पृशेत् ॥५०

तिलान्वाथ घृतं वाऽपि व्रतान्ते दक्षिणां दिशेत् ।
मद्भक्तस्य नरश्रेष्ठ ! तस्य पुण्यफलं शृणु ॥५१

यत्फलं विधिवत्प्रोक्तं राजसूयाश्वमेधयोः ।
तत्पुण्यफलमासाद्य शक्रलोके महीयते ॥५२

ततश्चापि च्युतः कालाज्जायते धनदालये ।
तत्र प्रकामं क्रीड़ित्वा राजा भवति मानुषे ॥५३

यश्चाप्याश्वयुजं मासमेकभुक्तेन वर्तते ।
यद्वायत्रीं जपन्विप्रो मद्गतेनान्तरात्मना ॥५४

द्विसन्ध्यं वा त्रिसन्ध्यं वा शतमष्टशतन्तु वा ।
विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः ॥५५

व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ।
अश्वमेधेन यत्पुण्यं विधिवत्पाण्डुनन्दन ! ॥५६

तत्पुण्यफलमासाद्य मम लोके महीयते ।
ततश्चापि च्युतः कालात् श्वेतद्वीपे प्रजायते ॥५७
तत्र भुक्त्वा महान् भोगांस्तत्र विप्रो हि जायते ॥५८

इति गौतमीये वैष्णवधर्मशास्त्रे सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः।

## अथैकभुक्त पुण्यफलवर्णनम।

युधिष्ठिर उवाच।

देव ! संवत्सरं पुण्यमेकभुक्तेन यः क्षपेत।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव ! ॥१

श्रीभगवानुवाच।

शृणु पाण्डव ! सत्यं मे वचनं पुण्यमुत्तमम।
यच्छ्रुत्वा वाथ कृत्वा वा नरः पापैर्विमुच्यते ॥२
एकभुक्तेन वर्तेत नरः संवत्सरन्तु यः।
ब्रह्मचारी सदा शान्तो जितक्रोधो जितेन्द्रियः ॥३
शुचिः स्नानरतोऽव्यग्रः सत्यवागनसूयकः।
अर्चयेत्त तु मां नित्यं मद्गतेनान्तरात्मना ॥४
सन्ध्ययोस्तु जपेन्नित्यं मद्गायत्री समाहितः।
नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ॥५
विप्रमग्रासने कृत्वा पावकं भैक्षमेव वा।
भूत्वा तु वाग्यतो भुक्त्वा वाचम्यास्य द्विजन्मनः ॥६
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणं स्पृशेत्।
मासे मासे समाप्ते तु भोजयित्वा द्विजः शुचीन् ॥७
सम्वत्सरे ततः पूर्णे दद्यात्तु घृतदक्षिणाम।
नवनीतमयीं गां वा तिलधेनुमथापि वा ॥८

विप्रहस्तच्युतैस्तोयैः सहिरण्यैः समुक्षितः।
तस्य पुण्यफलं राजन्! कथ्यमानं मया शृणु ॥९

दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ॥१०

युधिष्ठिर उवाच।

सर्वेषामुपवासानां यच्च यत् सुमहाफलम्।
तत्सर्वं श्रेयसे लोके तद्भवान् वक्तुमर्हति ॥११

श्रीभगवानुवाच।

शृणु राजन! यथापूर्वं यथाहीनन्तु भारत!।
कथान्ते कथयिष्यामि मद्भक्तस्य युधिष्ठिर! ॥१२

यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप!।
उपवासकृतं कुर्यात्त्रिकालञ्चार्चयंस्तु माम् ॥१३

सर्व क्रतुफलं लब्ध्वा मम लोके महीयते ॥१४

युधिष्ठिर उवाच।

भगवन्! देवदेवेश! पञ्चमी नामका तिथिः।
तामहं श्रोतुमिच्छामि कथयस्व ममाच्युत! ॥१५

श्रीभगवानुवाच।

पर्वद्वयञ्च द्वादश्यां श्रवणञ्च नराधिप!।
मत्पञ्चमीति विख्याता मत्प्रियञ्च विशेषतः ॥१६

तस्माद्भागवतैर्भक्तैर्मन्निवेशितबुद्धिभिः।
उपवासस्तु कर्तव्यो मत्प्रियार्थं युधिष्ठिर! ॥१७

द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ! ॥१८
अहोरात्रेण द्वादश्यां मार्गशीर्षे च केशवम् ।
उपोष्य पूजयेद्यो मां सोऽश्वमेधफलं लभेत् ॥१९
द्वादश्यां पौषमासे तु भक्त्या नारायणन्तु माम् ।
उपोष्य पूज्य मद्यः स वाजपेयफलं लभेत् ॥२०
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यः समाप्नोति पौण्डरीकफलं नृप ! ॥२१
उपोष्य मां यो वैशाख्यां द्वादश्यां मधुसूदन ! ।
पूजयन् फलमाप्नोति सोऽग्निष्टोमस्य पाण्डव ! ॥२२
द्वादश्यां ज्यष्ठमासे मां रामुपोष्य त्रिविक्रमम् ।
अर्चयेद्यः समाप्नोति गवां मेधफलं नृप ! ॥२३
आषाढ वामनाख्यं मां द्वादश्यां समुपोष्य यत् ।
पूजयेन्नरमेधस्य तत्फलं प्राप्नुयान्नृप ! ॥२४
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
पूजयेद्यः समाप्नोति पञ्चयज्ञफलं नृप ! ॥२५
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य पुनराप्नोति सौत्रामणिफलं नृप ! ॥२६
द्वादश्यां माश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।
अर्चयेद्यः समाप्नोति गोसहस्रफलं नृप ! ॥२७
द्वादश्यां कार्तिके मासि मां दामोदरसंज्ञितम् ।
उपोष्य पूजयेद्यः स सर्वक्रतुफलं लभेत् ।
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन ! ॥२८

फलं यत्पूर्व मुद्दिष्टन्तस्यार्द्धं लभते फलम् ।
श्रवणेऽप्येवमेवं मां योऽर्चयेद्भक्तिमान्नरः ॥२६

मम सालोक्य मायाति नात्र कार्या विचारणा ।
मासे मासे समभ्यर्च्च्य योनरो मामतन्द्रितः ॥३०

एवं द्वादशवर्षाणि मद्भक्तो मत्परायणः ।
अविघ्न मर्च्चमानस्तु मम सालोक्यमाप्नुयात् ॥३१

अभ्यस्येत्प्रीतिमान् सम्यक् द्वादश्यां वेदसंहिताम् ।
स पूर्वोक्तफलं राजन ! लभते नात्र संशयः ॥३२

गन्धं पुष्पं फलं तोयं पत्रं वा मूलमेव वा ।
द्वादश्यां मम यो दद्यात्ततो नैवास्ति मत्प्रियः ॥३३

एतेन विधिना सर्वे देवाः शक्रपुरोगमाः ।
मद्भक्त्या नरशार्दूल ! स्वर्गलोकांस्तु भुञ्जते ॥३४

वैशम्पायन उवाच

एवं वदति देवेशे केशवे पाण्डुनन्दनः ।
कृताञ्जलिपुटं न्यस्त्य मिदं भक्त्या ह्युवाच ह ॥३५

युधिष्ठिर उवाच ।

यज्ञात्मन्यज्ञसम्भृत ! यज्ञनाथ नमोनमः ।
चतुर्मूर्ते ! चतुर्बाहो ! चतुर्व्यूह ! नमोनमः ॥३६

लोकात्मन् ! लोकनाथेश ! लोकवास ! नमोनमः ।
सर्वज्ञ ! सर्वलोकेश ! हृषीकेश ! नमोनमः ॥३७

सहस्रशिरसे तुभ्यं सहस्राक्ष ! नमोनमः ।
पञ्चयज्ञ ! नमस्तेऽस्तु सर्वयज्ञ ! नमोनमः ॥३८

त्रयीमय ! त्रयीनाथ ! त्रयीलभ्य ! नमोनमः ।
सृष्टिसंहारकर्त्तेति नारसिंह ! नमोनमः ॥३९
भक्तप्रिय ! नमस्तेऽस्तु सोमनाथ ! नमोनमः ।
हयवक्त्र नमस्तेऽस्तु चक्रपाणे ! नमोनमः ॥४०
पञ्चभूत ! नमस्तेऽस्तु पञ्चायुध ! नमोनमः ॥४१

वैशम्पायन उवाच ।

भक्तिगद्गदया वाचा स्तुवन्नेव युधिष्ठिरः ।
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत् ॥४२
निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम् ।
वक्तुमेव नरश्रेष्ठं धर्मपुत्रं प्रचक्रमे ॥४३

श्रीभगवानुवाच ।

अन्यवत्किमिदं राजन्मां स्तौसि नरपुङ्गव ! ।
तिष्ठ पृच्छ यथापूर्वं धर्मानेव युधिष्ठिर ! ॥४४

युधिष्ठिर उवाच ।

भगवन् ! त्वत्प्रसादं तु स्मृत्वा स्मृत्वा पुनः पुनः ।
न शान्तिरस्ति देवेश ! नृत्यतीव च मे मनः ॥४५
इदञ्च मम संप्रश्नं वक्तुमर्हसि माधव ! ।
द्वादश्यां कृष्णपक्षे तु अर्च्चनीयः कथं भवेत् ॥४६

श्रीभगवानुवाच ।

शृणु राजन् ! यथातथ्यं तत्सर्वं कथयामि ते ।
माहात्म्यं कृष्णद्वादश्या मर्च्चनीयम् फलं मम ॥४७

एकादश्या मुपोष्याथ द्वादश्यामर्चयेत्तु माम ।
विप्रानपि यथालाभं भोजयेद्भक्तिमान्नरः ॥४८
स गच्छेद्दक्षिणामूर्तिर्मांश्च नात्र विचारणा ।
चन्द्रसालोक्य मथवा ग्रहनक्षत्रपूजितः ॥४९

इति गौतमीये वैष्णवधर्मशास्त्रे अष्टादशोऽध्यायः ।

---

ऊनविंशोऽध्यायः ।

अथ दानफलवर्णनम ।

वैशम्पायन उवाच ।

केशवेनैव माख्याते धर्मपुत्रः पुनः प्रभुम ।
पप्रच्छ दानकालस्य विशेषञ्च विधिं नृपः ॥१

युधिष्ठिर उवाच ।

देवकीफलमाख्यातं विषुवेष्वमरेश्वर ! ।
सूर्ययज्ञप्लवे चैव दत्ते दाने च किं फलम ॥२

श्रीभगवानुवाच ।

शृणुष्व राजन ! विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दानं स्यादक्षयन्नृप ! ॥३
राजन्नयनयोर्मध्यं विषुवं संप्रचक्षते ।
समरात्रिदिने तत्र सन्ध्यायां विषुवे नृप ! ॥४

ब्रह्माहं शङ्करश्चापि तिष्ठामः सहिता स्ततः ।
तस्मिन मुहूर्ते ते सर्वे चिन्तयन्तः परंपदम् ॥५
शक्रश्च पितरोरुद्रावसवश्चाश्विनौ तथा ।
साध्या विश्वे सगन्धर्वाः सिद्धा ब्रह्मर्षय स्तथा ॥६
सोमो ग्रहगणश्चैव सागराः सरितस्तथा ।
मरुतोऽप्सरसो नागा यक्षराक्षसगुह्यकाः ॥७
एते चान्ये च राजेन्द्र ! विषुवे संयतेन्द्रियाः ।
सोपवासाः प्रयत्नेन भजन्ते ध्यानतत्पराः ॥८
अन्नं गावस्तिलान् भूमिं कन्यादानं तथैव च ।
गृहमाच्छादनं धान्यं वाहनं शयनं तथा ॥९
यच्चान्यच्च मया नोक्तं तत्प्रयच्छ युधिष्ठिर ! ।
दीयते विषुवे चैव श्रोत्रियेभ्यो विशेषतः ॥१०
तस्य दानस्य कौन्तेय ! क्षयो नैवोपपद्यते ।
वर्धते हरतः पुण्यं तद्दानं कोटिसम्मितम् ।
विषुवे स्नापनं यस्तु मम कुर्याद्धरस्य वा ॥११
अर्चनाञ्च यथान्यायं तस्य पुण्यफलं शृणु ।
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ॥१२
दशाना मश्वमेधाना मिष्टानां लभते फलम् ।
विमानं दिव्यमारूढः कामरूपी यथासुखम् ॥१३
स याति कामगं लोकं रुद्रलोक मथापि वा ।
तत्र वै देवगन्धर्वैर्गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकन्तु मोदते ॥१४

ततश्चापि च्युतः कालादिह लोके द्विजोभवेत् ।
चतुर्णामपि वेदानां पारगो ज्ञानविद्भवेत् ॥१५
चन्द्रसूर्यग्रहे यान्ति मम वा शङ्करस्य वा ।
गायते मम वा राजन् ! जपेद्वा शङ्करस्य वा ॥१६
शङ्खं कुर्वन्ति नादैश्च कांस्यघण्टाध्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं महत् ॥१७
गान्धर्वैं होमजाप्यैश्च शब्दैरुत्कृष्टादिभिः ।
दुर्बलोऽभिभवेद्राहुः सोमश्च बलवान भवेत् ॥१८
सूर्येन्दूपप्लवे यद्वै श्रोत्रियेभ्यः प्रदीयते ।
तत्सहस्रगुणं भूत्वा दातार मुपतिष्ठति ॥१९
महापातकसंयुक्तो यद्यपि स्यान्नरो नृप ! ।
निर्लेप स्तत्क्षणादेव तेन दानेन जायते ॥२०
चन्द्रसूर्यप्रकाशेन विमानेन विराजता ।
याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः ॥२१
यावन्नृक्षाणि तिष्ठन्ति गगने शशिना सह ।
तावत्कालं स राजेन्द्र ! सोमलोके महीयते ॥२२
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर ! ।
वेदवेदाङ्गविद्विप्रः कोटीधनपति भवेत् ॥२३

युधिष्ठिर उवाच ।

भगवं स्तव गायत्री जप्यते तु कथं नृभिः ।
किं वा तस्याः फलं देव ! ममाचक्ष्वसिताम्बर ! ॥२४

श्रीभगवानुवाच।

द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा।
अयने श्रवणे चैव व्यतीपाते तथैव च।
अश्वत्थदर्शने चैव तथा मद्दर्शनेऽपि च॥२५
जप्यात्तु मम गायत्री मथवाष्टाक्षरन्नृप!।
आजन्म दुष्कृतन्तस्य नाशयेन्नात्र संशयः॥२६

युधिष्ठिर उवाच।

अश्वत्थदर्शनं देव! किं त्वद्दर्शिनसन्निभम्।
एतत्कथय देवेश! परं कौतूहलं हि मे॥२७

श्रीभगवानुवाच।

अहमश्वत्थरूपेण पालयामि जगत्त्रयम्।
अश्वत्थो न स्थितो यत्र नाहन्तत्र प्रतिष्ठितः॥२८
यत्राहं न स्थितो राजनश्वत्थश्चापि तत्र न।
यस्त्वेनमर्चयेद्भक्त्या मां स साक्षात्समार्चति॥२९
यस्त्वेनं प्रहरेत्कोपान्मामेव प्रहरेत् सः।
तस्मात्प्रदक्षिणं कुर्यान्नभिवादेन प्रत्यहम्॥३०
गावोविप्रा स्तथाश्वत्थो मम रूपं युधिष्ठिर!।
एतत्त्रयं हि मद्भक्तो नावमन्येत कर्हिचित्॥३१
अवमानितं चेत्तु हन्याद्दहत्या सप्तमं कुलम्।
अश्वत्थोब्राह्मणोगावो मन्मया स्तारयन्ति हि।
तस्मादेतत्प्रयत्नेन राजन्! पूजितु महसि॥३२

युधिष्ठिर उवाच।

ब्राह्मणस्तेन देहेन शूद्रत्वं कथमाप्नुयात्।
ब्रह्म वा नश्यति कथं तदेव ! वक्तु मर्हसि ॥३३

श्रीभगवानुवाच।

अपस्नानन्तु यो विप्रः कुर्याद् द्वादशवार्षिकम्।
स तेनैव शरीरेण शूद्रत्वं याति पाण्डव ! ॥३४
शूद्रग्रामे तथाप्येको वसेद्वा दशवार्षिकम्।
ग्रहोक्तमपि कुर्वीत शूद्रत्वं याति वै द्विजः ॥३५
यस्तु राजाश्रयेणैव जीवेद् द्वादशवार्षिकम्।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगो यदि ॥३६
वर्तते नगरे वाऽपि यो वा द्वादशमावसेत्।
स शूद्रत्वं व्रजेद्विप्रो नात्र कार्या विचारणा ॥३७
उत्पादयति यत्पुत्रं शूद्राया कामतोद्विजः।
तस्य कायगतं ब्रह्म स्वयमेव विनश्यति ॥३८
मद्यपस्त्रीमुखं मोहादास्वादयति यो द्विजः।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥३९
मैथुनं कुरुते यस्तु जिह्वायां ब्राह्मणो नृप ! ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥४०
यः सोमलतिकां विप्रः केवलं भक्षयेद् वृथा।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥४१
विप्रत्वं दुर्लभं प्राप्त वै मार्गैरेवमादिभिः।
विनाशयन्तु यत्तत्तु तज्ज्ञोवापि युधिष्ठिर ! ॥४२

तस्मात्सर्वप्रयत्नेन मत्प्रियार्थं युधिष्ठिर ! ।
जातिभ्रंशकरं कर्म न कुर्यात् सदृशो द्विजः ॥४३

इति गौतमीये वैष्णवधर्मशास्त्रे एकोनविंशतिरध्यायः ।

---

## विंशोऽध्यायः ।

### अथ तीर्थलक्षणवर्णनम् ।

युधिष्ठिर उवाच ।

देशान्तरे गते विप्रे संयुक्ते कालधर्मणा ।
शरीरनाशे संप्राप्ते वृथा विप्रप्रकल्पना ॥१

श्रीभगवानुवाच ।

श्रूयतामाहिताग्नेस्तु तथावृत्तस्य संक्रिया ।
पलाशवृन्दैः प्रतिमा कर्तव्या कल्पचोदिता ॥२
त्रीणि षष्टिशतान्याहुरस्थीन्यस्य नराधिप ! ।
तेषां विकल्पना कार्या यथाशास्त्रविनिश्चयम् ॥३
अशीत्यर्धं तु शिरसि ग्रीवा वा दश एव च ।
बाह्वोश्चापि शतं दद्यादङ्गुलीषु पुनर्दश ।
शिरसि त्रिशतं दद्याज्जाठरे वाऽपि विंशतिम् ॥४
वृषणे द्वादशार्धन्तु शिश्ने चाष्टार्द्धमेव च ।
दद्यात्तु शतमुर्वोस्तु षष्ठार्धं जानुजङ्घयोः ॥५

दश दद्याच्चरणयोरेषा प्रेतविकल्पना ।
एवं विकल्पनां कृत्वा कुर्याद्विप्रस्तु सत्क्रियाम् ॥६
युधिष्ठिर उवाच ।
विशेषतीर्थं सर्वेषां संशुद्धानामनुग्रहात् ।
भक्तानान्तारणार्थं वै वक्तुमर्हसि धर्मतः ॥७
श्रीभगवानुवाच ।
प्रव(वे)शं सर्वतीर्थानां सत्यङ्गायन्ति सामगाः ।
सत्यप्रवचनन्तीर्थं हिंसातीर्थं समुच्यते ॥८
दानन्तीर्थं दयातीर्थं शीलतीर्थं युधिष्ठिर ! ।
अर्थसन्तोषणन्तीर्थं नारीतीर्थं पतिव्रता ॥९
सन्तुष्टो ब्राह्मणस्तीर्थं ज्ञानं वै तीर्थमुच्यते ।
मद्भक्ताः सततं तीर्थं यतयस्तीर्थमुच्यते ॥१०
शरण्यः पुरुषस्तीर्थमन्नं तत्तीर्थमुच्यते ।
आतिथेयिः परन्तीर्थ मतिथीस्तीर्थमुच्यते ॥११
व्रतस्य धारणन्तीर्थ मार्जवन्तीर्थमुच्यते ।
देवशुश्रूषणन्तीर्थं गुरुशुश्रूषणन्तथा ॥१२
द्विजशुश्रूषणन्तीर्थं तीर्थं ज्ञानस्य धारणम् ।
दारसन्तोषणं तीर्थङ्कृतं सन्तीर्थमुच्यते ॥१३
ब्रह्मचर्यं परन्तीर्थं त्रेताग्निस्तीर्थमुच्यते ।
मूलधर्मः स विज्ञेय मनस्तत्रैव वा युतम् ॥१४
गच्छं स्तीर्थानि कौन्तेय ! धर्मोधर्मेण वर्तते ।
द्विविधन्तीर्थमित्याहुः स्थावरं जङ्गमन्तथा ॥१५

स्थावरञ्जङ्गमं श्रेष्ठं तत्त्वेज्ञानपरिग्रहात् ।
कर्मणा हि विशुद्धस्य पुरुपस्यैव भारत ! ॥१६
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते ।
गुरुतीर्थपरं ज्ञान मनस्तीर्थं न विद्यते ॥१७
ज्ञानतीर्थन्तपस्तीर्थं ब्रह्मतीर्थं सनातनम् ।
क्षमा तु परमन्तीर्थं सर्वतार्थेपु पाण्डव ! ॥१८
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
मानितोऽमानितोवापि पूजितोऽपूजितोऽपि वा ।
आक्रुष्टस्ताडितो वाऽपि क्षमावां स्तीर्थमुच्यते ॥१६
क्षमा दमः क्षमा दानं क्षमा सत्यं क्षमा तपः ।
क्षमा हिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः ॥२०
क्षमा दया क्षमा यज्ञः क्षमा धैर्ययुतं जगत् ।
क्षमावान् प्राप्नुयात् स्वर्गं क्षमावान् प्राप्नुयाद्यशः ॥२१
क्षमावान् प्राप्नुयान्मोक्षं क्षमावां स्तीर्थमुच्यते ॥२२

आत्मा नदी भारत ! पुण्यतीर्थं नत्वा तीर्थं सर्वतीर्थं प्रधानः ।
श्रुत्वा तीथ सर्वमात्मन्यथोच्चैः स्वर्गो मोक्षः सर्वमात्मन्यधीनम् ॥२३
आचारवक्त्रान्तरगात्रशोभिना सत्यप्रसन्नेन मनोहरेण ।
ज्ञानाम्बुना स्नाति च योहि नित्यं किन्तस्य भूयः सलिलेन कृत्यम् ॥२४

युधिष्ठिर उवाच ।

भगवन् ! सर्वपापघ्नं प्रायश्चित्तमनुत्तमम् ।
त्वद्भक्तस्य नरश्रेष्ठ ! मम वक्तुं त्वमर्हसि ॥२५

रहस्यमिदमत्यर्थं न श्राव्यं पापकर्मणाम्।
अवैष्णवानामश्राव्यं प्रायश्चित्तं ब्रवीमि ते ॥२६

वामनं ब्राह्मणं दृष्ट्वा मद्गतेनान्तरात्मना।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत् ॥२७

प्रदक्षिणन्तु त्रिः कुर्यात् पुनरष्टाक्षरेण तु।
तेन तुष्टो नरश्रेष्ठ ! तत्पापं क्षपयाम्यहम् ॥२८

पोत्रघृष्टां वराहस्य मृत्तिकां शिरसा वहन्।
प्राणायामशतं कृत्वा नरः पापैर्विमुच्यते ॥२६

दक्षिणावर्त्तशङ्खाद्वा कपिलाशृङ्गमेव च।
प्रातः स्नातो नदीं गत्वा मम सूक्तेन शंसतः ॥३०

सलिलेन तु यः स्नायात् सतिलेन रविग्रहे।
तस्य यत्सञ्चितं पापन्तत्क्षणादेव नश्यति ॥३१

मस्तकान्नि स्रुतैस्तोयैः कपिलाया युधिष्ठिर ! ।
गोमूत्रेणापि यः स्नायाद्रौहिंस्यान् ममवादिनः ॥३२

विप्रपादच्युतैर्वापि तोयैः पापं प्रणश्यति।
नमस्येयस्तु मद्भक्तया शिशुमारप्रजापतिम् ॥३३

चतुर्दशाङ्गयुक्तस्य तस्य पापं प्रणश्यति।
ततश्चतुर्दशाङ्गानि शृणु तस्य नराधिप ! ॥३४

शिरो धर्मो हनू ब्रह्म यज्ञमुत्तरदक्षिणौ।
हृदयन्तु भवेद्विष्णुर्हस्तौ स्यातान्तथाश्विनौ।
अग्निर्मध्यं भवेद्राजन् ! लिङ्गं संवत्सरो भवेत् ॥३५

मित्रावरुणकौ पादौ पुच्छमूलं हुताशनः ।
ततः पश्चाद्भवेदिन्द्रः ततः पश्चात्प्रजापतिः ॥३६

अभयश्च ततः पश्चात् स एव ध्रुवसंज्ञितः ।
एतान्यङ्गानि सर्वाणि शिशुमारप्रजापतेः ॥३७

पिबेत्तु पञ्चगव्यं यः पौर्णमास्यामुपोषितः ।
तस्य नश्यति तत्सर्वं यत्पापं पूर्वसंञ्चितम् ॥३८

अथव ब्रह्मकूर्चन्तु समन्त्रं तु पृथक् पृथक् ।
मासि मासि पिबेद्यस्तु तस्य पापं प्रणश्यति ॥३९

पात्रञ्च ब्रह्मकूर्चस्य शृणु मन्त्रञ्च भारत ! ।
पलाशं पद्मपत्रं वा ताम्रं वाथ हिरण्मयम् ॥४०

सादयित्वा तु गृह्णीयात्तत्तु पात्रमुदाहृतम् ।
गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ॥४१

आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ।
आज्यं शुक्रमसीत्येव देवस्येति कुशोदकम् ।
आपोहिष्ठेति संगृह्य यवचूर्णं यथाविधि ॥४२

ब्रह्मणे च तथाहुत्वा समिद्धे तु हुताशने ।
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥४३

उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु ।
महतापि स पापेन त्वचेवाहिर्विमुच्यते ॥४४

इन्द्रान इति यः पादं पठेद्यः संहितामिमाम् ।
अन्तर्जलेऽथवादित्ये तस्य पापं प्रणश्यति ॥४५

मम सूक्तं जपेद्यस्तु नित्यं मद्गतमानसः ।
न स पापेन लिप्येत पद्मपत्रमिवाम्भसा ॥४६

इति गौतमीये वैष्णवधर्मशास्त्रे रहस्यप्रायश्चित्तं नाम विंशोऽध्यायः ।

---

## एकविंशोऽध्यायः ।

### अथ भक्त्यार्चन विधिवर्णनम् ।

युधिष्ठिर उवाच ।

कीदृशा ब्राह्मणाः पुण्या भावसिद्धाः सुरेश्वर ! ।
तत्कर्म सफलं वेति कथयस्व ममाच्युत ! ॥१

श्रीभगवानुवाच ।

शृणु पाण्डव ! तत्सव ब्राह्मणानां यथाक्रमम् ।
सफलं निष्फलञ्चेति तेषां कर्म ब्रवीमि ते ॥२
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।
वल्कलाजिनसर्वांशो व्रतचर्याभिषेचनम् ॥३
अग्निहोत्रं वनेवासः स्वाध्यायो ध्यानसंस्क्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः ॥४
अग्निहोत्रं वृथा राजन् ! वृथा वेदास्तथैव च ।
शीलो देवास्तु तुष्यन्ति श्रूयतां तत्र कारणम् ॥५

क्षान्ती दान्ती जितक्रोधी जितात्मानं जितेन्द्रियम्।
तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः ॥६
अग्निहोत्रव्रतपरान् स्वाधायनिरतान शुचीन्।
उपवासरतान दान्ता स्तान्देवा ब्राह्मणा विदुः ॥७
न जातिः पूज्यते राजन! गुणाः कल्याणकारकाः।
चण्डालमपि वृत्तस्थं तन्देवा ब्राह्मणं विदुः ॥८
मनः शौचं कर्मशौचं कुलशौचञ्च भारत!।
शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् ॥६
पञ्चस्वेषु च शौचेषु धृतिशौचं विशिष्यते।
हृदयस्य तु शौचेन स्वर्गं गच्छन्ति मानवाः ॥१०
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रये।
वर्णसङ्करकर्ता च ब्राह्मणो वृपलैः समः ॥११
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः।
विकर्मस्थोऽपि कौन्तेय! स वै वपल उच्यते ॥१२
वृषो धर्मो हि विज्ञेयस्तस्य यः कुरुते लयम्।
विपदन्तं विदुर्देवा निन्दितं श्वपचादपि ॥१३
स्तुतिभिः ब्रह्मपूर्वाभिर्यश्चन्द्रं स्तौति मान्नृप!।
न च मां स्तौति पापात्मा स मामाक्रोशते भृशम् ॥१४
श्वच्छितौ च यथा क्षीरं ब्रह्म वै वृपले तथा।
अदुष्टो दुष्टतामेति शुना स्पृष्टं हविर्यथा ॥१५
अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरम्।
धमशास्त्रपुराणानि विद्या ह्येताश्चतुर्दश ॥१६

यान्युक्तानि मया सम्यक् विद्याजन्मानि भारत ! ।
उत्पन्नानि पवित्राणि पावनार्थन्तथैव च ॥१७
तस्मात्तानि न शूद्राय स्प्रष्टव्यानि युधिष्ठिर ! ।
सर्वं तच्छूद्रसंस्पृष्टं न पवित्रं न संशयः ॥१८
लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत ! ।
श्वा शूद्रश्च श्वपाकश्चेत्यपवित्राणि पाण्डव ! ॥१९
देवलः शूककीटो नृप उदक्या वृषलीपतिः ।
पञ्चैते स्युरमेध्याश्च न स्प्रष्टव्याः कथञ्चन ॥२०
स्पृष्ट्वैतान्यष्ट व विप्रः सचैलो जलमाविशेत् ।
मद्भक्तान् शूद्रसामान्यादवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटि नराधमाः ॥२१
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमन्य पतत्येव नरके रौरवे नरः ॥२२
मम मद्भक्तभक्तेषु सम्मतिर्ह्यधिका भवेत् ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥२३
कीटपक्षिमृगाणाञ्च मयि सन्न्यस्तचेतसाम् ।
ऊर्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनान्नृप ! ॥२४
पत्रं वाप्यथवा पुष्पं फलं वा तोयमेव वा ।
ददाति मम शूद्रोऽपि शिरसा धारयामि तम् ॥२५
विप्रानेवार्चयेद्भक्त्या शूद्रः प्राणैश्च मत्प्रियः ।
तेषान्तेनैव रूपेण पूजां गृह्णामि भारत ! ॥२६

वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम ।
मामर्चयन्ति ये विप्राः सायुज्यं यान्ति ते मम ॥२७
परित्राणाय भक्तानां प्रादुर्भावः कृतोमया ।
प्रादुर्भावाकृतिः काचिदर्चयेत्तां युधिष्ठिर ! ।
आसामन्यातमं मूर्तिं यो भक्त्या च समर्चति ॥२८
तेनैव परितुष्टोऽहं भविष्यामि न संशयः ।
मृदा च मणिरत्नैश्च ताम्रेण रजतेन वा ॥२९
कृत्वा प्रतिकृतिं कुर्यादर्चनां काञ्चनेन वा ।
पुण्यं दशगुणं दद्यादेतेपामुत्तमोत्तमम ॥३०
जयकामोऽर्चयेद्राजा विद्याकामो द्विजोत्तमः ।
वैश्योऽपि धनकामस्तु शूद्रः पुण्यफलप्रियः ॥३१
सर्वकामाः स्त्रियो वाऽपि सर्वान् कामानवाप्नुयुः ॥३२

इति गौतमीये वैष्णवधर्मशास्त्रे भक्तयार्चनविधिर्नाम
एकविंशोऽध्यायः ।

---

द्वाविंशोऽध्यायः ।

अथ शूद्रधर्मवर्णनम् ।

युधिष्ठिर उवाच ।

कीदृशानान्तु शूद्राणां नानुगृह्णासि वार्चनम ।
उद्वेग स्तव कस्मात्तु तद् ब्रवीहि सुरोत्तम ! ॥१

श्रीभगवानुवाच ।

अव्रतेनाप्यभक्तेन स्पृष्ट्वा शूद्रेण यार्चना ।
तां वर्जयामि यत्नेन श्वपाकविहितामिव ॥२
त्रैलोक्येऽस्मिन्निरुद्विग्नो न बिभेमि कुतश्चन ।
दिवा वा यदि वा रात्रा वुद्विग्नं कुरु लाघवान् ॥३
न भवेद्देवदैत्येभ्यो रक्षोभ्यश्चैव यो नृप ! ।
शूद्रवक्त्रार्चिताद्वेदाद्भयन्तु सुमहन्मम ।
तस्मात्सप्रणवं शूद्रोमन्त्रं मे नैव कीर्तयेत् ॥४
प्रणवं हि परं ब्रह्म नित्यं ब्रह्मविदो विदुः ।
द्विजशुश्रूषणं धर्मं शूद्राणां भक्तितो मयि ॥५
ते न गच्छन्ति वै स्वर्गं चिन्तयन्तो हि मां सदा ।
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ॥६
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ।
रागो द्वेषश्च मोहश्च पारुष्यञ्चानृशंसता ॥७
शाम्यञ्च दीर्घवैरत्व मतिमान मनार्जवम् ।
अनृतञ्चापवादञ्च पैशुन्यमतिलोभता ॥८
हिंसा स्तेया मृषावादो वञ्चना रोपलोलुता ।
अबुद्धिता च नास्तिक्यं भयमालस्यमेव च ॥९
अशौचत्वञ्चाकृतज्ञत्वं दम्भता स्तम्भ एव च ।
निकृतिश्चाप्यवज्ञानं ज्ञातके शूद्रमाविशत् ॥१०
दृष्ट्वा पितामहः शूद्रमभिभूतन्तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणान्तु प्रयुक्तवान् ॥११

नश्यन्ति तामसा भावाः शूद्रस्य मयि भक्तितः ।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥१२
तदहं भक्तिदत्तं यन्मूर्ध्ना गृह्णामि रुद्रतः ।
चण्डालो वा प्रियः कश्चित् सर्वपापसमन्वितः ॥१३
यदि मां सततं ध्यायेत् स पापेभ्यः प्रमुच्यते ।
विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ॥१४
मयि भक्तिन्न कुर्वन्ति चण्डालसदृशा हि ते ।
वृथा दत्तं वृथा जप्तं वृथाचेष्टं वृथाहुतम् ॥१५
वृथा तीर्थं तु दत्तं स्याद् यो न भक्तो मयि द्विजः ।
यत्कृतञ्च हुतञ्चापि यदिष्टं दत्तमेव वा ॥१६
अवैष्णवोक्तं तत्सर्वं राक्षसा एव भुञ्जते ।
स्थावरो जङ्गमो वाऽपि सर्वभूतेषु पाण्डव ! ॥१७
समत्वेन दयां कुर्यान्मद्भक्तो मित्रशत्रुषु ।
आनृशंस्य महिंसा च दया सत्यं तथाऽऽर्जवम् ॥१८
अद्रोहं मम भक्तानाम्भूतानामभयन्नृप ! ।
इत्येवमादयो ब्रूयान्मद्भक्त्या श्रद्धयान्वितः ॥१९
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि पार्थिव ! ।
किं पुनर्ये समर्चन्ति मद्भक्तविधि पूर्वकम् ॥२०
मद्भक्ता मद्गतप्राणाः स्तुवन्ति ये तु मां सदा ।
बहुवर्षसहस्राणि तपस्तप्यति यो नरः ॥२१
नासौ तत्पदमाप्नोति मद्भक्तैर्यदवाप्यते ।
मामेव तस्माद्राजर्षे ! ध्याहि नित्यमतन्द्रितः ॥२२

अवाप्स्यसि ततः सिद्धिं निश्चयं हि अनुत्तमाम्।
अपार्थकं प्रभापन्ते शूद्रा भागवता इति ॥२३
न शूद्रा भगवद्भक्ता विप्रा भागवता स्मृताः।
द्वादशाक्षरतत्त्वज्ञ श्चतुर्व्यूहविधानवित् ॥२४
अच्छिद्रः पञ्चकालज्ञ सर्वे भागवताः स्मृताः।
ऋग्वेद यजुषो होता यजुषाध्वर्युरेव च ॥२५
सामवेदेन चोद्गाता पुण्येनाभिस्तुवन्ति माम्।
अथर्वशिरसा चैव नित्यमाथर्वणं द्विजाः ॥२६
स्तुवन्ति सततं ये च ते हि भागवता स्मृताः।
वेदाधीनाः सदा यज्ञा यज्ञाधीनाश्च देवताः ॥२७
देवता ब्राह्मणाधीना स्तस्माद्विप्रास्तु देवताः।
अनाश्रिताश्रयन्नास्ति मुख्यमाश्रय माश्रयेत् ॥२८
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माण माश्रितः।
ब्रह्मा मामाश्रितो राजन्नाहं किञ्चिदुपाश्रितः ॥२९
ममाश्रयो न किञ्चित्तु सर्वेषा माश्रयोऽस्म्यहम्।
एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ॥३०
धर्मप्रिय ! ब्रुवे राजन्नित्यमेव समाचर।
इदं पवित्र माख्यानं पुण्यं वेदेन सम्मितम् ॥३१
यः पठेन्मामकं धर्म महन्यहनि भारत !।
धर्मोऽपि वर्धते तस्य बुद्धिश्चापि प्रसीदति।
पापक्षय मुपैत्येव कल्याणञ्च विवर्द्धते ॥३२

एतत्पुण्यं पवित्रञ्च पापनाशन मुत्तमम् ।
श्रोतव्यं श्रद्धया युक्तै र्मद्भक्तैश्च विशेषतः ॥३३
श्रावयेद्यस्त्विदं भक्त्या प्रयतोऽथ शृणोति वा ।
स गच्छेन्मम सायुज्यं नात्र कार्या विचारणा ॥३४
यश्चेदं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥३५

वैशम्पायन उवाच ।

प्रहृष्टः सुमना भूत्वा चिन्तयेताद्भुतां कथाम् ॥३६
पूजयामास गोविन्दं धर्मपुत्रः पुनः पुनः ।
देवा ब्रह्मर्षयः सिद्धा गन्धर्वाप्सरसस्तथा ॥३७
भूता यक्षा ग्रहाश्चैव गुह्यका भुजगा स्तथा ।
बालखिल्या महात्मानो मुनय स्तत्त्वदर्शिनः ॥३८
तथा भागवताश्चैव पञ्चकालरता स्तथा ।
कौतूहलसमायुक्ता भगवद्भक्तिमागताः ॥३९
श्रुत्वा तु परमं पुण्यं वैष्णवं धर्मशासनम् ।
विमुक्तपापाः पूतास्ते संपूना स्तत्क्षणेन तु ॥४०
प्रणम्य शिरसा विष्णुं प्रसादसुमुखेक्षणः ।
यथागतं ययुर्देवाः सिद्धाश्चर्षिगणैः सह ॥४१
गतेषु तेषु सर्वेषु केशवः केशिहा तदा ।
विसृज्य पाण्डवान् सर्वान प्रणतान् द्वारकां ययौ ॥४२
ततः प्रणम्य गोविन्दं तदा प्रभृति पाण्डवाः ।
कपिलाद्यानि दानानि दश विष्णुपरायणाः ॥४३

मधुसूदनवाक्यानि स्मृत्वा चैव पुनः पुनः ।
मनसा पूजयामासु र्हृदिस्थं पञ्च पाण्डवाः ॥४४
युधिष्ठिरोऽपि धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्त स्तन्मना युक्त स्तद्याजी तत्परोऽभवत् ॥४५
एवमेतत्पुरावृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन् ! पवित्रं पापनाशनम ॥४६
चिन्तयस्व सदा विष्णु मप्रमत्तः कुरूद्वह ! ।
लोका गच्छन्ति नान्येन तद्विष्णोः परमं पदम् ॥४७

इति वृद्धगौतमीये वैष्णवधर्मशास्त्रे द्वाविंशतितमोऽध्यायः ।

समाप्ताचेयं वृद्धगौतमस्मृतिः ।

ॐ तत्सत् ।



अथ

# *॥ यमस्मृतिः ॥*

॥ श्रीगणेशायनमः ॥

.........

अथ प्रायश्चित्तवर्णनम ।

अथातो ह्यस्य धर्मस्य प्रायश्चित्ताभिधायकम ।
चतुर्णामपि वर्णानां धर्मशास्त्रं प्रवर्त्तते ॥१
जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशनच्युताः ।
विषप्रपतनप्रायशस्त्रघातच्युताश्च ये ॥२
सर्वे ते प्रत्यवसिताः सर्वलोकवहिष्कृताः ।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा ॥३
उभयावसिताः पापा येऽग्राम्यशरणच्युताः ।
इन्दुद्वयेन शुध्यन्ति दत्त्वा धेनुं तथा वृषम् ॥४
गोब्राह्मणहनं दग्धा मृतमुद्बन्धनेन च ।
पाशं तस्यैव छित्त्वा तु तप्तकृच्छ्रं समाचरेत् ॥५

कृमिभिर्व्रणसंभूतैर्मक्षिकाश्चोपधातितः ।
कृच्छार्द्धं संप्रकुर्वीत शक्त्या दद्यात्तु दक्षिणाम् ॥६
ब्राह्मणस्य मलद्वारे पूयशोणितसम्भवे ।
कृमिभुक्तव्रणे मौञ्जीहोमेन स विशुध्यति ॥७
यः क्षत्रियस्तथा वैश्यः शूद्रश्चाप्यनुलोमजः ।
ज्ञात्वा भुङ्क्ते विशेषेण चरेच्चान्द्रायणं व्रतम् ॥८
कुक्कुटाण्डप्रमाणन्तु ग्रामञ्च परिकल्पयेत् ।
अन्यथाहारदोषेण न स तत्र विशुध्यति ॥९
एकैकं वर्द्धयेच्छुक्ले कृष्णपक्षे च ह्रासयेत् ।
अमावास्यां न भुञ्जीत एष चान्द्रायणोविधिः ॥१०
सुरान्यमद्यपानेन गोमांसभक्षणे कृते ।
तप्तकृच्छ्रञ्चरेद्विप्रस्यत्पापस्तु प्रणश्यति ॥११
प्रायश्चित्ते ह्युपक्रान्ते कर्ता यदि विपद्यते ।
पूतस्तदहरेवापि इहलोके परत्र च ॥१२
यावदेकः पृथक् द्रव्यः प्रायश्चित्तेन शुध्यति ।
अपरास्ते न च स्पृश्यास्तेऽपि सर्वे विगर्हिताः ॥१३
अभोज्याश्चाप्रतिग्राह्या असंपाठ्या विवाहिनः ।
पूयन्तेऽनुव्रते चीर्णे सर्वे ते ऋक्थभागिनः ॥१४
ऊनैकादशवर्षस्य पञ्चवर्षात् परस्य च ।
प्रायश्चित्तं चरेद् भ्राता पिता वान्योऽपि बान्धवः ॥१५
अतोबालतरस्यापि नापराधो न पातकम् ।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥१६

अशीतीर्यस्य वर्षाणि बालोवाप्यूनषोडशः।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियोरोगिण एव च ॥१७
अस्तंगतो यदा सूर्यश्चाण्डालरजकस्त्रियः।
संस्पृष्टास्तु तदा कैश्चिन प्रायश्चित्तं कथं भवेत ॥१८
जातरूपं सुवर्णञ्च दिवानीतं च यज्जलम।
तेन स्नात्वा च पीत्वा च सर्वे ते शुचयः स्मृताः ॥१६
दासनापितगोपालकुलमित्रार्द्धसीरिणः।
एते शूद्रेषु भोज्यान्ना यश्चात्मनं निवेदयेत ॥२०
अन्नं शूद्रस्य भोज्यं वा ये भुञ्जन्त्यबुधा नराः।
प्रायश्चित्तं तथा प्राप्तं चरेच्चान्द्रायणं व्रतम ॥२१
प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिबति शोणितम ॥२२
माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम ॥२३
यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥२४
वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजाः।
शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला ॥२५
यत् करोत्येकरात्रेण वृषलीसेवनाद् द्विजः।
तद्भैक्षभुग् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥२६
स्ववृषं या परित्यज्यान्यवृषेण वृहस्पतिः।
वृषली सा तु विज्ञेया न शूद्री वृषली भवेत ॥७२

वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्याञ्चैव प्रसूतस्य निष्कृतिर्नैव विद्यते ॥२८
श्वित्रकुष्ठी तथा चैव कुनखी श्यावदन्तकः ।
रोगी हीनातिरिक्ताङ्गः पिशुनोमत्सरस्तथा ॥२९
दुर्भगो हि तथा पण्डः पाषण्डी वेदनिन्दकः ।
हैतुकः शूद्रयाजी च अयाज्यानाञ्च याजकः ॥३०
नित्यं प्रतिग्रहे लुब्धोयाचकोविषयात्मकः ।
श्यावदन्तोऽथ वैद्यश्च असदालापकस्तथा ॥३१
एते श्राद्धे च दाने च वर्जनीयाः प्रयत्नतः ॥३२
ततोदेवलकश्चैव भृतकोवेदविक्रयी ।
एते वर्ज्याः प्रयत्नेन एतद्याम्वतिरब्रवीत् ॥३३
एतान्नियोजयेद्यस्तु हव्ये कव्ये च कर्मणि ।
निराशाः पितरस्तस्य यान्ति देवामहर्षिभिः ॥३४
अग्रे माहिषिकं दृष्ट्वा मध्ये तु वृषलीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरोगताः ॥३५
महिषीत्युच्यते भार्या या चैव व्यभिचारिणी ।
तान् दोषान् क्षमते यस्तु स वै माहिषिकः स्मृतः ॥३६
समार्घन्तु समुद्धृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिकोनाम ब्रह्मवादिषु गर्हितः ॥३७
यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः ।
अश्नन्ति पितरस्तावद्यावन्नोक्ता हविर्गुणाः ॥३८

हविर्गुणा न वक्तव्याः पितरोयत्र तर्पिताः।
पितृभि स्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः॥३९
यावतो ग्रसते ग्रासान् हव्यकव्येषु मन्त्रवित्।
तावतोग्रसते पिण्डान् शरीरे ब्रह्मणः पिता॥४०
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः।
उपोष्य रजमीमेकां पञ्चगव्येन शुध्यति॥४१
अनुच्छिष्टेन संस्पृष्टे स्नानमात्रं विधीयते।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत्॥४२
यावद्विप्रा न पूज्यन्ते सम्भोजनहिरण्यकैः।
तावच्चीर्णव्रतस्यापि तत्पापं न प्रणश्यति॥४३
यद्वेष्टितं काकबलाकचिल्लैरमेध्यलिप्तं तु भवेच्छरीरम्।
गात्रे मुखे च प्रविशेच्च सम्यक् स्नानेन लेपोपहतस्य शुद्धिः॥४४
ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
ऊर्ध्वं स्नानमधःशौचं तन्मात्रेणैव शुध्यति॥४५
अभक्ष्याणामपेयानामलेह्यानाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत्॥४६
पद्मोदुम्बरविल्वाश्च कुशाश्वत्थपलाशकाः।
एतेषामुदकं पीत्वा षड्रात्रेणैव शुध्यति॥४७
यः प्रत्यवसितोविप्रः प्रव्रज्याग्निनिरापदि।
अनाहिताग्निर्वर्त्तेत गृहित्वञ्च चिकीर्षति॥४८
आचरेत्त्रीणि कृच्छ्राणि चरेच्चान्द्रायणानि च।
जातकर्मादिभिः प्रोक्तैः पुनः संस्कारमर्हति॥४९

तूलिका उपधानानि पुष्पं रक्ताम्बराणि च।
शोषयित्वा प्रतापेन प्रोक्षयित्वा शुचिर्भवेत् ॥५०
देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थाञ्च ज्ञात्वा धर्मं समाचरेत् ॥५१
रथ्याकर्दमतोयानि नावायस तृणानि च।
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ॥५२
आतुरे स्नानसम्प्राप्ते दशकृत्वोह्यनातुरः।
स्नात्वा स्नात्वा स्पृशेत्तन्तु ततः शुध्येत आतुरः ॥५३
रजकश्चर्मकारश्च नटोवुरुड् एव च।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥५४
एषां गत्वा तु योषां वै तप्तकृच्छ्रं समाचरेत् ॥५५
स्त्रीणां रजस्वलानान्तु स्पृष्टास्पृष्टि यदा भवेत्।
प्रायश्चित्तं कथं तासां वर्णे वर्णे विधीयते ॥५६
स्पृष्ट्वा रजस्वलां यान्तु सगोत्राञ्च सभर्त्तृकाम्।
कामादकामतो वापि स्नात्वा कालेन शुध्यति ॥५७
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा पादेन शुध्यति ॥५८
स्पृष्ट्वा रजस्वलान्योन्यं क्षत्रिया शद्रजा तथा।
पादहीनं चरेत् पूर्वा पादार्द्धन्तु तथोत्तरा ॥५६
स्पृष्ट्वा रजस्वलान्योन्यं वैश्यजा शूद्रजा तथा।
कृच्छ्रपादं चरेत् पूर्वा तदर्द्धन्तु तथोत्तरा ॥६०

स्पृष्टा रजस्वला चैव श्वाजजम्बूकरासभैः।
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ॥६१

स्पृष्टा रजस्वला कैश्चिच्चाण्डालैररजस्वला।
प्राजापत्येन कृच्छ्रेण प्राणायामशतेन च ॥६२

विप्रः स्पृष्टोनिशायाञ्च उदक्या पतितेन च।
दिवानीतेन तोयेन स्नापयेच्चाग्निसन्निधौ ॥६३

दिवार्क रश्मिसंस्पृष्टं रात्रौ नक्षत्ररश्मिभिः।
सन्ध्योभयोश्च सन्ध्यायाः पवित्रं सर्वदा जलम् ॥६४

अपः करनखस्पृष्टाः पिबेदाचमने द्विजः।
सुरां पिबति सुव्यक्तं यमस्य वचनं यथा ॥६५

खातवाप्योस्तथा कूपे पाषाणैः शस्त्रघातनैः।
यष्ट्या तु घातने चैव मृत्पिण्डे गोकुलेन च ॥६६

रोधने बन्धने चैव स्थापिते पुष्कले तथा।
काष्ठे वनस्पतौ रोधसङ्कटे रज्जुवस्त्रयोः ॥६७

एतत्ते कथितं सर्वं प्रमादस्थानमुत्तमम्।
यत्र यत्र मृता गावः प्रायश्चित्तं समाचरेत् ॥६८

दारुणा घातने कृच्छ्रं पाषाणैर्द्विगुणं भवेत्।
अर्द्धं कृच्छ्रन्तु खाते स्यात् पादकृच्छ्रन्तु पादपे ॥६९

शस्त्रघाते त्रिकृच्छ्राणि यष्टिघाते द्वयं चरेत् ॥७०

कृच्छ्रेण वस्त्रघातेऽपि गोघ्नश्चेति विशुध्यति।
योवर्त्तयति गोमध्ये नदीकान्तारमन्तिके ॥७१

रोमाणि प्रथमे पादे द्वितीये श्मश्रु वापयेत् ।
तृतीये तु शिखा धार्या चतुर्थे सशिखं वपेत् ॥७२
न स्त्रीणां वपनं कुर्यात् न च सा गामनुव्रजेत् ।
नच रात्रौ वसेद्गोष्ठे न कुर्याद् वैदिकीं श्रुतिम् ॥७३
सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम ।
एवमेव तु नारीणां शिरसो वपनं स्मृतम ॥७४
मृतकेन तु जातेन उभयोः सूतकं भवेत् ।
पातकेन तु लिप्तेन नास्य सूतकिता भवेत् ॥७५
चत्वारि खलु कर्माणि सन्ध्याकाले विवर्जयेत ।
आहारं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकम ॥७६
आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुने ।
निद्रा श्रियो निवर्त्तन्ते स्वाध्याये मरणं ध्रुवम ॥७७
अज्ञानात्तु द्विजश्रेष्ठ ! वर्णानां हितकाम्यया ।
मया प्रोक्तमिदं शास्त्रं सावधानोऽवधारय ॥७८

इति यमप्रोक्तं धर्मशास्त्रं समाप्तम ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

॥ अथ ॥

# *॥ लघुयमस्मृतिः ॥*

—:।:※:※:※:।:—

॥ श्रीगणेशाय नमः ॥

— ※::※:—

अथ नानाविध प्रायश्चित्तवर्णनम् ।

श्रुत्यस्मृत्युदितं धर्मं वर्णानामनुपूर्वशः ।
प्राब्रवीदृषिभिः पृष्टो मुनीनामग्रणीर्यमः ॥१

यो भुञ्जानोऽशुचिर्वाऽपि चण्डालं पतितं स्पृशेत् ।
क्रोधादज्ञानतो वाऽपि तस्य वक्ष्यामि निष्कृतिम् ॥२

षड्रात्रं वा त्रिरात्रं वा यथासंख्यं समाचरेत् ।
स्नात्वा त्रिषवणं विप्रः पञ्चगव्येन शुध्यति ॥३

भुञ्जानस्य तु विप्रस्य कदाचित्स्रवते गुदम् ।
उच्छिष्टत्वेऽशुचित्वे च तस्य शौचं विनिर्दिशेत् ॥४

पूर्वं कृत्वा द्विजः शौचं पश्चादप उपस्पृशेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥५
निगिरन्यदि मेहेत भुक्त्वा वा मेहने कृते ।
अहोरात्रोषितो भूत्वा जुहुयात्सर्पिषाऽऽहुतीः ॥६
यदा भोजनकाले स्यादशुचिर्ब्राह्मणः क्वचित् ।
भूमौ निधाय तद्ग्रासं स्नात्वा शुद्धिमवाप्नुयात् ॥७
भक्षयित्वा तु तद्ग्रासमुपवासेन शुध्यति ।
अशित्वा चैव तत्सर्वं त्रिरात्रेणैव शुध्यति ॥८
अश्नतश्चेद्विरेकः स्यादस्वस्थस्त्रिशतं जपेत् ।
स्वस्थस्त्रीणि सहस्राणि गायत्र्याः शोधनं परम् ॥९
चण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे तु कृते द्विजः ।
त्रिरात्रं तु प्रकुर्वीत भुक्त्वोच्छिष्टः षडाचरेत् ॥१०
उदक्यां सूतिकां वाऽपि संस्पृशेदन्त्यजो यदि ।
त्रिरात्रेण विशुद्धिः स्यादिति शातातपोऽब्रवीत् ॥११
रजस्वला तु संस्पृष्टा श्वमातङ्गादिवायसैः ।
निराहारा शुचिस्तिष्ठेत्कालस्नानेन शुध्यति ॥१२
रजस्वले यदा नार्यावन्योन्यं स्पृशते(तः) क्वचित् ।
शुध्यतः पञ्चगव्येन ब्रह्मकूर्चेन चोपरि ॥१३
उच्छिष्टेन च संस्पृष्टा कदाचित्स्त्री रजस्वला ।
कृच्छ्रेण शुद्धिमाप्नोति शूद्रा दानोपवासतः ॥१४
अनुच्छिष्टेन संस्पृष्टे स्नानं येन विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥१५

ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु स्त्रियं गत्वा शौचं मूत्रपुरीषवत् ॥१६
उभावप्यशुची स्यातां ं नी शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥१७
भर्तुः शरीरशुश्रूषां दौरात्म्यादप्रकुर्वती ।
दण्ड्या द्वादशकं नारी वर्षं त्याज्या धनं विना ॥१८
त्यजन्तोऽपतितान्बन्धून्दण्ड्या उत्तमसाहसम् ।
पिता हि पतितः कामं न तु माता कदाचन ॥१९
आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपक्रमैः ।
मृतोऽमेध्येन लेप्तव्यो जीवतो द्विशतं दमः ॥२०
दण्ड्यास्तत्पुत्रमित्राणि प्रत्येकं पणिकं दमम् ।
प्रायश्चित्तं ततः कुर्युर्यथाशास्त्रप्रचोदितम ॥२१
जलाद्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपतनप्रायशस्त्रघातहताश्च ये ॥२२
नवैते प्रत्यवसिताः सर्वलोकबहिष्कृताः ।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा ॥२३
उभयावसितः पापः श्यामाच्छबलकाच्च्युतः ।
चान्द्रायणाभ्यां शुध्येत दत्त्वा धेनुं तथा वृषम् ॥२४
श्वशृगालप्लवङ्गाद्यैर्मानुषैश्च रतिं विना ।
दष्टः स्नात्वा शुचिः सद्यो दिवा संध्यासु रात्रिषु ॥२५
अज्ञानाद्ब्राह्मणो भुक्त्वा चण्डालान्नं कदाचन ।
गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥२६

गोब्राह्मणगृहं दग्ध्वा मृतं चो(तश्चो)द्बन्धनादिना ।
पाशांश्छित्त्वा तथा तस्य कृच्छ्रमेकं चरेद्द्विजः ॥२७
चण्डालपुक्कसानां च भुक्त्वा गत्वा च योषितम् ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥२८
कापालिकान्नभोक्तॄणां तन्नारीगामिनां(णां) तथा ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥२९
अगम्यागमने विप्रो मद्यगोमांसभक्षणे ।
तप्तकृच्छ्रपरिक्षिप्तो मौर्वी(ञ्जी)होमेन शुध्यति ॥३०
महापातककर्तारश्चत्वारोऽप्यविशेषतः ।
अग्निं प्रविश्य शुध्यन्ति स्थित्वा वा महति क्रतौ ॥३१
रहस्यकरणेऽप्येवं मासमभ्यस्य पूरुषः ।
अघमर्षणसूक्तं वा शुध्येदन्तर्जले स्थितः ॥३२
रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥३३
भुक्त्वा चैषां स्त्रियो गत्वा पीत्वाऽपः प्रतिगृह्य च ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥३४
मातरं गुरुपत्नीं च स्वसृदुहितरौ स्नुषाम् ।
गत्वैताः प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥३५
राज्ञां(ज्ञीं) प्रव्रजितां धात्रीं तथा वर्णोत्तमामपि ।
कृच्छ्रद्वयं प्रकुर्वीत सगोत्रामभिगम्य च ॥३६
अन्यासु पितृगोत्रासु मातृगोत्रगतास्वपि ।
परदारेषु सर्वेषु कृच्छ्रं सांतपनं चरेत् ॥३७

वेश्याभिगमने पापं व्यपोहन्ति द्विजातयः ।
पीत्वा सकृत्सुतप्तं च पञ्चरात्रं कुशोदकम् ॥३८
गुरुतल्पव्रतं केचित्केचिद्ब्रह्महणो व्रतम् ।
गोघ्नस्य केचिदिच्छन्ति केचिच्चैवावकीर्णिनः ॥३९
दण्डादूर्ध्वप्रहारेण यस्तु गां विनिपातयेत् ।
द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विनिर्दिशेत् ॥४०
अङ्गुष्ठमात्रस्थूलस्तु बाहुमात्रप्रमाणकः ।
साद्रश्च सपलाशश्च गोदण्डः परिकीर्तितः ॥४१
गवां निपातने चैव गर्भोऽपि संपतेद्यदि ।
एकैकशश्चरेत्कृच्छ्रं यथापूर्वं तथा पुनः ॥४२
पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसंभवे ।
पादोनं कृच्छ्रमाचष्टे हत्वा गर्भमचेतनम् ॥४३
अङ्गप्रत्यङ्गसंपूर्णे गर्भे रेतःसमन्विते ।
एकैकशश्चरेत्कृच्छ्रमेषा गोघ्नस्य निष्कृतिः ॥४४
बन्धने रोधने चैव पाषाणे वा गवां रुजा ।
संपद्यते चेन्मरणं निमित्ती नैव लिप्यते ॥४५
मूर्छितः पतितो वाऽपि दण्डेनाभिहतस्तथा ।
उत्थाय षट्पदं गच्छेत्सप्त पञ्च दशापि वा ॥४६
ग्रासं वा यदि गृह्णीयात्तोयं वाऽपि पिबेद्यदि ।
पूर्वव्याधिप्रनष्टानां प्रायश्चित्तं न विद्यते ॥४७
काष्ठलोष्टाश्मभिर्गावः शस्त्रैर्वा निहता यदि ।
प्रायश्चित्तं कथं तत्र शास्त्रे शास्त्रे निगद्यते ॥४८

काष्ठे सांतपनं कुर्यात्प्राजापत्यं तु लोष्टके ।
तप्तकृच्छ्रं तु पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम् ॥४६
औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु तु ।
दीयमाने विपत्तिः स्यात्प्रायश्चित्तं न विद्यते ॥५०
तैलभैषज्यपाने च भेषजानां च भक्षणे ।
निःशल्यकरणे चैव प्रायश्चित्तं न विद्यते ॥५१
वत्सानां कण्ठवन्धेन क्रियया भेषजेन तु ।
सायं संगोपनार्थं च न दोषो रोधबन्धयोः ॥५२
पादे चैवास्य रोमाणि द्विपादे श्मश्रु केवलम् ।
त्रिपादे तु शिखावर्जं मूले सर्वं समाचरेत् ॥५३
सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ।
एवमेव हि नारीणां मुण्डमुण्डापनं स्मृतम् ॥५४
न स्त्रिया वपनं कार्यं न च वीरासनं तथा ।
न च गोष्ठे निवासं च (सश्च) न गच्छन्तीमनुव्रजेत् ॥५५
राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
अकृत्वा वपनं तेषां प्रायश्चित्तं विनिर्दिशेत् ॥५६
केशानां रक्षणार्थं च द्विगुणं व्रतमादिशेत् ।
द्विगुणं तु व्रते चीर्णे द्विगुणैव तु दक्षिणा ॥५७
द्विगुणं चेन्न दत्तं च केशांश्च परिरक्षयेत् ।
पापं न क्षीयते हन्तुर्दाता च नरकं व्रजेत् ॥५८
अश्रौतस्मार्तविहितं प्रायश्चित्तं वदन्ति ये ।
तान्धर्मविघ्नकर्तॄंश्च राजा दण्डेन पीडयेत् ॥५६

न चेत्तान्पीडयेद्राजा कथंचित्काममोहितः ।
तत्पापं शतधा भूत्वा तमेव परिसर्पति ॥६०
प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ।
विंशतिं गा वृषं चैव दद्यात्तेषां च दक्षिणाम् ॥६१
कृमिभिर्व्रणसंभूतैर्मक्षिकाभिश्च पातितैः ।
कृच्छ्रार्धं संप्रकुर्वीत शक्त्या दद्याच्च दक्षिणाम् ॥६२
प्रायश्चित्तं च कृत्वा वै भोजयित्वा द्विजोत्तमान् ।
सुवर्णमाषकं दद्यात्ततः शुद्धिर्विधीयते ॥६३
चण्डालश्वपचैः स्पृष्टे निशि स्नानं विधीयते ।
न वसेत्तत्र रात्रौ तु सद्यः स्नानेन शुध्यति ॥६४
अथ वसेद्यदा रात्रावज्ञानादविचक्षणः ।
तदा तस्य तु तत्पापं शतधा परिवर्तते ॥६५
उद्गच्छन्ति हि नक्षत्राण्युपरिष्टाच्च ये ग्रहाः ।
संस्पृष्टे रश्मिभिस्तेषामुदके स्नानमाचरेत् ॥६६
कुड्यान्तर्जलवल्मीकमूषिकोत्करवर्त्मसु ।
श्मशाने शौचशेषे च न ग्राह्याः सप्त मृत्तिकाः ॥६७
इष्टापूर्तं तु कर्तव्यं ब्राह्मणेन प्रयत्नतः ।
इष्टेन लभते स्वर्गं पूर्ते मोक्षं समश्नुते ॥६८
वित्तापेक्षं भवेदिष्टं तडागं पूर्तमुच्यते ।
आरामश्च विशेषेण देवद्रोण्यस्तथैव च ॥६९
वापीकूपतडागानि देवतायतनानि च ।
पतितान्युद्धरेद्यस्तु स पूर्तफलमश्नुते ॥७०

शुक्लया मूत्रं गृह्णीयात्कृष्णाया गोः शकृत्तथा ।
ताम्रायाश्च पयो ग्राह्यं श्वेताया दधि चोच्यते ॥७१
कपिलाया घृतं ग्राह्यं महापातकनाशनम् ।
सर्वतीर्थे नदीतोये कुशैर्द्रव्यं पृथक्पृथक् ॥७२
आहृत्य प्रणवेनैव ह्युत्थाप्य प्रणवेन च ।
प्रणवेन समालोड्य प्रणवेन तु संपिबेत् ॥७३
पालाशे मध्यमे पर्णे भाण्डे ताम्रमये तथा ।
पिबेत्पुष्करपर्णे वा ताम्रे वा मृण्मये शुभे ॥७४
सूतके तु समुत्पन्ने द्वितीये समुपस्थिते ।
द्वितीये नास्ति दोषस्तु प्रथमेनैव शुध्यति ॥७५
जातेन शुध्यते जातं मृतेन मृतकं तथा ।
गर्भसंस्रवणे मासे त्रीण्यहानि विनिर्दिशेत् ॥७६
रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥७७
सगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।
स्वामिगोत्रेण कर्तव्यास्तस्याः पिण्डोदकं(क)क्रियाः ॥७८
द्वे पितुः पिण्डदानं(ने) स्यात्पिण्डे पिण्डे द्विनामता ।
षण्णां देयास्त्रयः पिण्डा एवं दाता न मुह्यति ॥७९
स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वदैवतम् ।
पितामह्यपि स्वेनैव स्वेनैव प्रपितामही ॥८०
वर्षे वर्षे तु कुर्वीत मातापित्रोस्तु सत्कृतिम् ।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकं तु निर्वपेत् ॥८१

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धमथापरम् ।
पावणं चेति विज्ञेयं श्राद्धं पञ्चविधं बुधैः ॥८२
ग्रहोपरागे संक्रान्तौ पर्वोत्सवमहालये ।
निर्वपेत्त्रीन्नरः पिण्डानेकमेव मृतेऽहनि ॥८३
अनूढा न पृथक्कन्या पिण्डे गोत्रे च मूतके ।
पाणिग्रहणमन्त्राभ्यां स्वगोत्राद्भ्रश्यते ततः ॥८४
येन येन तु वर्णेन या कन्या परिणीयते ।
तत्समं सूतकं याति तथा पिण्डोदकेऽपि च ॥८५
विवाहे चैव संवृत्ते चतुर्थेऽहनि रात्रिपु ।
एकत्वं सा व्रजेद्भर्तुः पिण्डे गोत्रे च सूतके ॥८६
प्रथमेऽह्नि द्वितीये वा तृतीये वा चतुर्थके ।
अस्थिसंचयनं कार्यं बन्धुभिर्हितबुद्धिभिः ॥८७
चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा ।
अस्थिसंचयनं प्रोक्तं वर्णानामनुपूर्वशः ॥८८
एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ।
मुच्यते प्रेतलोकात्स स्वर्गलोके महीयते ॥८६
गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्मणः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथंचन ॥६०
यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ।
तावद्वर्षं सहस्राणि स्वर्गलोके महीयते ॥६१
नाभिमात्रे जले स्थित्वा हृदयेनानुचिन्तयेत् ।
आगच्छन्तु मे पितरो गृह्णन्त्वेताञ्जलाञ्जलीन् ॥६२

हस्तौ कृत्वा सुसंयुक्तौ पूरयित्वा जलेन च ।
गोश्रृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥९३
आकाशे च क्षिपेद्वारि वारिस्थो दक्षिणामुखः ।
पितृणां स्थानमाकाशं दक्षिणा दिक्तथैव च ॥९४
आपो देवगणाः प्रोक्ता आपः पितृगणास्तथा ।
तस्मादप्सु जलं देयं पितृणां हितमिच्छता ॥९५
दिवा सूर्यांशुभिस्तप्तं रात्रौ नक्षत्र मारुतैः ।
संध्ययोरप्युभाभ्यां च पवित्रं सर्वदा जलम् ॥९६
स्वभावयुक्तमव्याप्तममेध्येन सदा शुचि ।
भाण्डस्थं धरणीस्थं वा पवित्रं सर्वदा जलम् ॥९७
देवतानां पितृणां च जले दद्याज्जलाञ्जलीन् ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलीन् ॥९८
श्राद्धे हवनकाले च दद्यादेकेन पाणिना ।
उभाभ्यां तर्पणं दद्यादिति धर्मो व्यवस्थितः ॥९९

इति लघुयमप्रणीतं धर्मशास्त्रं समाप्तम् ।

समाप्तेयं यमस्मृतिः ।



ॐ तत्सद्ब्रह्मणे नमः ।

॥ अथ ॥

# *॥ बृहद्यमस्मृतिः ॥*

——:⁂:——

श्रीगणेशाय नमः ।

---

## प्रथमोऽध्यायः ।

### अथ नानाविध प्रायश्चित्तवर्णनम ।

अथातो यमधर्मस्य प्रायश्चित्तं व्याख्यास्यामः ।
चतुर्णामपि वर्णानां प्रायश्चित्तं प्रकल्पयेत् ॥१

ब्राह्मणस्तु शुना दष्टो जम्बूकेन वृकेण वा ।
उदिते ग्रहनक्षत्रे दृष्ट्वा सद्यः शुचिर्भवेत् ॥२

जलाग्निबन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपन्नगात्राश्च शस्त्राघातहताश्च ये ॥३

नवैते प्रत्यवसिताः सर्वधर्मबहिष्कृताः ।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन च ॥४

उभयावसिताः पापा ये शामशबलाच्युताः ।
इन्दुद्वयेन शुध्यन्ति दत्त्वा धेनुं तथा वृषम् ॥५
गोब्राह्मणहतं द्ग्धं मृतमुद्बन्धनेन तु ।
पाशं छित्त्वा ततस्तस्य तप्तकृच्छ्रद्वयं चरेत् ॥६
कृमिभिर्ब्रह्मसंयुक्तं मक्षिकैश्चोपघातितम् ।
कृच्छ्रार्धं संप्रकुर्वीत शक्त्या दद्यात्तु दक्षिणाम् ॥७
चाण्डालभाण्डसंस्पृष्टं पीत्वा भूमिगतं जलम् ।
गोमूत्रयावकाहारः षड्रात्रेण विशुध्यति ॥८
चाण्डालघटभाण्डस्थं यस्तोयं पिबति द्विजः ।
तत्क्षणात्क्षिपते यस्तु प्राजापत्येन शुध्यति ॥९
यदि न क्षिपते तोयं शरीरे यस्य जीर्यति ।
प्राजापत्यं न दातव्यं कृच्छ्रं सांतपनादिकम् ॥१०
चरेत्सांतपनं विप्रः प्राजापत्यं तु क्षत्रियः ।
तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥११
चाण्डालान्नं भक्षयित्वा तद्वत्सलिलमेव च ।
मासं कृच्छ्रं चरेद्विप्रश्चान्द्रायणमथापि वा ॥१२
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम् ॥१३
चाण्डालमूर्तिका ये च ये च संकीर्णयोनयः ।
तेषां दत्त्वा च भुक्त्वा च तप्तकृच्छ्रं समाचरेत् ॥१४
चाण्डालिकासु नारीषु द्विजो मैथुनकारकः ।
कृत्वाऽघमर्षणं पक्षं शुध्यते च पयोव्रतात् ॥१५

इति श्रीयाम्ये धर्मशास्त्रे प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

### अथ चान्द्रायणविधिवर्णनम् ।

नटां (टी) शैलूषिका चैव रजकीं वेणुजीविनीम् ।
गत्वा चान्द्रायण कुर्यात्तथा चर्मोपजीविनीम् ॥१
कापालिकान्नभोक्तॄणां तन्नखागामिनां तथा ।
अज्ञानात्कृच्छ्रमुद्दिष्टं ज्ञात्वा चैव व्रतद्वयम् ॥२
सुरायाः संप्रपानेन गोमांसभक्षणे कृते ।
तप्तकृच्छ्ं चरेद्विप्रो मौञ्जीहोमेन शुध्यति ॥३
गोक्षत्त्रियं तथा वैश्यं शूद्रं चाप्यनुलोमजम् ।
ज्ञात्वा विशेषण ततश्चरेच्चान्द्रायणं व्रतम् ॥४
कुक्कुटाण्डकमात्रं तु ग्रासं च परिकल्पयेत् ।
अन्यथाभावदोषेण नवमेऽति च शुध्यति ॥५
एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेन् ।
अमायां तु न भुञ्जीत एप चान्द्रायणो विधिः ॥६
प्रायश्चित्तमुपक्रम्य कर्ता यदि विपद्यते ।
पूतस्तदहरेद्वाऽ(वा)पि इह लोके परत्र च ॥७
यावदेकः पृथग्भाव्यः प्रायश्चित्तं न सेवते ।
अप्रशस्ता न ते स्पृश्यास्ते सर्वेऽपि विगर्हिताः ॥८
अभोज्याश्चाप्रतिग्राह्या असंपङ्क्त्या विवाहिकाः ।
पूयन्ते तु व्रते चीर्णे सर्वे ते रिक्थभागिनः ॥९

इति श्रीयाम्ये धर्मशास्त्रे द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः।

### अथ प्रायश्चित्तवर्णनम्।

ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च।
प्रायश्चित्तं चरेद्भ्राता पिता वान्योऽपि बान्धवः ॥१
अतो बालतरस्यापि नापराधो न पातकम्।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥२
अशीत्यधिकवर्षाणि बालो वाऽप्यूनषोडशः।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ॥३
पितृव्यभ्रातृभार्यां च भगिनीं मातुरेव च।
श्वश्रूं पितृष्वसारं च तप्तकृच्छ्रं समाचरेत् ॥४
राज्ञीमाचार्यशिष्यां वा उपाध्यायस्य योषितः।
एता गत्वा स्त्रियो मोहात्षण्मासं कृच्छ्रमाचरेत् ॥५
द्वौ मासौ भक्ष्यभोज्यं च द्वौ मासौ यावकेन तु।
द्वौ मासौ पञ्चगव्येन षण्मासं कृच्छ्रमाचरेत् ॥६
मातरं गुरुपत्नीं च स्वसारं दुहितां तथा।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥७
अस्तं गते यदा सूर्ये चाण्डालमृतुमत्स्त्रियः।
संस्पृशेत्तु यदा कश्चित्प्रायश्चित्तं कथं भवेत् ॥८
जातरूप्यं सुवर्णं तु दिवाऽऽहृतं च यज्जलम्।
तेन स्नात्वा च पीत्वा च गामालभ्य विशुध्यति ॥९
दासनापितगोपालकुलमित्रार्धसीरिणः।
एते शूद्रास्तु भोज्यान्ना यश्चाऽऽत्मानं निवेदयेत् ॥१०

अम्लच्छन्द्रेषु अन्नाद्यं ये भुञ्जन्त्यबुधा द्विजाः ।
प्रायश्चित्तं तथा प्राप्तं चरेच्चान्द्रायणव्रतम् ॥११
यः करोत्येकरात्रेण वृपलीसेवनं द्विजः ।
तद्भक्षणं जपेन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥१२
वृपलीं यस्तु गृह्णाति ब्राह्मणो मदमोहितः ।
सदा सूतकिता तस्य ब्रह्महत्या दिने दिने ॥१३
वृपलीगमनं चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं पुनः श्वानो भविष्यति ॥१४
वृपलीफेनपीतस्य नि श्वासोपगतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥१५
अग्रे माहिषकं दृष्ट्वा मध्ये च वृषलीपतिम् ।
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥१६
महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी ।
तान्दोपान्क्षमते यस्तु स वै माहिषकः स्मृतः ॥१७
पितुर्गेहे तु या कन्या पश्यत्यसंस्कृता रजः ।
भ्रूणहत्या पितुस्तस्य(स्याः) कन्या सा वृपली स्मृता ॥१८
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥१९
प्राप्ते तु द्वादशे वर्षे कन्यां यो न प्रयच्छति ।
मासि मासि रजतस्याः पिता पिबति शोणितम् ॥२०
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥२१

माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥२२
समर्घं धनमुत्सृज्य मह(हा)र्घं यः प्रयच्छति ।
स वै वार्धुषिको ज्ञेयो ब्रह्मवादिषु गर्हितः ॥२३
शुक्रक्षयकरा वन्ध्या त्याज्येति परिकीर्तिता ।
तस्यास्तु यो भवेद्भर्ता तं तु विद्यादजाविकम ॥२४
दूराच्छ्रान्तं भयग्रस्तं ब्राह्मणं गृहमागतम ।
अनर्चयित्वा यो भुङ्क्ते तत्क्षणेऽसौ विधी(ही)यते ॥२५
अजाविको माहिषश्च तथा च वृषलीपतिः ।
तृणाग्रेणापि संस्पृष्ट्वा सवासा जलमाविशेत ॥२६
यावदुष्णं भवेदन्नं यावद्भुञ्जन्ति वाग्यताः ।
पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥२७
हविर्गुणा न वक्तव्याः पितरो यान्त्यतर्पिताः ।
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥२८
यावतो ग्रसते ग्रासान्हव्यकव्येष्वमन्त्रितः ।
तावतो ग्रसते प्रेत्य दीप्तान्ग्रासानयोमयान् ॥२९
आसनेष्वासनं दद्यान्न तु हस्ते कदाचन ।
हस्तेष्वासनदाने च निराशाः पितरो गताः ॥३०
आसने पादमारूढो वस्त्रस्यार्धमधः कृतम ।
मुखेन धमितं भुङ्क्ते द्विजश्चान्द्रायणं चरेत ॥३१
अङ्गुल्यां यः पवित्राणि कृत्वा गन्धान्समर्च(र्प)येत् ।
पितॄणां नोपतिष्ठेत राक्षसैर्विप्रलुप्यति ॥३२

हसन्ग्रासं च यो भुङ्क्ते सशब्दं सेङ्गितं तथा ।
लेहितं वर्तितं चैव पङ्क्ते पङ्क्तिदूषकाः ॥३३
श्वित्री कुष्ठी तथा शूली कुनखी श्यावदन्तकः ।
रोगी हीनातिरिक्ताङ्गः पिशुनो मत्सरी तथा ॥३४
दुर्भगो हि तथा पण्ढः पाखण्डी वेदनिन्दकः ।
हैतुकः शूद्रयाजी च अयाज्यानां च याजकः ॥३५
नित्यं प्रतिग्रहे लुब्धो याचको विषयात्मकः ।
श्यावदन्तोऽथ वक्रश्च असदालापकस्तथा ॥३६
एते श्राद्धे च दाने च वर्जनीयाः प्रयत्नतः ।
तथा देवलकश्चैव भृतको वेदविक्रयी ॥३७
एते वर्ज्याः प्रयत्नेन एवमेव यमोऽब्रवीत् ।
निराशाः पितरस्तस्य भवन्ति ऋणभागिनः ॥३८
अथ चेन्मत्र(न्त्र)विद्युक्तो वैष्णवो ज्ञानवान्हि सः ।
हव्यकव्ये नियोक्तव्य इति प्राह स्वयं यमः ॥३९
तस्मात्सर्वप्रत्नेन श्राद्धं यज्ञे च कर्मणि ।
अदृष्यं चैव विप्रेन्द्रं योजनीयं(येत्तु) प्रयत्नतः ॥४०
तथैव मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
वर्जितं च यमः प्राह पङ्क्तिपावन एव सः ॥४१
निर्मत्सरः सदाचारः श्रोत्रियो ब्रह्मविद्युवा ।
विद्याविनयसंपन्नः पात्रभूतो द्विजोत्तमः ॥४२
वेदान्तविज्ज्येष्ठसामा अलुब्धो वेदतत्परः ।
योजनीयः प्रयत्नेन दैवे पित्र्ये च कर्मणि ।
यद्दत्तं च हुतं तस्मै ह्यनन्तं नात्र संशयः ॥४३

उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥४४
उच्छिष्टभाजनं येन विप्रेण चान्नवर्जितम्।
स्पृष्टं तेन प्रमादाच्च प्राजापत्यं समाचरेत् ॥४५
उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणो ब्राह्मणेन हि।
दशरुद्रीं जपेत्पश्चाद्गायत्र्या शोधनं परम् ॥४६
उच्छष्टोच्छिष्टसंस्पृष्टः क्षत्रियो वैश्य एव च।
प्रमादोच्छिष्ट संस्पृष्टः शूद्रेण तु यदा द्विजः ॥४७
उपोष्य रजनी रजनीमेकां पञ्चगव्येन शुध्यति।
श्वानकुक्कुटमार्जाराः काको वा स्पृशते यदि ॥४८
उच्छिष्टं तं द्विजं यस्तु अहोरात्रेण शुध्यति।
पञ्चगव्येन शुद्धिः स्यादित्याह भगवान्यमः ॥४९
रजस्वलां स्पृशेद्यस्तु त्रिरात्रं तत्र कारयेत्।
उपोष्य द्विजसंस्कारं पञ्चगव्येन शुध्यति ॥५०
उदक्या दृष्टिपातेन श्रुतशब्देन चैव हि।
स्नानं देवार्चनं दानं हवनं च प्रणश्यति ॥५१
रक्तवस्त्रस्य विक्रेता लाक्षारजकमे(ए)व च।
वेणुजीवनकैवर्ततक्षचर्मोपजीविनः ॥५२
एतेषां स्पर्शनात्पापं तथा चैव तु मोहितः।
प्रतिग्रहाच्च विप्रो वै नरकं प्रति गच्छति ॥५३
उदक्याः स्पर्शने चैव ब्राह्मणो वै प्रमादतः।
षड्रात्रोपोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥५४

सूतके वर्तमानेऽपि दासवर्गस्य का क्रिया ।
स्वामितुल्यं भवेत्तस्य सूतकं तु प्रशस्यते ॥५५

यन्न कारयते तत्तन्नान्यं प्रत्यब्रवीद्यमः ।
विवाहोत्सवयज्ञेषु कार्ये चैवमुपस्थिते ॥५६

रजः पश्यति या नारी तस्य कालस्य का क्रिया ।
विपुले च जले स्नात्वा शुक्लवासास्त्वलंकृता ॥५७

आपोहिष्ठेत्यृगभिषिक्ताऽऽयं गौरिति वा ऋचः(चा) ।
पूजान्ते होमयेत्पश्चाद् घृताहुत्या शताष्टकम ॥५८

गायत्र्या व्याहृतिभिश्च ततः कर्म समाचरेत् ।
यावद्द्विजा न चार्च्यन्ते अन्नदानहिरण्यकैः ॥५९

तावच्चीर्णव्रतस्यापि तत्पापं न प्रणश्यति ॥६०

यद्देहकं काकबलाकचिह्नामेध्येन लिप्तं तु भवेत्कदाचित् ।
श्रोत्रे मुखे वा परिमस्तके वा ज्ञा (स्ना)नेन लेपोपहतस्य शुद्धिः ॥

अभक्ष्याणामपेयानामलेह्यानां च भक्षणे ।
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत् ॥६२

पद्मोदुम्बरबिल्वानां कुशाश्वत्थपलाशयोः ।
एतेषामुदकं पीत्वा पञ्चगव्येन शुध्यति ॥६३

स्त्रीणां रजस्वलानां च स्पर्शश्चैव भवेद्यदि ।
चतुर्णामपि वर्णानां प्रायश्चित्तं कथं भवेत् ॥६४

स्पृष्ट्वा रजस्वलाऽन्योन्यं सगोत्रा चान्यगोत्रका ।
कामादकामतो वाऽपि त्रिरात्राच्छुद्धिरिष्यते ॥६५

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्त्रिया तथा।
अर्धकृच्छ्रं चरेत्पूर्वा पादकृच्छ्रं तथोत्तरा ॥६६

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यिनी तथा।
पादहीनं चरेत्पूर्वा पादमेकं तथोत्तरा ॥६७

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रिणी तथा।
कृच्छ्रेण शुध्यते शूद्री ब्राह्मी दानेन शुध्यति ॥६८

विप्रः स्पृष्टो निशायां तूदक्याया पतितेन वा।
दिवाऽऽनीतेन तोयेन स्नापयेदग्निसंनिधौ ॥६९

दिवा चैवार्कसंस्पृष्टं रात्रौ नक्षत्रदर्शनात्।
संध्ययोरुभयोर्वाऽपि पवित्रं सर्वदा जलम् ॥७०

इति श्रीयाम्ये धर्मशास्त्रे तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

### अथ गोवधप्रायश्चित्तवर्णनम।

स्वातं (खातं) वापी तथा कूपपाषाणे शस्त्रघातिते।
यष्ट्या तु घातिते चैव मृत्पिण्डान्येव साधयेत् (!) ॥१

गोवधे चैव यत्पापं बलीवर्दस्य चैव हि।
प्रायश्चित्तं भवेत्तत्र स्त्रिया वा पुरुषस्य वा ॥२

खाते च पतिता या गौः कूपे वा वावटेऽपि वा।
आशा(शै)वालकुडे(ण्डे)वाऽपि शस्त्रघातेन चैव हि ॥३

यष्ट्या तु पतिता या गौर्बलीवर्दो मृतोऽपि वा ।
वत्सो वत्सतरो वाऽपि प्रायश्चित्ती भवेन्नरः ॥४
नारी वाऽपि कुमारो वा प्रायश्चित्ताद्विशुध्यति ।
पापी प्रख्यापयेत्पापं दत्त्वा धेनुं तथा वृषम ॥५
प्रच्छन्नपापिनो ये स्युः कृतघ्ना दुष्टचारिणः ।
नरकेषु च पच्यन्ते यावदाभूतसंप्लवम् ॥६
तस्माच्च पापिना ग्राह्यं प्रायश्चित्तं यथा तथा ।
प्रमादाच्च हृता येन कपिला वा तथेतरा ॥७
य था ब्रह्मवधे पापं कपिलाया वधे तथा ।
बलीवर्देऽपि च तथा प्रायश्चित्तं समं स्मृतम् ॥८
रोधने बन्धने चैव मृत्पिण्डन(त्र)गोमये ।
उत्कृष्टेनापि गोहन्ता प्रायश्चित्तेन शुध्यति ॥९
मुष्ट्या वा निहता या गौः शकटे धा(वा)रिपङ्कयोः ।
गोवर्तपतिता गावः श्वनद्यामुत्तरेऽपि वा ॥१०
एतत्तं कथितं सर्वं गवां च(वि)घातमुत्तमम ।
यत्र यत्र म्रियेद्गौश्च प्रायश्चित्तं पृथक्पृथक् ॥११
वने च पतिता या गौः पामरत्राट(स)शङ्किता ।
मृता चैव यदा सा गौः प्रायश्चित्ती भवेच्च सः ॥१२
प्रेषितः पुरुषो वाऽपि प्रायश्चित्तं च यत्स्मृतम् ।
आब्दिकं चैव शूद्रस्य वैश्यस्य द्विगुणं भवेत् ॥१३
त्रिगुणं क्षत्त्रियस्यैव विप्रस्यैव चतुर्गुणम् ।
गोष्ठे निवसनं कार्यं गोघ्नोऽहमिति वाचयेत् ॥१४

कष्टेन वर्तमानोऽपि कालेनैव शुचिर्भवेत्।
गवां मध्ये वसेद्रात्रौ दिवा गा वै ह्यनुव्रजेत् ॥१५
न स्त्रीणां वपनं कुर्यान्न च गोव्रजनं स्मृतम्।
न च गोष्ठे वसेद्रात्रौ न कुर्याद्वैदिकीं श्रुतिम ॥१६
सर्वान्केशान्समुच्छ्रित्य च्छेदयेदङ्गुलद्वयम्।
एष ए(वमे)व तु नारीणां शिरोमुण्डापनं स्मृतम् ॥१७
सूतके मृतके चैव विधिं प्रब्रूहि नो यम।
जातके वर्तमानेऽपि मृतकं च यदा भवेत् ॥१८
को विधिः स विनिर्दिष्टः कथयस्व यथातथम।
एवमुक्तो हि भगवान्यमः प्राह यथातथम् ॥१९
जातके नैव मृतकं क्षयं याति न संशयः।
पूर्वत्रतमनिर्दिष्टं मया च सूतकं भवेत् ॥२०
सूतकेन न लिप्येत इति प्राह स्वयं यमः।
सूतकेन न लिप्येत व्रतं संपूर्णतां व्रजेत् ॥२१
श्राद्धं दानं तपो यज्ञो देवताराधनं तथा।
ब्रह्महा च सुरापश्च स्वर्णस्तेयी गुरुद्रुहः ॥२२
संसर्गी पञ्चमो ज्ञेयस्तत्समो नात्र संशयः।
एतेषु द्वादशाब्दं च प्रायश्चित्तं विधीयते ॥२३
तथा पातकिनां चैव षडब्दं चैव संस्मृतम्।
उपपातकिनां चैव त्रिपञ्चाब्दं विधीयते ॥२४
प्राजापत्यैस्त्रिभिः कृच्छ्रं कृच्छ्रं वै द्वादशाब्दिकम्।
एकभक्तं तथा नक्तमुपवासमथापि वा ॥२५

एतद्दिनचतुष्केण पादकृच्छ्रश्च जायते ।
त्रिपादकृच्छ्रो विज्ञेयः पापक्षयकरः स्मृतः ॥२६
धर्मशास्त्रानुसारेण प्रायश्चित्तं मनीषिभिः ।
दातव्यं पापमुक्त्यर्थं प्राणिनां पापकारिणाम् ॥२७
अनुतापाद्य(पो य)दा पुंसां (सो) भवेद्ध पापिनः किल ।
प्रायश्चित्तं तदा देयमित्याह भगवान्यमः ॥२८
अज्ञात्वा धमशास्त्राणि प्रायश्चित्तं ददाति यः ।
प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदं व्रजेत् ॥२९
तस्माच्छास्त्रानुसारेण प्रायश्चित्तं विधीयते ।
अष्टशाल्यां मृता ये च ये च स्त्रीसूतके मृताः ॥३०
द्रंष्ट्राभिर्भक्षिता ये च ये च आत्महनो जनाः ।
अष्टशाल्यां मृतो विप्रः प्रायश्चित्तं तु बन्धुभिः ॥३१
कार्यं तु आब्दिकं चैव तथा स्त्रीणां च दापयेत् ।
शुद्ध्यर्थ नान्यथा भाव्यमित्याह भगवान्यमः ॥३२
दुर्मृत्युमरणं प्राप्ता येऽप्यधोगतिमागताः ।
तेषां शुद्ध्यर्थमेवात्र द्विव्यब्दं हि विशिष्यते ॥३३
ब्राह्मणक्षत्त्रियविशां शूद्राणां चान्त्यजातिनाम् ।
तारतम्येन दातव्यमिति प्राह स्वयं यमः ॥३४
पतितानां च विप्राणां तथा स्त्रीणां विगर्हितम् ।
कथं शुद्धिर्भवेत्तासां तेषां चैव विशेषतः ॥३५
व्यभिचाराद्दतौ शुद्धिः स्त्रीणां चैव न संशयः ।
गर्भे जाते परित्यागो नान्यथा मम भाषितम् ॥३६

दुष्टस्त्रीदर्शनेनैव पितरो यान्त्यधोगतिम्।
घृतं योन्यां क्षिपेद्घोरं परपुंसगता हि या ॥३७
हवनं च प्रयत्नेन गायत्र्या चायुतत्रयम्।
ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरेण हि ॥३८
विधवा चैव या नारी पुंसोपगतसेविनी।
त्याज्या सा बन्धुभिश्चैव नान्यथा यमभाषितम् ॥३९
पतितस्य च विप्रस्य अनुतापरतस्य च।
पापाच्चैव निवृत्तस्य प्रायश्चिती भवेत्तदा ॥४०
तारतम्येन दातव्यं प्रायश्चित्तं यथाविधि।
सकामो हि यदा विप्रः पापाचारपरो भवेत् ॥४१
दृष्ट्वा ( दिष्ट्या ) निवृत्तपापौघः प्रायश्चित्ती तदाऽर्हति।
तथा क्षत्रियवैश्यौ वा शूद्रो वाऽपि यथाक्रमात् ॥४२
विधवागमने पापं सकृच्चैव तु यद्भवेत्।
असकृच्च यदा ज्ञात्वा प्रायश्चित्तं प्रवर्तते ॥४३
असकृद्गमनाच्चैव चरेच्चान्द्रायणद्वयम्।
सकृद्गमने यत्पापं प्राजापत्यद्वयेन हि ॥४४
पुनर्भूर्विकृता येन कृता विप्रेण चैव हि।
विना शाखाप्रभेदेन पुनर्भूर्भण्यते हि सा ॥४५
सवर्णश्च सवर्णायामभिषिक्तो यदा भवेत्।
ब्राह्मणः कामलुब्धोऽपि श्राद्धे यज्ञे च गर्हितः ॥४६
क्षत्रियो ब्राह्मणीसक्तः क्षत्रिण्यां विश एव वा।
वैश्याया गमने शूद्रः पतिताया भवान्यथा ॥४७

प्रातिलोम्ये महत्पापं प्रवदन्ति मनीषिणः ।
प्रायश्चित्तं चाऽऽनुलोम्ये न भवत्येव चान्यथा ॥४८
मानसं वाचिकं चैव कायिकं पातकं स्मृतम् ।
तस्मात्पापाद्विशुद्ध्यर्थं प्रायश्चित्तं दिने दिने ॥४६
प्रातः संध्या सनक्षत्रामुपास्यामे(मीत)व यत्नतः ।
मध्याह्ने च तथा रौद्री सायं चव तु वैष्णवीम ॥५०
त्रिविधं पापशुद्ध्यर्थं संध्योपासनमेव च ।
संध्याहीनो हि यो विप्रः स्नानहीनस्तथैव च ॥५१
स्नानहीनो मलाशी स्यात्संध्याहीनो हि भ्रूणहा ।
नंशं पा(नश्येत्पा)पं हि यां ध्यात्वा उ(तुरु)पासनपरो हि सः ॥
ब्रह्मलोकं व्रजत्येव नान्यथा यमभाषितम् ।
विद्यातपोभ्या संयुक्तः शान्तः शुचिरलम्पट. ॥५३
अलुब्धाह्लादनिष्पापा भूदेवा नात्र संशयः ।
पात्रीभूताश्च विज्ञेया विप्रास्ते नात्र संशयः ॥५४
तेभ्यो दत्तमनन्तं हि इत्याह भगवान्यमः ।
कुकर्मस्थास्तु ये विप्रा लोलुपा वेदवर्जिताः ॥५५
संध्याहीना व्रतभ्रष्टाः पिशुना विषयात्मकाः ।
तेभ्यो दत्तं निष्फलं स्यान्नात्र कार्या विचारणा ॥५६
प्रतिग्रहे संकुचिता यदान्यातैयविश्रुता ।
भूमिदर्शनात्पापमोचकाष्कृतत्रंताद्वापरे कलौ नौववींरोषितः ॥
राजप्रतिग्रहात्सव ब्रह्मवर्चसमेव च ।
नश्यतीति न संदेह इत्याह भगवान्यमः ॥५८

राज्ञां प्रतिग्रहस्त्याज्यो लोकत्रयजिगीषुभिः ।
राज्ञः प्रतिग्रहाच्चैव ब्राह्मण्यं हि विलुप्यते ॥५९

गावो दूरप्रचारेण हिरण्यं लोभलिप्सया ।
स्त्री विनश्यति गर्वे ( र्भे )ण ब्राह्मणो राजसेवया ॥६०

सेवकाश्चापि विप्राणां राज्ञां सुकृतनामभिः ।
कुम्भीपाकेषु पच्यन्ते यावदाभूतसंप्लवम् ॥६१

असेव्यासेविनो विप्रा अयाज्यानां च याजकाः ।
अपाङ्क्ता(ङ्क्त्या)स्ते च विज्ञेयाः सर्वधर्मबहिष्कृताः ॥६२

इति श्रीयाम्ये धर्मशास्त्रे चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

अथ श्राद्धकाले पत्न्यां रजस्वलायां निर्णयः ।

अतः परं प्रवक्ष्यामि शृणुध्वं मुनिपुंगवाः ।
सर्वेषामन्त्यजातीनां वर्णादीनां यथाक्रमम् ॥१

स्त्रीसंपर्कादिकं सर्वं जातमन्त्यजसंज्ञकम् ।
योनिसंकरजं सर्वं वर्णतश्चापि सर्वशः ॥२

विप्रक्षत्रियविट्शूद्रा वर्णिजात्येष्वनुक्रमात् ।
एते ब्राह्मणकुत्साः स्युस्तस्माद्ब्राह्मण(ण्य)मुत्तमम् ॥३

वेदाचाररतो विप्रो वेदवेदाङ्गपारगः ।
तैरप्यनुष्ठितो धर्म उक्तश्चैव विशेषतः ॥४

कार्यं चैव विशेषेण त्रिभिर्वर्णैरतन्द्रितः ।
बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः ॥५

निर्णयश्च ।

अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ।
प्रायश्चित्तं च दातव्यं तारतम्येन वा द्विजैः ॥६

श्राद्धकाले यदा जाता पत्नी यस्य रजस्वला ।
प्रसूता वा न कार्यं च दैविकं पैतृकं तथा ॥७

ब्राह्मणा मन्त्रिताश्चैव क्षणिता वा प्रयत्नतः ।
उद्दिश्य पितृपाकं च कार्यं पैतृकमेव तत् ॥८

अशौचं न भवत्येव नात्र कार्या विचारणा ।
प्रस्थाने वा पिता तस्य पञ्चत्वं च गतो भवेत् ॥६

श्राद्धादिकं तु पुत्रेण अज्ञातेन कृतं यदा ।
कन्याप्रदानसमये श्रुतं च पि(तवान्पि) तरं मृतम ॥१०

कन्यादानं च तत्कार्यं वचनाद्भवते(ति) क्षमः ।
पितुः पात्रादिकं कर्म पश्चात्सर्वं यथाविधि ॥११

अज्ञानाच्च कृतं सर्वं दैविकं पैतृकं च यत् ।
जातके सू(मृ)तके वाऽपि तत्सर्वं सफलं भवेत् ॥१२

( व्यासेनोक्तस्मृतौ स्वकीये अज्ञानात्पितरि मृते यदा
ज्ञातुसदैवकार्यं पितृकमेव वा ) ॥१३

अनेके यस्य ये पुत्राः संसृष्टा हि भवन्ति च ।
ज्येष्ठेन हि कृतं सर्वं सफलं पैतृकं भवेत् ॥१४

वैदिकं च तथा सर्वं भवत्येव न संशयः ।
पृथक्पिण्डं पृथक्श्राद्धं वैश्वदेवादिकं च यत् ॥१५

भ्रातरश्च पृथक्कुर्युर्नाविभक्ताः कदाचन ।
अपुत्रस्य च पुत्राः स्युः कर्तारः सांपरायणाः ॥१६

सफलं जायते सर्वमिति शातातपोऽब्रवीत् ।
न च दत्तो अ(ऽप्य)हीनोऽतिस्नेहेन च तथाऽपरः ॥१७

बलाद्गृहीतो बद्धश्च बन्धुभिर्दत्त एव च ।
भ्रातुः पुत्रो मित्रपुत्रः शिष्यश्चैव तथौरसः ॥१८

अपुत्रस्य च विज्ञेया दायादा नात्र संशयः ।
नवैते पुत्रवत्पाल्याः परलोकप्रदा ह्यमी ॥१९

औरसेन समाज्ञेया वचसोद्दालकस्य च ।
इदानीं भागनिर्णयमृषिः शातातपोऽब्रवीत् ॥२०

ज्येष्ठेन वा कनिष्ठेन विभागस्य विनिर्णयः ।
समभागप्रदाता च अपुत्रेभ्यो न संशयः ॥२१

समभागो ग्रहीतव्यः पुत्रमत्या सदैव हि ।
पितृभ्यो भ्रातृपुत्रेभ्यो दायादेभ्यो यथाक्रमात् ॥२२

अधिकस्य च भागौ द्वावितरेभ्यः समासतः ।
आधौ प्रतिग्रहे क्रान्ते पूर्वा तु बलवत्तरा ॥२३

सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया ।
समविद्योत्तरं चैव प्रत्यवस्कन्दनं तथा ॥२४

पूर्वं न्यासविधिश्चैव उत्तरः स्याच्चतुर्विधः ।
साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ॥२५

पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ।
असाक्षिव्यवहारेषु दिव्यं देयं यथाविधि ॥२६

इति श्रीयाम्ये धर्मशास्त्रे पञ्चमोऽध्यायः ॥

समाप्तेयं बृहद्यमस्मृतिः ।

——:❀::❀:——

।। श्रीगणेशाय नमः ।।

॥ अथ ॥

# * अरुणस्मृतिः *

## प्रथमोऽध्यायः

### प्रतिग्रहवर्णनम्

अरुण उवाच

प्रतिग्रहधनो विप्रो वदन्त्येवं महर्षयः ।
अन्ये ( अन्ते ) च नरकगतिंकथमेतदसंशयम् ।। १ ।।
प्रतिग्रहे गृहीते तु कां गतिं तु द्विजो व्रजेत् ।
कथं वा नरकान्मुच्येत् तन्मे ब्रूहि यथातथम् ।। २ ।।

आदित्य-उवाच

प्रतिग्रहः काश्यपेय मध्वास्वादो विषोपमः ।
ब्राह्मणाय भवेन्नित्यं दाता धर्मेण युज्यते ।। ३ ।।
जपो होमस्तथा दानं स्वाध्यायादि कृतं शुभम् ।
दातुः न प्रयते विप्र अतो न स्वर्गमाप्नुयात ।। ४ ।।
तानताय ( प्रतिग्रहं ) गृहीत्वा तु प्रायश्चित्तं समाचरेत् ।
स्वर्गो नश्यति विप्रे च प्रायश्चित्तमकुर्वति ।। ५ ।।
प्रतिग्रहाद् ब्राह्मणस्य विद्वांसोवर्जयेत्ततः ।
तथादेवाः प्रयच्छन्ति स्वान्लोकान् पूजिता नरैः ।।६।।

एवं विप्रान लोकानां पूजया संप्रयच्छतः।
एतदर्थं हि विद्वद्भ्यो देयं दानं च यत्नतः॥ ७॥
अन्वेष्याऽन्वेष्य तत (ता) मात्मनः शुद्धिमिच्छता।
यथा पुण्यं शुभं कश्चिदन्वेष्यान्वेष्य यत्नतः॥ ८॥
विप्रे प्रीणाति तद्वत्स दानं देयं खगोत्तम ?।
विद्वान् प्रतिग्रहं गृह्य कृत्वा तत्कायशोधनम॥ ९॥
आत्मानं शोधयित्वा न निर्गुणस्तु निमज्जति।
अहोरात्रगतं पुण्यं पाक्षिकं मासिकं तथा॥१०॥
षण्मासाच्चाब्दिकं यच्च द्वादशाब्दिकमेवच।
जन्मान्तिकं च सुकृतं प्रतिग्रहकृतेन तु॥११॥
नश्यते ब्राह्मणस्येह प्रायश्चित्तमकुर्वति।
एतस्मात कारणाद् विप्राः प्रायश्चित्तभयात् खग ?॥१२॥
सद्वृत्ता वर्त ( र्ज ) यन्तीह न गृह्णन्ति प्रतिग्रहम्।
प्रतिग्रहे कृते चैव प्रायश्चित्तं समाचरेत्॥१३॥
दैवि (के) पैतृ(के) वापि भुक्त्वा विप्रस्य (विप्रस्तु) वै द्विज ?।
तदन्नोदरमृत्युः स्याच्छृणु यां गतिमाप्नुयात्॥१४॥
ब्राह्मान्नेन दरिद्रः स्यात् क्षत्रियान्नान्यशु (त्पशु) र्भवेत्।
वैश्यान्नेन कृमित्वं स्याच्छूद्रान्नान्नरकं व्रजेत॥१५॥
एवमन्यै महादानै गृहीतै र्द्विजसत्तम ?।
नरकं समवाप्नोति अकृत्वा कायशोधनम्॥१६॥

अरुण उवाच ।

भुक्त्वान्नं ब्राह्मणस्येह ब्राह्मणादिषु वर्णिनाम् ।
कीदृशं वद कर्तव्यं प्रायश्चित्तं द्विजोत्तम ? ॥१७॥

आदित्य उवाच ।

ब्राह्मणान्नं तु वै भुक्त्वा सायं प्रातः शुचिःस्थितः ।
गायत्र्यष्टसहस्रन्तु जप्त्वा शुद्धिमवाप्नुयात् ॥१८॥
द्विगुणं क्षत्रियस्यान्ने त्रिगुणं वैश्यसंभवे ।
चतुर्गुण तु शूद्रान्ने ततः संशुध्यति द्विजः ॥१९॥
गणान्नं गणिकान्नं च यच्चान्नं ग्रामयाचकं ( याचितम ) ।
सूतकान्नं तु वै भुक्त्वा विप्रश्चान्द्रायणं चरेत् ॥२०॥
मासमेकं जपेद्गोष्ठे लक्षमेकं द्विजोत्तमः ।
गायत्र्यास्तु पयोभक्षी मुच्यतेऽसत्प्रतिग्रहात् ॥२१॥
परमापद्गतेनापि अन्त्यजातिपरिग्रहः ।
न ग्राह्यो ब्राह्मणेनेह न ग्राह्यः स्वर्गमिच्छता ॥२२॥
अंत्यजात्तु प्रतिगृह्य दस्यूनां पतितेषु च ।
ब्राह्मणो नरकं याति योनिश्चायाति शूकरीम् ॥२३॥

अरुण उवाच ।

प्रतिगृह्य द्विजो मोहात्प्रमादादथ भास्कर ? ।
महादाने गृहीते तु प्रायश्चित्तं कथं भवेत् ॥२४॥
पृथिव्यां यानि दानानि उत्तमान्यधमानि च ।
भानो ? भास्कर ? मार्तण्ड ? तन्मे विस्तरतो वद ॥२५॥

आदित्य उवाच ।

प्रतिग्रहेण विप्राणां ब्राह्मं तेजः प्रशाम्यति ।
अतः प्रतिग्रहं कृत्वा प्रायश्चित्तं समाचरेत् ॥२६॥
दुष्प्रतिग्रहं कृत्वा विप्रो भवति किल्बिषी ।
अपि भिक्षा गृहीते तु पुण्यमन्त्रमुदीरयेत् ॥२७॥
प्रतिग्रहेषु सर्वेषु जपहोमादिकं भवेत् ।
प्रतिग्रहे कुत्सितानां त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥२८॥
त्रिगुणं वा जपेद्वेदं गायत्र्या वायुतत्रयम् ।
जपं होमादिकं कुर्यात्कृते यज्ञे प्रतिग्रहे ॥२९॥
गुडधेन्वादिदानानां प्रायश्चित्तमथोच्यते ।
प्रथमा घृतधेनुः स्याद् गुड़धेनुरथापरा ॥३०॥
तिलधेनुस्तृतीया तु चतुर्थी जलसञ्ज्ञया ( सञ्ज्ञिता ) ।
क्षीरधेनुश्च विख्याता मधुधेनुरथापि वा ॥३१॥
सप्तमी शर्कराधेनुर्दधिधेनुरथाष्टमी
रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः ॥३२॥
एतासां दशधेनूनामितरासां विशेषतः ।
प्रतिग्रहे चरेद्विप्रः प्रायश्चित्तमतन्द्रितः ॥३३॥
जपेद्वा पौरुषं सूक्तमप्सु चैवाघमर्षणम् ।
अहोरात्रस्थिताञ्चैव मुच्यते चैव किल्बिषात् ॥३४॥
अजां च महिषीञ्चैव वृषलं युक्तलाङ्गलम् ।
शकटं प्रतिगृह्णानः पादोनं कृच्छ्रमाचरेत् ॥३५॥

रुद्रान पुरुषसूक्तञ्च   मण्डलाध्यायमेवच ।
गायत्रींलक्षमेकन्तु  मुच्यते  नात्र  संशयः ॥३६॥
गृहदानं महादानं  न  दानन्तु  गृहात्परम ।
येन दानेन अरुण ! सर्वदत्तं भवन्ति हि ॥३७॥
गृहोपकरणान सर्वान  गोमहिष्यादि भूषणान ।
कण्डनी पेषणी चुल्ही  उदकुम्भः प्रमार्जनी ॥३८॥
शय्याच  भोजनञ्चैव  वितानं  छत्रमेवच ।
एते चान्ये च बहवो दत्तास्तेन भवन्ति हि ॥३६॥
प्रतिगृह्य च तान सर्वान् गृहीतानि भवन्ति हि ।
अन्यैश्च  बहुभिर्दाने  गृहदानं  न  संभवेत ॥४०॥
गृहप्रतिग्रहस्तेन   दुस्तरो  हि   द्विजन्मनाम ।
तस्मात्प्रतिग्रहं  कृत्वा प्रायश्चित्तं  समाचरेत ॥४१॥
कृच्छ्रत्रयं  चरेद्विप्रो  महासान्तपनं तु वा ।
शतं वा भोजयेद्विप्रान गायत्र्या वा त्रिलक्षकं ॥४२॥
प्रायश्चित्तं कृते विप्रो मुच्यते  दुष्प्रतिग्रहात् ।
प्रायश्चित्तं न चेत कुर्याद् ब्राह्मणोऽज्ञानमोहितः ॥४३॥
तस्य बानः  प्रमीयन्ते  नप्रारः  पुत्रपौत्रकाः ।
मृतश्च  प्रेततां गच्छेन्न ग्राह्यो  दुष्प्रतिग्रहः ॥४४॥
अश्वदानं  महादानं  तद्यत्नाच्च  विवर्जयेत ।
यावन्त्यश्वस्य  रोमाणि  तावत्स्वर्गगतोऽश्वदः ॥४५॥
तमेव  प्रतिगृह्णानो  नरके  प्रति  पच्यते ।
प्रतिग्रहे  न  दोषः  स्याद्दोषस्तस्यैव  विक्रये ॥४६॥

ऋषिभिश्च पुरा गाथा गीता अश्वस्य विक्रये ।
असंभाष्योह्यपांक्तेयः पापिष्ठः स दुरात्मवान् ॥४७॥
यानि कानि च पापानि ब्रह्महत्या समानि च ।
प्रायश्चित्तै विशुद्ध्यन्ति न तैश्चहयविक्रयी ॥४८॥
रोम्णि रोम्णि भ्रूणहत्या तस्य नित्यं विधीयते ।
अश्वानां प्रतिगृहीतानां विक्रयन्न शुभम्भवेत ॥४९॥
साऽग्रकल्पशतं यावत्पच्यते ताम्रभ्राष्ट्रके ।
तस्य ( तस्मा ) द्विनिर्गते काले पापाणाऽस्वु भवेन्नरः ॥५०॥
तस्मान्न प्रतिगृह्णीयात द्विजस्तत्पापभाग् भवेत ।
अश्वानां विक्रयं कृत्वा चरेच्चान्द्रायणं त्रयम ॥५१॥
लक्षत्रयं वा गायत्र्या जपेद्वाशु समाहितः ।
प्रतिग्रहं (हे) चरेद्विप्रः (श्चा) अतिकृच्छ्रं न संशयः ॥५२॥
द्विगुणंच जपेद्वेदं ब्राह्मणान भोजयेच्छतम ।
आपत्सु प्रतिगृह्णान एकेनैव विशुद्ध्यति ॥५३॥
यथार्थेन च सृष्टानां ब्रह्मणा पद्मयोनिना ।
तेषां प्रतिग्रहो घोरो न कुर्याद् दुस्तरो यतः ॥५४॥
प्रतिग्रहेण सहसा यदेनो भवति द्विजे ।
अपि सर्वमधीयानः तच्छृणुष्व यथा कृतम ॥५५॥
नाभिभाषेत तं दृष्ट्वा मुखं च न विलोकयेत ।
दुष्ट प्रतिग्रहहतो (विप्रो) सदा भवति किल्विषी ॥५६॥
मुखाऽवलोकने (नैव) येन प्रायश्चित्ती भवेद् द्विजः ।
जानन कथं चिद्विप्रोऽपि निन्दितं तु समाचरेत ॥५७॥

इहैव सक्षणार्द्धेन दिवा कीर्ति ममो भवेत् ।
परलोकेऽपि तस्यैव नान्यां विद्याद् गतिन्तथा ॥५८॥
ऐहिकामुष्मिकार्थीयस्तस्मात्तान्परि वर्जयेत ।
प्रमादात्तान् गृहीत्वातु प्रायश्चित्तं ममाचरेत् ॥५९॥
सवासाजल माप्लुत्य षष्टांशं परिवर्जयेत ।
चान्द्रायणं ततः कुर्याज्ज्योतिष्टोमं यजेत्तथा ॥६०॥
विष्णो (ष्णु) जिष्णो (ष्णु) हृषीकेश प्रतिमां स्थापयेत्तु वा ।
ऋणार्थं प्रतिगृह्णानो मुच्यतेदुष्प्रतिग्रहात ॥६१॥
कन्याप्रतिगृहं कृत्वा ब्राह्मणस्तु यथाविधि ।
कर्मणोऽन्ते ततः कुर्याद्भूरिदानं द्विजातिषु ॥६२॥
कन्याप्रतिग्रहस्तेन व्रजत्येवददन्वशु ( सु ) ।
भूरिदानं न चेत्कुर्यात्कन्यादाने द्विजो यदा ॥६३॥
तदा कन्या स्वरूपेण सा कन्या तान् जिघांसति ।
गृहवासः सुखार्थाय पत्नी मूलं च तत्सुखम् ॥६४॥
सा पत्नी या विनीता च वि(चि) त्तज्ञा वशवर्तिनी ।
तद्रूपा भूरिदानाच्च अन्यथा विकला भवेत् ॥६५॥
कपिलां प्रतिगृह्णीयाद्धोमार्थं श्रेयसे द्विजः ।
कपिला दर्शने पुण्यं तस्यैव दर्शनेस्मृतं ॥६६॥
पुण्यदान ड (सु) भाभ्यां चेत्पुण्यं तस्यैवपोषणे ।
प्रतिग्रहस्ततस्तस्याः पुण्यात्पुण्यतरः स्मृतः ॥६७॥
परमंविक्रमं कुर्य्यान्महादोषो भवेत्ततः ।
कपिलाविक्रयं कृत्वा चरेच्चान्द्रायणत्रयं ॥६८॥

शूद्राद्यदि गां गृह्णीयाच्चरेद्वा ऐंदवत्रयं ।
तस्मात्तां प्रतिगृह्णीयात्परं विक्रयणं न हि ॥६९॥
कृष्णाजिक (नं) मृतशय्यां कालपुरुषमेव च ।
प्रतिग्राही कुरुक्षेत्रे न भूयः पुरुषो भवेत् ॥७०॥
तथापि मनसः शुध्यै प्रायश्चितं समाचरेत् ।
तप्तकृच्छ्रं द्वयं कुर्यादैन्दवेन समन्वितम् ॥७१॥
मन्त्रेण यजते वाथ जपेद्वालक्षसप्तकं ।
वापीकूपतड़ागादिखननैर्विसृजेद्धनं ॥ ७२ ॥
तदनित्यं स (भ) वेत्तस्मान्नस्थिरं हि भवेद्धसु ।
प्रतिग्रहार्जितं द्रव्यं सर्वं नश्यतिमूलतः ॥७३॥
राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः ।
तं ज्ञात्वा मानवः कस्मात्करिष्येद् (ष्यति) प्रलोभनम् ॥७४॥
भक्षिते मानुषमांसे प्रायश्चित्तं विधीयते ।
तत्करिष्यामहे सर्वं ननु राजप्रतिग्रहं ॥७५॥
प्रतिग्रहरतानां तु ब्राह्मणानां खगोत्तम ! ।
मानुष्यमपिदुःप्रायं ( प्राप्यं ) ब्रह्मलोकः कुतो भवेत् ॥७६॥
ग्रहणादि शुभाः कालाः दान होमादि कुर्वतां ।
गृह्णंति शुभकर्तृणां ब्राह्मणस्य गृहे तथा ॥७७॥
तामिस्त्रमंधतामिस्त्रं पूयंविष्ठा च शोणितं ।
असिपत्रवनंघोरं सदृशं श्लेष्मभोजनम् ॥७८॥
शाल्मलं (लिं) काकतुण्डं च पथ्यो वैतरणी तथा ।
सृकूथं (च) गुड़पोथं च मर्मरं तप्तवालुकं ॥७९॥

तैलं कुम्भहसं चैव तैलयन्त्रमथापिवा ।
एतज्ज्ञात्वा न कुर्याद्वै दुष्टराजप्रतिग्रहं ॥८०॥
कृत्वा तं मूढ़बुद्धिस्तु चरेच्चान्द्रायणत्रयं ।
सहस्रं भोजयेद्विप्रान् सूर्यभक्तान जितेन्द्रियान् ॥८१॥
एते (नैव) चैव विशुध्यन्ति दुष्टाद्राजप्रतिग्रहान ।
लक्षत्रयं तु गायत्रीं चरेच्चान्द्रायणं त्रयं ॥८२॥
गृहीत्वा द्विमुखीं धेनुं धान्यानां दशपर्वतान ।
एतेष्वन्यतमंगृह्णन्नभूयः पुरुषो भवेत ॥८३॥
प्रथमोधान्यशैलस्तु द्वितीयोलवणान्वयः ।
गुड़ाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ॥८४॥
पंचमस्तिलशैलस्तु षष्ठः कार्पासपर्वतः ।
सप्तमो घृतशैलः स्याद्रत्नशैलस्तथाष्टमः ॥८५॥
राजतो नवमस्तद्वद्दशमः शर्कराऽचलः ॥
एते दशाचलाः प्रोक्ता द्विमुखी च ततोधिका ॥८६॥
एतेषां ग्रहणे विप्रः क्षयेन्मासचतुष्टयं ( यात् ) ।
प्राजापत्येन कृच्छ्रेण षष्ठमंशं परित्यजेत् ॥८७॥
जपेद्वादशलक्षाणि गायत्र्याः सायं(नक्त)भोजनः ।
एतेन मुच्यते पापादन्यथा नरकं व्रजेत ॥८८॥
भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥८९॥
नास्ति भूम्याः समं दानं नास्ति भूम्याः समोनिधिः ।
नास्तिभूम्याः समो धर्मो नानृतात्पातकं परं ॥९०॥

हरतो हारयतस्तम् (ताम) मंदबुद्धिस्ततो श्रुतः ।
स बद्धोवारुणैः पाशैस्तिर्यग्योनिषु जायते ॥९१॥
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धरां ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥९२॥
एकं पश्वनृते हन्ति कन्यार्थे योऽनृतं वदेत् ।
सर्वं भूम्यनृतं हन्तिमास्मभूम्यऽनृतं वद ॥९३॥
प्रतिग्रहे न दोषः स्याद्गोभूमेस्तु (च) विक्रये ।
पितामहाच्च या भूमिः प्राप्ता या प्रपितामहात् ॥९४॥
तामेव विक्रयं कुर्वन्नरकं प्रतिपद्यते ।
अने (रे) र्वाऽपहृताभूमिर्यः शक्तस्तमुपेक्षते ॥९५॥
नरके पतते घोरे यावदाभूतसंप्लवं ।
तस्माद्भूमिं च पत्नीं च मातरंगुर्वङ्गनां ॥९६॥
अन्यैरपहृतां दृष्ट्वा मद्यः प्राणान्परित्यजेत् ।
नरस्य विक्रयं कृत्वा चरेच्चान्द्रायणं त्रयम ॥९७
त्रिगुणं वाचरेद्वेदं नवग्रहमखं तथा ।
नवग्रहमखे नैव दृष्ट्वा तत्प्रशमं व्रजेत ॥९८॥
नवग्रहमखं तस्मात्कुर्यात्पापप्रशान्तये ॥
एतेन मुच्यते पापादन्यथा नरकं व्रजेत् ॥९९॥
महादानममं लोके न भूतं न भविष्यति ।
यत्तत्षोडशधा प्रोक्तं मत्स्येन तु खगोत्तम ? ॥१००॥
आद्यं तु सर्वदानानां तुलापुरुषसंज्ञकं ।
हिरण्यगर्भदानं च ब्रह्माण्डं तदनंतरं ॥१०१॥

कल्पपादपदानं च बहुगोहस्ति पंचमं ।
हिरण्यं कामधेनुश्च हिरण्यं च तथैव च ॥१०२॥
हिरण्याश्च रथंस्तद्वद्धं महस्तिरथस्तथा ।
पंचलांगलकं तद्वद्धरदानं तथैव च ॥१०३॥
द्वादशं विश्वचक्रं तु ततः कल्पलताल्पकं ।
सप्तसागरदानं च रत्नधेनुस्तथैवच ॥१०४॥
महाभूतात्मकं चैव षोडशं परिकीर्तितं ।
एतेष्वत्युत्तमं दानमेकस्मै न प्रदीयते ॥१०५॥
यतः पापाय भवति दत्तं दानं द्विजातये ।
षोडशैस्तु नशेद्वंशं प्राप्य तस्य च गौरवात् ॥१०६॥
तस्मात्प्रतिग्रह (हं) स्यैव (चैव) मनसापि न चिन्तयेत् ।
तुलापुरुषसंज्ञं तु आद्यं तत्कथितं त्विह ॥१०७॥
तस्य तुलायान्तु समारूढो ( तस्यां तुलायामारूढो )
यजमानः स्वयंतुलेत् ।
तस्यमांससमंचैव सुवर्णंच विधीयते ॥१०८॥
नष्टे मूले च तस्यैव यद्भवेन्मांसभक्षणं ।
तत्पापं च भवेत्तस्य सुवर्णे नरकं व्रजेत् ॥१०९॥
नरकान्निःसृतः पश्चात्प्रेतः कल्पशतत्रयं ।
तस्मान्न प्रतिगृह्णाति स्तोकंस्तोकार्द्धमेव वा ॥११०॥
गृहीत्वा तस्यभागं तु चरेच्चान्द्रायणत्रयं ।
हिरण्यगर्भं ब्रह्माण्डं कल्पपादपमेव च ॥१११॥

एतेषु भागं गृह्णानो ब्राह्मणो नरकाय सः ।
प्रमादादथ लोभेन गृहीत्वा व्रतमाचरेत् ॥११२॥
जलेनत्रिषवणस्नायी चरेत्सांतपनं द्वयं ।
गोसहस्रमहादानं ( भुवि ) तुल्यं न तत्परं ॥११३॥
गोभिश्चध्रियते लोको गावः सर्वस्यमातरः ।
गोसहस्रमसुद्भूतो दुस्तरः स्या(द्)द्विजन्मनां ॥११४॥
गो शते गो सहस्रे च वैतरण्याश्च यास्मृतः (स्मृताः) ।
धेनुर्यान्याश्च या गावो रत्नहेमविनिर्मिताः ॥११५॥
एतास्तु द्विजवर्य्येण वर्जनीयाः प्रयत्नतः ॥
यज्ञकर्मणि या धेनुर्याधेन्वा(धेनुः) धर्मकर्मणि ॥११६॥
प्रायश्चित्तनिमित्तं वा ( या ) होमार्थं दुर्बलाय वा ।
मधुपर्के च या धेनुः या धेनुः कर्म सिद्धये ॥११७॥
एता सर्वा द्विजो विद्वान् प्रतिगृह्य यतस्ततः ।
न स पापेन लिप्येत पद्मपत्रमिवांभसा ॥११८॥
गोसहस्राधिकं चैव प्रतिगृह्य ह्यकामतः ।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति ॥११९॥
ऋक् साम वेदो नियतं जपेद्वा शिवसन्निधौ ।
नारायणानुस्मरणानमुच्यते दुष्प्रतिग्रहात ॥१२०॥
गायत्र्या दशलक्षेण प्राणायामसहस्रतः ।
तेन पापेन मुच्येत अन्यथा नरकं व्रजेत् ॥१२१॥
प्रतिगृह्य वैतरणीं लोहदंडं महात्ययम् ।
वैतरण्या न मुच्येत यावदाभूतसंप्लवम् ॥१२२॥

रक्तोदकं तत्रवहेत्सपूर्णं पूयैश्चमांसैश्च ( हि ) कर्दमाकुलं ।
कल्पत्रयं पच्यति तस्यमध्ये अनुग्रहंचैव दानं(तु)कुर्यात्॥१२३॥
तस्मादनुग्रहं कुर्याच्छास्त्रोक्तविधिना ततः ।
प्राजापत्यद्वयं कुर्यादथवा शतभोजनम ॥१२४॥
जपंद्वाप्यस्यवामीयं शिवसंकल्पमेवच ।
रथंतरं वामदेव्यं मुच्यते तेन किल्विषात् ॥१२५॥
हिरण्यकामधेन्वादि अन्येषां तु यथोदितम ।
महाभूतभयं तेभ्यः प्रायश्चित्तमथोच्यते ॥१२६॥
एतेभ्यः प्रतिगृह्णीयाद्धर्माभासो द्विजो यदा ।
तदा मज्जेत नरके पूयविष्ठासमाकुले ॥१२७॥
धर्माभासो द्विजो यस्मात्प्रतिगृह्य चरेद्व्रतं ।
तप्तकृच्छ्रद्वयं चैव अतिकृच्छ्रं तथैव च ॥१२८॥
अथवा मुच्यते पापात्प्राणायामपरायणः ।
प्राणयामैर्दहेत्सर्वं शरीरे यच्च पातकम ॥१२९॥
यथा वेगगतो वह्निः शुष्काद्र्रं दहतीन्धनम ।
प्राणायामैस्तथा पापं शुष्काद्र्रं नात्र संशयः ॥१३०॥
पावकाइव दीप्यन्ते जप होमक्रियारताः ।
प्रतिग्रहेण शाम्यन्ति पावकः सलिलादिव ॥१३१॥
तान् प्रतिग्रहजान् दोषान् प्राणयामैर्द्विजोत्तमाः ।
नाशयन्तीह विद्वांसो वायुर्मेघानिवाम्बरम् ॥१३२॥
गायत्र्या दश लक्षेण प्राणायामसहस्रतः ।
नश्यन्ति पाप संघानि का कथात्र प्रतिग्रहे ॥१३३॥

प्रतिग्रहाधिकं नास्ति ब्राह्मणस्य विनाशनम् ।
भ्रश्यते ब्रह्मचर्यात्तु नरके च प्रजायते ॥१३४॥
नरकान्निसृतः काले जायते ब्रह्मराक्षसः ।
अन्यै (अन्ते) जलमयो हस्ती मानुपोजलमाश्रितः ॥१३५॥
तस्माद्विनिर्गतः पश्चादुलूकः श्वापदो भवेत् ।
प्राप्यते मानुषीं योनिं दरिद्रो दुःखितस्तथा ॥१३६॥
व्याधितश्चैव मूर्खश्च बन्धुभिश्च विवर्जितः ।
दृष्टो(ष्ट्वा)परि(र) श्रियं दीप्ता (प्तां) सुनियंतं मुहुर्मुहुः ॥१३७॥
दुष्प्रतिग्रहहतो विप्रो भवति किल्विषी ।
तस्मात्प्रतिग्रहं कृत्वा प्रायश्चित्तं समाचरेत ॥१३८॥
तस्मात्प्रतिग्रहधनं न स्थिरं स्यात्कदाचन ।
प्राज्ञः प्रतिग्रहं कृत्वा तद्धनं सद्गतिं नयेत ॥१३९॥
यज्ञाद्वा सप्तसंस्थेषु पुण्यान्यायतनान्यथा ।
शिवस्य विष्णो मार्तण्ड स्यागारे विसृजेत्तथा ॥१४०
वापीकूपतडागेषु ब्रह्मस्वगुणमुक्तये ।
एतेषु विसृजेच्छुल्कमन्यथा नरकं व्रजेत् ॥१४१॥
प्रायश्चित्तं तु यत्प्रोक्तं ब्राह्मणस्य प्रतिग्रहे ।
शूद्रादि वर्णिनां चैव (चैतत,तद्विगुणं च समाचरेत्॥१४२॥
शय्याच पादुके विद्यां छत्रं चामरवाससी ।
अशनेषु च सर्वेषु प्रायश्चित्तमभोजनम् ॥१४३॥
यानि तेषामशेषाणां ते कृत्वा स्मरणं परम् ।
कृते येनानुतापो वै यस्य पुंसः प्रजायते ॥१४४॥

प्रायश्चित्तं तु तस्यैव हरेः संस्मरणं परम ।
प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्तुवन ॥१४५॥
नारायणमवाप्नोति सद्यः पापक्षयं नरम ॥१४६॥
मुक्त्वा प्रयाति स स्वर्गं तस्य विष्णोनुसीलने ।
वासु देवेन (देवस्य) भक्तस्य जपहोमार्चनादिषु ॥१४७॥
तस्यांते भवतं (भवति) तस्य देवेन्द्रादधिकं फलम ॥१४८॥

इति श्री अरुणस्मृतीयं धर्मशास्त्रं अरुणसूर्यसम्वादे
प्रतिग्रहप्रायश्चित्तनिर्णयो नाम प्रथमोऽध्यायः ।

— — — —

श्री गणेशाय नमः

॥ अथ ॥

# * पुलस्त्यस्मृतिः *

## वर्णाश्रमधर्मवर्णनम

कुरुक्षेत्रे महात्मानं पुलस्त्यमृषयोऽब्रुवन ।
तांश्च धर्मान्प्रकारांश्च नो वद स्मार्तमागमम ॥ १ ॥
एवं पृष्टः प्रत्युवाच सर्वांस्तान पृच्छत ऋषीन् ।
पंचधा वास्थितं धर्मं शृणुध्वं द्विजसत्तमाः ॥ २ ॥
वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम ।
वर्णाश्रमस्तृतीयस्तु गुणनैमित्तिकस्तथा ॥ ३ ॥
वर्णमेकं समाश्रित्य योऽधिकारः प्रवर्तते ।
वर्णधर्मः स विज्ञयो यथोपनयनं त्रिपु ॥ ४ ॥
यस्त्वाश्रयं समाश्रित्य पदार्थः संविधीयते ।
उक्त आश्रमधमस्तु भिक्षापिण्डादिकं तथा ॥ ५ ॥
उभयस्य निमित्तं न यो विधिः सम्प्रवर्तते ।
नैमित्तिकः सविज्ञेयः प्रायश्चित्तविधिर्यथा ॥ ६ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
उक्त आश्रमधर्मस्तु राजधर्मस्तु पञ्चमः ॥ ७ ॥

वर्णधर्मश्चतुर्णां य आश्रमाणां तथैव च ।
द्वयोः माधारणो धर्मो यश्चासौद्वयशेषभाक् ॥ ८ ॥
इज्याध्ययनदानानि यथाशास्त्रं सनातनम् ।
ब्रह्म क्षत्रिय वैश्यानां सामान्यो धर्म उच्यते ॥ ९ ॥
याजनाध्ययने राज्ञो भूतानाश्चाभिरक्षणम् ।
पाशुपाल्यं कृपिश्चैव वैश्यस्याजीवनं स्मृतम् ॥१०॥
शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्वशः ।
शूद्रा च वृत्तिस्तत्सेवा कारु (कारुण्यं) कर्म (तथैव) च ॥११॥
गुरौवासोऽग्निशुश्रूषा स्वाध्यायो व्रत धारणि (णं) ।
त्रिकालस्नापिता भृत्यं गुरौ प्राणांतिकी स्थितिः ॥१२॥
तद्भावे गुरुसुते तथा सब्रह्मचारिण (णि) ।
कामतो वा समानत्वं स्वधर्मो ब्रह्मचारिणः ॥१३॥
समेखलो जटी दण्डी मुंडी गुरुगृहाश्रयः ।
अन्यथा ग्रहण(गृहमेधित्वं) गच्छेत्कामतो वाश्रमांतरम् ॥१४॥
अग्निहोत्रोपचरणं जीवनश्च स्वकर्मभिः ।
धर्मदानेषु काम्येषु सर्वत्रजन (ध) विक्रयाः ॥१५॥
देवपित्र्यतिथिभ्यश्च भूतानामानुकम्पिता ।
श्रुतिस्मृत्युक्तसंस्कारो धर्मोऽयं गृहमेधिनः ॥१६॥
जटित्वमग्निहोत्रित्वं भूशय्याजिनधारणम् ।
वनेवासः पयोमूलनीवारकणवृत्तिता ॥१७॥
प्रतिग्रहनिवृत्तिश्च त्रिःस्नानं मौनधारणम् ।
देवतातिथिपूजा च धर्मोऽयं वनवासिनाम् ॥१८॥

सर्वारंभपरित्यागो भैक्षान्नं वृत्तमूलता ।
निष्परिग्रहता द्रोहः समता सर्वजन्तुषु ॥१६॥
प्रियाप्रियपरिष्वङ्गः सुखदुःखाविकारिता ।
स बाह्याभ्यन्तराशौचं नियमो व्रतकारिता ॥२०॥
सर्वेन्द्रियसमाहारो धारणाध्याननित्यता ।
भावशुद्धिस्तथेत्येवं परिव्राड्धर्म उच्यते ॥२१॥
अहिंसा सत्यवादश्च सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनाञ्चैव सामान्यो धर्म उच्यते ॥२२॥
स्वज्ञानं हृदि सर्वेषां धर्मोऽयं वर्णिलिङ्गिनाम् ।
अदृष्टार्थो द्विविधः (द्विधा) प्रोक्तो दृष्टार्थश्चद्वितीयकः ॥२३॥
उभयार्थस्तृतीयश्च न्यायमूलश्चतुर्थकः ।
उभयाव्यवहारश्च दंडधारणमेवच ॥२४॥
तुल्यार्थानां विकल्पःस्या न्न्यायमूलः प्रकीर्त्तितः ।
वेदे तु विदितो धर्मः स्मृतौ तादृश एव तु ॥२५॥
अनुवाकः श्रुतिसूक्तं कार्यार्थमिति मानवाः ।
तदर्थश्च प्रयासोऽयं सच सेव्यः फलार्थिना ॥२६॥
उक्तः पञ्च विधो धर्मः श्रेयोऽभ्युदयहेतुकः ।
पुरुषाणां यथायोगं सच सेव्यः फलार्थिना ॥२७॥
सद्यस्तु प्रौढबालायामन्यथा वत्सराच्छुचिः ।
प्रदाता यां त्रिरात्रेण दत्तायां पक्षिणी भवेत् ॥२८॥

इति पुलस्त्यप्रोक्तं धर्मशास्त्रं समाप्तम् ।
( प्रक्षिप्तोऽयं प्रतिभात्यन्तिमः श्लोकः )

श्री गणेशाय नमः ।

॥ अथ ॥

# ॥ बुधस्मृतिः ॥

## अथातो बुध-धर्मशास्त्रं व्याख्यास्यामः—

### चातुर्वर्ण्यधर्म वर्णनम

श्रेयोऽभ्युदयसाधनो धर्मः। गर्भाष्टमे ब्राह्मणो वसंत आत्मानमुपनयेत्। एकादशे क्षत्रियो ग्रीष्मे। द्वादशे वैश्यो वर्षासु। मेखलाजिनदंडकमण्डलूपवीतानि धारयेत्। वेदानधीत्य गुरुशुश्रूषां कुर्वन दृष्टार्थं स्तु(त)नुयात्। सावित्री वेदव्रतिकोपनिषद्गोदानत्रिसुपर्णिकव्रतानि चरेत्। गुरुणानुज्ञातः स्नायात्। सवर्णां भार्यामुद्वहेत्। मातृतः पितृतः पञ्चमीं सप्तमीं दशमीमन्य गोत्रजां। ब्राह्मदैवार्ष प्राजापत्य-गन्धर्वाऽऽसुर पैशाचराक्षसाः। ऋतावुपेयात्। युग्मासु पुत्रमुत्पादयेत्। गर्भाधानं पुसवनं सीमन्तोन्नयन जात कर्म नामकरणं निष्क्रमणान्नप्राशन चूड़ाकरणोपनयनं यावदग्न्याधानं। तस्मिन गृह्याणि देव-पितृ—मनुष्य—व्रत-यज्ञ-कर्माणि कुर्यात्। अतिथीन् पूजयेत्। भृत्यान् बन्धून् पोष्यवर्गांश्च। श्ववायसादिभ्यो भूमौ दत्त्वा ब्राह्मणान् भोजयेत्। पित्रन्वष्टकापार्वणश्राद्ध श्रावण्याग्रहायणी चैत्र्याश्वयुजी च पाकयज्ञान् कुर्यात्। अग्नीनाधायाग्निहोत्रं दर्श पौर्णमासौ चातु-

र्मास्यानि निरूढ़ पशुरनुबन्धसौत्रामणोति हविर्यज्ञान् कुर्यात् । अग्नि-ष्टोमोऽत्यग्निष्टोमः उक्थ्यषोडशीवाजपेयोऽतिरात्रो प्तो (सो) र्यामः । इति सोमयागाननुतिष्ठेत् । दया सर्वभूतेषु क्षान्तिरनसूयाशौ-चमनायासेन मङ्गलमपकार्पण्यमस्पृहेति कुर्यात् । न्यायागतधनेन-कर्माणि । अध्यापनं याजनं प्रतिग्रहः सर्व-क्रय-विक्रय संविभाग प्रतिधिगमशिलोञ्छ(ञ्छ)न्ना(न्न)मयाचि (त) कर्पणंज्यादि वृत्तयः । तदसंभवे क्षत्रिय वृत्त्या । आपत्काले आ(अ)साधुभ्यः प्रतिगृह्णीयात् । वृत्ति संकरं न कुर्यात् । कर्मवृत्ति संकरौ रक्षेत् कुलशुद्ध्यर्थम् । कृषिः पाशुपाल्यं वाणिज्यं वैश्य कर्म । शूद्रस्य विहितं कर्म ब्राह्मणादीनां-त्रयाणां भर्तृ शुश्रूषानाभिचरस्तस्य गुरुभक्तिः प्रणा(म)श्चेति । कृत-कृत्यस्य वानप्रस्थ्यं । विरक्तस्य पारिव्राज्यं स्वधर्मानुष्ठानवर्णाना-माश्रमाणाञ्च हिताकरणे प्रतिषिद्धसेवने यावत्तदकुर्वतो न कपतः (यातः) विहितमकुर्वतो राज्ञाक (का) रयितव्याः । कण्टकान शोधयेत् । व्यवहाराननेकार्थान्निर्णयेत् । बलवतश्चैतान् स्वधर्मे स्थापयेत् । तेषु परस्व दंडान् (दंडं) दापयेत् । तथा कुर्वतः कारयि (य) तश्चोभयो धर्मसिद्धिः । तस्यधर्मो विनीतोऽव्यसनी निरू-पित मण्डलाध्यक्षः ( प्रक्षिपेत् ) संधिविग्रहासनयानसंश्रयद्वैधी भावात् सामर्थ्यं कारयेत् । अनिच्छति पलायानमुपरुद्ध्य पर-दुर्गं गृह्णीयात् । मन्त्रौपधि प्रयोगेण निस्सर्ग राज्यं ( राष्ट्रं ) गृह्णीयात । गृहीत्वा देवब्राह्मणपूजनम् । एवं कुर्वन् दृष्टमदृष्टं च ( फलं ) लभेतेति ।

॥ इति श्री बुधप्रोक्ता बुधस्मृतिः समाप्ता ॥

श्री मीतारामाभ्यांनमः ।

॥ अथ ॥

# ॥ वशिष्ठस्मृतिः २ ॥

## अथ प्रथमोऽध्यायः

### वर्णाश्रमाणां नित्यनैमित्तिककर्मवर्णनम

गुरुमिक्ष्वाकुवंशस्य वशिष्ठं ब्रह्मसंभवम ।
पप्रच्छुर्मुनयः सर्वे पाराशर्यपुरोगमाः ॥ १ ॥

मुनय ऊचुः ।

भगवन्भवता प्रोक्ता यज्ञदानव्रतादयः ।
वर्णाश्रमाणां कर्तव्या नित्यानैमित्तकाः क्रियाः ॥ २ ॥

क आचारः कः आहारः कीदृग्वृत्तिःक आश्रयः ।
वैष्णवानां मुनिश्रेष्ठ ब्रूहि सर्वमशेषतः ॥ ३ ॥

वशिष्ठ उवाच ।

श्रुणुध्वं मुनयः सर्वे सर्वधर्मसनातनम् ।
वैष्णवानाञ्च विप्राणां यद्यदाचरणं शुभम ॥ ४ ॥

सर्गादौ ब्राह्मणाः श्रेष्ठाः वैष्णवांशेन चोदिताः ।
इतरे च त्रयो वर्णाः ब्रह्मणा विष्णुसूनुना ॥ ५ ॥

तस्माच्च वैष्णवाः विप्राः प्रकृत्यादिषु सत्तमाः ।
अवैष्णवत्वं विप्राणां महापातकसम्मितम् ॥ ६ ॥
अवैष्णवस्तु यो विप्रः सर्वकर्मसु गर्हितः ।
रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयात् ॥ ७ ॥
नित्य (त्यं) नैमित्तिकं काम्यं त्रिविधं श्रुति चोदितम ।
अवैष्णवानां विप्राणां कर्म्म तन्निष्फलं भवेत् ॥ ८ ॥
श्रीमहाविष्णुमन्येरन हीनदेवेन दुर्मतिः ।
साधारणं सकृत्त्रत मोऽन्त्यजोनान्त्यजोऽन्त्यजः ॥ ९ ॥
यो विष्णुशेषमात्मानमन्यशेषं प्रपद्यते ।
स चाण्डालो महापापी रौरवं नरकं व्रजेत ॥१०॥
अवैष्णवत्वं विप्राणामात्मनाशनकारणम ।
तस्मात्त् वैष्णवत्वं वै विप्राणां श्रुतिचोदितम ॥११॥
अवैष्णवोहिषो (हतो) विप्रो हतं श्राद्धमदक्षिणं ।
अब्रह्मण्यं हतं क्षात्रमनाचारं हतं कुलम् ॥१२॥
येवासुदेवं नार्चन्तिसर्वलोकेश्वरंहरिम ।
तेषां हि नरके वासः कल्पायुतशतैरपि ॥१३॥
चतुर्वेदी च यो विप्रो वासुदेवं न विन्दति ।
वेदभारभराक्रान्तः स वै ब्राह्मणगर्द्धभः ॥१४॥
तस्मादवैष्णवत्वेन ब्राह्माद्धि ( ब्राह्मणत्वं ) विहन्यते ।
वैष्णवत्वेन संसिद्धिः लभते नात्र संशयः ॥१५॥
नारायणं परंब्रह्म ब्राह्मणानां हि दैवतम ।
सोमसूर्य्यादयोदेवा क्षत्रियाणां विशां(तथा)पति ॥१६॥

शूद्रादीनां तु रुद्राद्या अर्चनीयाः प्रकीर्त्तिताः।
यत्तु रुद्रार्चनं प्रोक्तं पुराणेषु स्मृतिष्वपि ॥१७॥
तदब्रह्मण्यविषयमेवमाहप्रजापतिः ।
रुद्रार्चनं त्रिपुंड्रं च यत्पुराणेषु गीयते।
क्षत्रविट्शूद्रजातीनां नैतरेषां तदुच्यते ॥१८॥
तस्मात्त्रिपुड्रं विप्राणां (विप्रैस्तु) न धार्य्यं मुनिसत्तमाः।
यदाज्ञानाच्च विभ्रियुः पतितास्तेन संशयः ॥१९॥
ऊद्र्ध्वपुंड्रं तु विप्राणां सततं श्रुतिचोदितम ।
उद्र्ध्वं पुंड्रो मृदा शुभ्रो ललाटे यस्य दृश्यते ॥२०॥
सर्वपापविशुद्धात्मा स याति हरिमन्दिरे ।
स्नानं दानं तपो होम स्वाध्यायः पितृतर्पणम ॥
भस्मी भवन्तु (न्ति) तत्सर्वमुद्र्ध्वपुंड्रं विनाकृतम ॥२१॥
मुमुक्षुभिर्वीतरागैरप्रमत्तैः समाहितैः ।
उद्र्ध्वपुंड्रं हरेः पूजाक्ष (छत्रा) द्यै र(मम) लंकृतम ॥२२॥
ब्राह्मणैर्नैव मृद्धार्य्या न भस्म न च चन्दनं ।
यद्यबुध्या तु बिभृयात्प्रायश्चित्ती भवेत्तु सः ॥२३॥
न त्रिपुंड्रं द्विजैर्धार्यो न पट्टाकारमेव च ।
न चान्यदेवता भक्तिराद्यापि (रापद्यपि) कदाचन ॥२४॥
यस्तु नारायणादन्यं स्वतंत्रेण प्रपूजयेत्।
भवेयुर्निष्फलास्तस्य यज्ञदानादिसत्क्रियाः ॥२५॥
अङ्गभावेन देवानामर्चनं न निषिध्यते ।
स्वतंत्र बुद्ध्या यः कुर्य्यात् ब्राह्मणो नरकं व्रजेत् ॥२६॥

तस्मात्तु ब्राह्मणो नित्यं प्रयत्नेनार्चयेद्धरिं ।
तदाधारणभावेन देवताः परितोऽर्च्चयेत् ॥२७॥
अवैष्णवस्तु यो विप्रश्चांडालादधमः स्मृतः ।
न तेन सह भोक्तव्यमाद्यापि (मापद्यपि) कदाचन ॥२८॥
सुदर्शनोदूर्ध्वपुंड्राणां धारणं प्रथमं स्मृतम ।
तन्मंत्राध्ययनं चैव तदीयाराधनन्तथा ॥२९॥
नित्यमाराधनं विष्णोर्ध्यानं होमो जपस्तथा ।
तत्कथाश्रवणं चैव तन्नाम्नश्चैव कीर्त्तनम ॥३०॥
तत्पादतीर्थसेवा च तन्निवेदितभोजनम ।
प्रणामस्तस्यपुरतो नर्त्तनं गीतवादनम् ॥३१॥
ततस्तोत्रपठनं चैव तदन्येषामसेव्यता ।
एवं संपूजयन्नित्यं नारायणमनामयम् ॥३२॥
स वैष्णवो भवेद्विप्रस्सर्वलोकेषुपूजितः ।
ललाटे चोदूर्ध्व पुंड्रं तु बाहुमूले सुदर्शनम ॥३३॥
कंठे यद्वाक्षमालां तु पवित्रं दक्षिणे करे ।
वैष्णवस्य (वैष्णवेन) सदा धार्य्या हरिसंबन्धवेदनात् ॥३४॥
शंखचक्रांकं न कुर्याद्वात्मनो बाहुमूलयोः ।
कलत्रायत्र (पत्य) भृत्येषु पश्वादिषु विमुक्तये ॥३५॥
स पुत्र पशुदाराणां ब्राह्मणानां विशेषतः ।
कुर्य्यात्तु चिन्तनं चैव वैष्णवं नाम लक्ष्म च ॥३६॥
शंखचक्रे स्फुटं कुर्य्यात्प्रतप्ते बाहुमूलयोः
सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिवेदनात् ॥३७॥

होमानि नैव संतप्तचक्रमादाय वैष्णवम् ।
दक्षिणे बाहु मूले तु दग्ध्वा कर्म समाचरेत् ॥३८॥
विधिनाधायित्वव (धारयित्वैव) पवित्रंचक्रमुत्तमम् ।
ततस्सवैष्णवं याति नान्यथा द्विजसत्तमाः ॥३६॥
तस्मात्तु विधिवच्चक्रं धारयित्वा सुदर्शनम् ।
पश्चात्सर्वाणि कर्माणि कुर्वीत द्विजसत्तमाः ॥४०॥
चक्रस्य धारणे काले ब्राह्मणना (त्वं) विदुर्वुधाः ।
जातिकर्माणि वै कुर्य्याच्चौलोपनयनेपि वा ॥४१॥
मंत्राध्ययनकाले वा चक्रं धार्य्यं विधानतः ।
अधृत्वा विधिवच्चक्रं यद्धि कर्म समाचरेत् ॥४२॥
निष्फलं तु भवेत्सर्वमिष्टा पूर्त्ति (र्त्तिं) द्विजोत्तमाः ।
श्रीवशिष्ठस्मृतौ ब्राह्मणस्वरूप कथनं नाम प्रथमोऽध्यायः ।

---

# अथ द्वितीयोऽध्यायः

## अथ वैष्णवानां नामकरण संस्कारवर्णनम

भगवन् ब्रूहि विप्राणां जाति कर्मादि सत्क्रिया ।
नित्यनैमित्तिकं कर्म विष्णुपूजाविधेः परं ॥ १ ॥
आचक्ष्व विश्वेरेण ( विस्तेरणैव ) सर्वकर्ममशेषतः ।
वक्ष्यामि जातिकर्मादि सर्वानेव विधानतः ॥ २ ॥

जाते पुत्रे पिता स्नात्वा पुत्रं तेश ( दश ) दिनान्तरम् ।
मुच्यते पैतृकात्तस्मात सद्य एव द्विजोत्तमाः ॥ ३ ॥
तत्रदानं प्रकुर्वीत यथाशक्त्यनुसारतः ।
एकादशेऽह्नि संप्राप्ते मंगलस्नानमाचरेत् ॥ ४ ॥
ततःसूतकनिवृत्यर्थं स्वस्तिवाचनमाचरेत् ।
वैष्णवैर्ब्राह्मणैः सार्द्धमर्चयेत्पुरुषोत्तमम ॥ ५ ॥
स पुष्पमण्डपे रम्ये विमानध्वजशोभितं ।
अर्च्चयेद्गंधपुष्पाद्यैर्धूपदीपनिवेदितैः ॥ ६ ॥
आराधनं भगवतः कुर्य्याच्चक्रस्य परमात्मनः ।
नाम्ना नाकारयेच्चक्र मैश्वर्येण वैष्णवैः ॥ ७ ॥
षट्कोणैश्च समायुक्तं षडक्षरसमन्वितम ।
मध्ये प्रणवसंयुक्तमेन ( तन्त्र ) चक्रमिहोच्यते ॥ ८ ॥
बहुभिस्तु धनैर्युक्तं मूलमंत्रेण संयुतम ।
मध्ये तद्बीजसंयुक्तं शंखं कुर्य्याद्विचक्षणः ॥
स्नानं पंचामृतैः शुद्धैरर्चयेत्पुरतो हरेः ॥ ९ ॥
ध्यात्वा सुदर्शनं तस्मिन सहस्रारं महौजसम ।
कोटिसूर्य्यसमप्रख्यं तेजसाभुवनत्रयम ॥१०॥
पूजयन्तं सहस्रारं सर्वमंत्रसमन्वितम ।
ध्यात्वा दिव्यसहस्रारं पूजयेत्पुरतो हरेः ॥११॥
षडक्षरेण मंत्रेण पूजयित्वा विधानतः ।
जपं कुर्य्यात्ततः पश्चाद्दशसाहस्रसंख्यया ॥१२॥

षट्सहस्र जपित्वा वा पश्चाद्धोमं समाचरेत् ।
इषुमात्रे चतुर्दिक्षु गोमयेनापि वारिणा ॥१३॥
उपलिप्तं ( शुचौदेशे ) स्थंडिलं तु सु शोभनम ।
तस्मिनुल्लिख्य उल्लेखं ममिधावग्निजातयः ॥१४॥
तन्मध्येऽग्नि प्रतिष्ठाप्य स्वगन्योक्ता (श्रुतिस्मृति) विधानतः ।
आज्यसंस्कारपूर्वेणग्ध्यायामे ममाचरेत ॥१५॥
आघारावाज्यभागौच हुत्वा हेमं (होमं) ममाद्विजः ॥१६॥
पश्चात्तु वैष्णवंसूक्तै र्विष्णु ( मन्त्र ) प्रकाशकैः ।
पवित्रं तु इति द्वाभ्या ऋग्भ्या होमं ममाचरेत् ॥१७॥
विष्णोरराटममीति येनदेवा इति त्रिभिः ।
एवमाज्येन होतव्यं मंत्रैःप्रणवपूर्वकैः ॥१८॥
पश्चात्सुदर्शनं तस्मिन शंखं चाग्रे विनिक्षिपेत् ।
षडक्षरेण होतव्यमष्टाविंशतिसंख्यया ॥१९॥
दक्षिणं च भुजं पश्चाच्चक्रेण च दहेच्छिशोः ।
तन्मासं प्रदहेन पश्चाच्छेपेणैव द्विजोत्तमः ॥२०॥
शीतोदके विनिक्षिप्य पूजयेत्सुममाहितः ।
ततः त्रिस्त्वि(स्वि)ष्टकृतं हुत्वा होमशेषं समाव्हयेत् ॥२१॥
पूर्णपात्रोदकं गृह्य मंत्रयित्वा विचक्षणः ।
तेन संमार्जयेत्पुत्रं पवित्रं त इति ऋचा ॥२२॥
येन देवादि मन्त्रेण चान्यैरव्दैवतैः शुभैः ।
वैष्णवैश्चैव श(सू)क्तैश्च कुर्यात्संमार्ज्जनं शिशोः ॥२३॥

तस्य दक्षिणकर्णन्तु जपेदष्टाक्षरं स्वयम् ।
मूर्द्ध्नि हस्तं विनिक्षिप्य जपेद्द्वादशाक्षरम् ॥२४॥
षडक्षरेण मंत्रेण कुशैः सम्मार्जयेत्तनुं ।
नाम कुर्यात्ततः पश्चाद्वैष्णवं पापनाशनम् ॥२५॥
मासैश्च वत्सरैश्चैव मूर्त्तिभिर्द्वादशैर्युतम् ।
आरभ्य मार्गशीर्षेतु केशवाद्यैरधिष्ठितम् ॥२६॥
मासे यस्मिस्तु योजातस्तस्यतन्नामकीर्त्तितम् ।
तस्यनैसर्गिकं नाम वैष्णवन्तु विधीयते ॥२७॥
अन्यानि चैव नामानि गुणयोगे भवंति हि ।
प्रथमं वैष्णवं नाम सर्ववर्णेषु कीर्त्तितम् ॥२८॥
न चेत्तु वैष्णवोनाम यस्य वै द्विजसत्तमाः ।
अनामकस्सविज्ञेयः सर्वकर्मविगर्हितः ॥२९॥
एवं हि नामकरणं कर्त्तव्यं द्विजसत्तमाः ।
जाति (त) कर्मण्यलाभेतु विष्णोश्चक्रादि धारणम ॥३०॥
चौलोपनयने वापि तन्मंत्राध्ययनेऽपि वा ।
विधिना वैष्णवं चक्रं धारयित्वा द्विजोत्तमाः ॥३१॥
कर्म कुर्य्यात्ततः पश्चाच्छ्रौतस्मार्त्त विधानतः ॥ ३२॥

इति श्रीवशिष्ठस्मृतौ नामकरणादिविन्यासो द्वितीयोध्यायः

---

# अथ तृतीयोऽध्यायः

## वैष्णवानां निष्क्रमणान्नप्राशन संस्कारवर्णनम्

वशिष्ठ उवाच ।

अथ मासे चतुर्थे तु गृहान्निष्क्रामयेच्छिशुम् ।
सुस्नाप्य समलंकृत्वा स्वस्तिवाचनमाचरेत् ॥१॥
अर्चयेत्प्रयतो विष्णुं कर्मभिश्च सुशोभनैः ।
कदलीफलसंयुक्तं दध्यन्नं च निवेदयेत् ॥ २ ॥
सहस्रनामभिःस्तुत्वा नमस्कृत्वा तु विष्णवे ।
पुरतो वासुदेवस्य होमं कुर्य्याद्विधानतः ॥ ३ ॥
आयं गौरिति मंत्रेण हंसःशुचिषदित्यृचा ।
परोमात्रेण सूक्तेन दध्यन्नं जुहुयाद् द्विजः ॥ ४ ॥
ततोऽर्कमंडले विष्णुं ध्यात्वा संपूजयेद्गुरुं ।
हिरण्यमयवपुर्देवं शंखचक्रगदाधरम् ॥ ५ ॥
पद्मासनस्थं देवेशं सर्वाभरणभूषितम् ।
कुमारमीक्षयेद्भानुं जपन्वै सूर्यदैवतम् ॥ ६ ॥
चित्रं देवानामिति च जपित्वा (जप्त्वा) ऽर्घ्यं निवेदयेत् ।
मंत्रस्यत्वेति जप्त्वा च नमस्कृत्य दिवाकरम् ॥ ७ ॥
ब्राह्मणं भोजयेत्पश्चाच्छत्स्ना(शक्त्या) दद्या(च्च) दक्षिणाम् ।
एवं गृहान्निष्क्रमणं शिशोःकुर्य्याद्द्विजोत्तमाः ॥ ८ ॥
अथान्नप्राशनं कुर्यात् षष्ठे मासि विधानतः ।
विराड्य ( विराडाख्यं ) हरिं तत्र पूजयेत्कुसुमैर्दलैः ॥९॥

शर्कराज्यसमोपेतं पायसं च निवेदयेत् ।
होमं कुर्य्याच्च विधिवदग्न्याधानादि पूर्वकम् ॥१०॥
पायसेनैव होतव्यमाज्येन मधुनासह ।
प्रत्यर्चं पुरुपसूक्तेन जुहुयाद्वै समाहितः ॥११॥
इति सूक्तेन गायत्र्या वैष्णवेन (यथाविधि)।
प्राजापत्येन त्वदिति होमशेपं समापयेत् ॥१२॥
जप्त्वा च पौरुपं सूक्तं नमस्कृत्वा जनार्दनम् ।
हरेर्निवेदितं पश्चाच्छुभे पात्रे विनिक्षिपेत् ॥१३॥
दध्याज्यमाक्षिकैर्युक्तं प्राङ्मुखं पुरतो हरे।
होम्नाचान्नपतेन्नस्व इति मंत्रेण प्राशयेत् ॥१४॥
विप्रांश्च भोजयेद्विद्वानाशीर्भिरभिनंदयेत् ।
अथाष्टमे मासि कुर्य्याद्विष्णु पूजा विधानतः ॥१५॥
सेवनैःकुसुमैर्दिव्यैर्पूजयेत् पुरुपोत्तमम् ।
शर्कराज्येन संयुक्ता(संयुक्तं)मुपा (नैवेद्यं)वि निवेदयेत ॥१६॥
दीपैर्नीराजनं कुर्य्यादष्टोत्तरसहस्रकैः ।
गीतं नृत्यं च वाद्यं च कुर्याच्छुभकरं तथा ॥१७॥
विष्णोनुकम्वेति सूक्तेन महत्ते जुहुयाद्घृतम् ।
होमशेषं समाप्याथ ब्राह्मणान् भोजयेत्ततः ॥१८॥
तृतीयवत्सरे चौलं कुर्य्यादुक्तविधानतः ।
नांदीमुखेन समभ्यर्च्य पूर्वाण्हे पितृदेवतान् ॥१९॥
स्नात्वाऽपरेह्णि कुर्वीत स्वस्तिवाचनपूर्वकम् ।
अर्चयेन्माधवीपुष्पैः केशवं गरुड़ध्वजम् ॥२०॥

शर्कराज्येन संयुक्तं सूपान्नं (पक्कान्नं) विनिवेदयेत् ।
अष्टोत्तरसहस्रं तु जपेच्च द्वादशाक्षरम् ॥२१॥
नमस्कृत्वा तथा भक्त्या स्तुत्वा स्तुतिभिरेव च ।
प्राणायामत्रयं कृत्वा संकल्प्य विधिपूर्वकम् ॥२२॥
अग्नेरुत्तरतः स्थाप्य मुदकं गोमयं क्रमात् ।
व्रीहीयवमाषतिलशमीपत्रप्रपूरितान ॥२३॥
शरावान् पंच निक्षिप्य आघारान्तं विधाय च ।
आप्र अपा पुष्पाभि त्रिभिश्च जुहुयाद् घृतम् ॥२४॥
प्रजापतेऽनन्वं दिति जुहुया द्वैष्णवैस्त्रिभिः ।
शीतोष्णमुदकं नीत्वा पात्रे संयोजयेत्ततः ॥२५॥
उष्णंनवायवितिच मंत्रेणावभिषेचयेत् ।
नवनीतं दधियुतं गृहीत्वा कांस्यपात्रके ॥२६॥
अथैकविंशतिदर्भान्नच्छिन्नाग्रान् सुकोमलान् ।
ब्रह्मणा द्विजहस्तेन धारयेत्सुसमाहितः ॥२७॥
कुमारो ( रं ) मातुरुत्संगसंस्थितं वापयेत् पिता ।
श्लक्ष्णं पश्चात्समारभ्य शिरसि विप्र (हस्त) दक्षिणम् ॥२८॥
नचनीत्व। स्पृश्य केशान (नास्यमस्या) स्यावलोकयेत् ।
अदिति केशान् वपेसीत्यादयः (पद) मुह(प)स्पृशेत् ॥२६॥
औषधित्वेत्वोषधीश्च संस्पृशेच्च पुनः पुनः ।
पश्चात्श्लिष्ट तमुग्रासादिति(मंत्रं)रिति त(समुच्चरेत)पै क्रियः ।
येनावपदिति प्रथमं मंत्रेष्ट्याभिमुखं शिशुम् ।
त्रिभिश्च कुशासर्पित्कासहेबोशान् छिनत्ति च ॥३१॥

विन्यसेत्ताञ्छमीपर्णैः सहाऽऽनुडुहगोमये ।
येन धातेति मन्त्रेण द्वितीयं जपेत्तथा ॥३२॥
एवं तृतीयपर्य्याये येन भूपेति वै जपेत् ।
सर्वमन्त्रैश्च लभ्येत वापयेत्सुसमाहितः ।
एवमुत्तरतः पक्षैः त्रिभिर्मंत्रैस्तु वापयेत् ॥३३॥
यत्क्षुरेणेति मन्त्रेण क्षुरधारापमर्द्य च ।
नापितेन ततः पश्चात्कारयेत्केश कर्त्तनं ।
यद्दैवकाल धर्मंच तथा चूडान्तु कारयेत् ॥३४॥
सी (शी) ताभिः स्नापयेदद्भिरलंकृत्य यथा शिशुम् ।
ब्राह्मणान्भोजयेत्पश्चा ( विसृज्य ) पितृदेवताः ॥३५॥
ए (वं) यथाकुलं चौलं कर्त्तव्यं मुनि पुंगवाः ।
तूष्णीमेताः कृताः स्त्रीणां विवाहस्तुसमन्त्रकः ॥३६॥
आधानादष्टमे वर्षे ब्राह्मणस्योपनायनम् ।
जन्माष्टमे वा कर्त्तव्यं तथैवावृतु पञ्चमे ॥३७॥
द्विजः कुर्यात्कुमारस्य नव सूत्रस्य धारणम् ।
स्नात्वापरेऽन्हि पूर्वाण्हे कृतस्वस्त्ययनोबुधः ॥३८॥
विष्णुं सम्पूजयेद्देवं करवीरैः सुगन्धिभिः ।
शाल्योदनं गुरयुतं नैवेद्यञ्च समर्पयेत् ॥३६॥
धूपं दीपं च ताम्बूलं नर्त्तनं गीतवादनम् ।
प्रदक्षिणं नमस्कारं कुर्याद् भक्ति समन्वितः ॥४०॥
ततो देवस्य पुरतो होमं कुर्य्याद्विधानतः।
कुमारस्य स्पृशेच्छीर्षं सुस्नातम् समलंकृतम् ॥४१॥

शुभे मुहूर्त्ते विमले निवेश्य च स्वदक्षिणे ।
अग्निसंस्थापनं कुर्यादुपलेपादि पूर्ववत ॥४२॥
कुर्यादाघारपर्य्यन्तमग्न्याधानादिपूर्वकम ।
जन्मकर्मण्यभावेन विष्णोश्चक्रादिधारणम ॥४३॥
अत्र कुर्याद्विधानेन पश्चात्कर्म समाचरेत ।
उपवीतं तथा वस्त्रं मे पापं (विशुद्धं) चोत्तरीयकम ॥४४॥
मेखलाञ्चैव दण्डञ्च ( विधिवद ) धारयेद्द्विजः ।
त्रयमूर्ध्नि धृतं तन्तु तन्तुत्रयमथावृतम ॥४५॥
त्रि वृता ग्रन्थि संयुक्तं तत्पवित्रमिहोच्यते ।
कृतशौचं तथाशानं (स्नानं) उपवीतं व (च) धारयेत ॥४६॥
एतस्मैनंवचम्त्रेण मंत्रणैव सुवाससी ।
ऋग्भिः पद्भ्यामिति ऋचा धारयेदेनमाजिनम ॥४७॥
मेखलां वेष्टयेमोन्मती (च व) प्रावेयामित्यृचा तथा ।
एतक्ष्मनिच मंत्रेण पालाशं दण्डमेव च ॥४८॥
मृदा शुभ्रेण च तथा उद्ध्वं पुंड्ञ्च धारयेत् ।
नामभिः केशवाद्यैश्च यथासंख्यं द्विजोत्तमाः ॥४९॥
ऊर्द्ध्वं पुण्ड्र मृजुं सौम्यं सुपार्श्वं सुमनोहरम् ।
मध्ये छिद्रेण संयुक्तं श्रीपदाकृतकं हरेः ॥५०॥
ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षःस्थले माधवंच गोविन्दं कण्ठके तथा ॥५१॥
विष्णुञ्च दक्षिणे कुक्षौ बाहुके मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामकुक्षौ तु वामनम् ॥५२॥

श्रीधरं बाहुके वामे हृषीकेशं तु (वं) ( भुजे ) करे ।
अपारे (ग्रीवायां) पद्मनाभश्च पृष्ठे दामोदरं तथा ॥५३॥
तत्प्रक्षालनतोयेन वासुदेवेति मूर्द्धनि ।
मान्तरालोदूर्ध्वपुंड्रस्य मध्ये श्री विष्णुधामनि ॥५४॥
हरिद्रासार संभूतां तां नरः धारयेच्छ्रियम ।
ततोरेखां रचयेनापिपंचरि (?) वित्तर्पयेत् ॥५५॥
ततः प्रधानं होमश्च कुर्वीत द्विजसत्तमाः ।
चौलोक्तो (चौलोक्तैः) जुहुयान्मंत्रै राजेनेव (राज्येनैव)
द्विजोत्तमाः ॥५६॥
अग्नेरुत्तरतस्त्विप्रन्प्राङ्मुखः प्रयतो गुरुः ।
आत्मनोऽभिमुखं कुर्यात्सावित्रीं मनसा स्मरेत ॥५७॥
तत्सवितुर्वृणा (णी) महे त्यर्द्धर्चेनाञ्जलौ जले ।
कुमारस्याञ्जलौ सिंचेत्सोऽपिभूमौ निवेशयेत ॥५८॥
देवस्य त्वेति मन्त्रेण गृहीत्वा दक्षिणं करे ।
मुखमालो ( कयन ) स्तस्य मनसा संस्मरेद्धरिम ॥५९॥
सावित्रीं वित्पुत्रौ मूलमन्त्रेण संस्मरेत ।
नारायणं जगन्नाथं स्वगुरुं मनसा स्मरन ॥६०॥
आदित्य मण्डलान्तस्य (स्थं) ध्यात्वा विष्णुं सनातनम ।
जपेद्वा प्रणमेच्चैव हंसःशुचिपदित्यृचा ॥६१॥
ब्रूयात्कस्यासि कै (मंत्रादिकं) पश्चात शेषं कर्म समाचरेत ।
युवासुवासार्द्धर्चेनावृतेन च प्रदक्षिणम ॥६२॥

उत्तरेणार्द्ध चैव कुर्य्या(होमं)हिती ममोहमम (समाहितः)।
तूष्णी ममिन्समादध्यात ब्रह्मचारी हुतासनी ॥६३॥
अग्नये ममिधमिति मंत्रेणैके तथैव च।
स्त्रुवेण परिषिंचामीति कुर्य्यात्प्रदक्षिणं ततः ॥६४॥
अग्नौ प्रताप्य हस्तंत्रीरिदं मन्त्रमुदीरयेत।
पादयोः प्रणमेत्पश्चादाचार्यस्य ममाहितः ॥६५
जान्वा वै पाणि संगृह्यस्नहि मंत्रं ममेति च।
वाससा तस्य पादाभ्यां गृहीत्वा दक्षिणं करम ॥६६॥
आचार्यस्तु वदेन्मन्त्रं यथा नियुक्तमागतः।
मव्याहृतिका मप्रणवा गायत्री शिरमा सह ॥६७॥
न्यासं च विष्णुगायत्री द्वादशार्णं मनुं नया ( तथा )।
अध्यापयेद्विधानेन शौचाचाराश्च शिक्षयेत ॥६८॥
होमशेषं समाप्याथ चरेद्भैक्ष्यं द्विजोत्तम।
स्वर्णे रौप्ये च कांस्ये वा शुभपात्रे शुभान्वितः ॥६९॥
अप्रत्या स्थापन द्विमागृह्णीयाच्छुभतण्डुलान।
भर्त्ताव(भवति)मम्यां(भिक्षां)प्रदेहीति याचयेद् विनयान्वितः
अनिन्द्येषु च विप्रेषु चरेद्भैक्ष्यं ममाहितः।
भिक्षालब्धं च यद् द्रव्यं ब्राह्मगे विनिवेदयेत ॥७१॥
सूर्य्यास्ते तर्पयित्वा हि आसीत गुरुणा सह।
स्वा (रवा) वस्ति (स्त) मिते रात्रौहोमं ब्रह्मदिनेचरेत् ॥७२॥
स्नपयित्वा चरुं तत्र भिक्षालब्धैश्च तण्डुलैः।
तस्मिन्नग्नौ जु (सु) होतव्यं भिक्षाधानादि पूर्वकैः ॥७३॥

सदसस्पतिमद्भुतमृचाऽऽचामेत्ततः परम् ।
ऋषिभ्यः स्वाहेति तथा चरुणा जुहुयात्क्रमात् ॥७४॥
ततःस्विष्ट कृताहीनि होमशेषं समापयेत्
ब्राह्मणान्भोजयेत्पश्चादाशीर्भिरभिवन्दितः ॥७५॥
आचार्य्येणाभ्यनुज्ञातः भुञ्जीत नियमो(तो)व्रती ।
त्रिरात्रं संग्रहेदग्निमाचार्य्योनियतः शुचिः ॥७६॥
सम्प्राप्ते च चतुर्थेऽन्हि ग्रामान्निष्क्रम्य चैवहि ।
तदग्निसहितो गत्वा प्रागुदीचिं दिशं तथा ॥७७॥
पत्रं सर्वं कुशाहस्तं च म(अ) श्वत्ये(त्थे)वा समाविशेत ।
तत्र सम्पूजयेद्देवा(वं)नुदकुम्भं हुतासनम् ॥७८॥
पालाशं चैवोपचारेण गन्धपुष्पाक्षतादिभिः ।
पालालं (शं) पूजयेद भक्तया विष्णुरूपमनुस्मरन ॥७९॥
पुरतो देवता तत्र जिनी ( पूजयेत ) वा स्वस्वनामभिः ।
श्रद्धा मेधा च सावित्री तथा प्रज्ञावधारणा ॥८०॥
एतानुद्दिश्यहोतव्या (व्यं) आज्यमेध्यादि पूर्वकम ।
ततः प्रदक्षिणं कृत्वा होमशेषं समापयेत ॥८१॥
तामुश्चैवेति मन्त्रेण नमस्कृत्य विसर्जयेत ।
तदग्निमुत्सृजेत्व(त्त)त्र नच दंडाजिनानि च ॥८२॥
धारयेत्पूर्ववन्मंत्रेणैवान्तः प्रयतः शुचिः ।
एवं समाप्य वै पश्चाद्द्विजान्सम्भोजयेत्तत. ॥८३॥
उद्दिश्य देवताः तत्र पूजयेश्च शुचासनी ।
एवं कृत्वा विधानेन गृहान्गच्छेत्ततः परम् ॥८४॥

शौचादिकं समाचारमाचारे शिक्षयेद् गुरुः ।
आचार्य्याधीनवृत्तिस्तु ब्रह्मचर्य्यव्रतं चरेत ॥८५॥
प्रतिवेदं द्वादशाब्दमष्टाब्दं पंचवर्षकम ।
अब्दं चापि चरेद्भक्तया यथाशास्त्रोक्तमार्गतः ॥८६॥
स्त्रीसंगं चैव ताम्बूलं गन्धमाल्याञ्जनं तथा ।
घृतं स्तेयं प्राणहिंसा (परद्वेषं) परशय्याऽपवादनम् ॥८७॥
मधुमा(मां)साशनं चैव कौटिल्यं परुषं वचः ।
कांस्यके भोजनं चैव प्रत्येकं व्रतलोपने ॥८८॥
अपराणि सर्वकर्माणि वर्त्त(र्ज)येद्द्विजसत्तमाः ।
मौञ्जीबन्धनमारभ्य शौचाचारं समाचरेत् ॥८९॥
आसेव्य दक्षिणे कर्णे ब्रह्मसूत्रं तु पृष्ठतः ।
प्राङ्मुखोदङ्मुखो वापि विण्मूत्रे विसृजेद्बुधः ॥९०॥
दक्षिणाभिमुखो रात्रौ यथा सुखमुखस्तथा ।
उल्पयानं(अन्धकार)दिनः (दिने) शौचं कुर्य्यादुक्त विधानतः
मृद्भिरभ्युद्धृतैरद्भिर्यथासंख्यं प्रशोधयेत ।
अर्द्धप्रसृतिमात्रैस्तु मृद्भिरभ्युद्धृतैर्जलैः ॥९२॥
गन्धलेपक्षयकरं शौचं कुर्याद्यथाविधि ।
अपाने द्वादशप्रोक्तो षड्वारं मेहने च (तथा)मृत्तिका ॥९३॥
वामहस्ते दश प्रोक्ता उभयोः सप्त मृत्तिका ।
तथा त्रिभिश्चतुर्भिर्वा पादयोः क्षालनं स्मृतम ॥९४॥
त्रिभिर्लिंगे करस्तद्वदुभयोर्मृद्द्वयं स्मृतम ।
द्वे द्वे च पादयोःमूत्रे शुक्रे चहि (द्वि)ग(गु)णंस्मृतम् ॥९५॥

अधोवायुविसर्गेऽपि मूत्रं शौचवदाचरेत् ।
स्त्रीशूद्रद्विजबन्धूनामर्द्धं प्रोक्तं मनीषिभिः ॥९६॥
रात्रावर्द्धं (द्धं) भवेच्छौच मापद्यपि तथैव च ।
यतीनां च वनस्थानां शौचं तत्त्रिगुणंस्मृतम् ॥९७॥
कृताशौचं विधानेन क्षालयेद्धस्तपादकौ ।
अन्तर्जानुः शुचौ देशे उपविष्टो ह्युदङ्मुखः ॥९८॥
प्राग्वा ब्राह्मेण तीर्थेन नित्यमाचमनं चरेत् ।
अंगुष्ठमूलं ब्राह्मंस्यात्प्राजापत्यं कनिष्ठिकम् ॥९९॥
प्रादेशिन्या पैतृकन्तु करस्थं दैवतं स्मृतम् ।
आग्नेयं मध्यमं विद्यात्तीर्थाचामे द्विजोत्तमाः ॥१००॥
प्राजापत्यात्तु होतव्यं देशिन्या पितृतर्पणम् ।
कराये ( ग्रे ) ण प्रदानंस्यान्मध्यमेन परिग्रहम् ॥१०१॥
हृदयंगमाभिरद्भिस्त्रिसम्प्राश्य उपस्पृशेत् ।
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं वा समाहितः ॥१०२॥
मंत्रद्वयेनाभिमन्त्र्य तस्मिन्ध्यायेत्सनातनम् ।
अनन्तभोगपर्यङ्कशयानं रमया सह ॥१०३॥
ध्यात्वा निमज्य देवेशं त्रिपठेदघमण (मर्पण) म् ।
तथैव मंत्ररत्नेन तर्पयेदप्सु निमज्य च ॥१०४॥
उत्थायाचम्य विधिवद्देवतास्तर्पयेत्ततः ।
उत्तीर्य्यवस्त्रं निष्पीड्य पुनः (रा) चमनं चरेत् ॥१०५॥
आच्छाद्य धौतवसनं पुनराचमनं चरेत् ।
धृतोर्द्ध्वपुण्ड्रदेहस्तु पवित्रकर एव च ॥१०६॥

उपासीत ततः सन्ध्यां प्राङ्मुखोदङ्मुखोऽपिवा ।
अञ्जलीनिकरो भूत्वा प्राणायामान्समाचरेत ॥१०७॥
सव्याहृतिकां सप्रणवां गायत्रीं शिरिणा (रसा) सह ।
सकृत्स्मृत्वा (आदि पुरुपं) णाहृत्र्यं पुष्टनाशुस्यां(प्राणान्हृदि)
न्यसेवपन ( निवेशयेत ॥१०८॥
वामेना ( सा ) पुटेनवत्वामुमा (?) परतस्ततः ।
तथैव कुम्भकं कृत्वा रेचयेद्दक्षिणेन तु ॥१०९॥
प्राणायामत्रयं कृत्वा संध्या होमजपादिषु ।
व्याहृतीनान्तु सर्वासामृपिश्चैव प्रजापतिः ॥११०॥
छन्दश्च देवी गायत्री परमात्मा च देवता ।
ब्रह्मर्पिः चैव गायत्री सविता देवता स्मृता ॥१११॥
एवंज्ञात्वा विधानेन प्राणायामं समाचरेत ।
आपोहिष्ठेतिमन्त्रेण मार्जयेत्तु द्वयेन च ॥११२॥
सूर्य्यश्चमेति मंत्रेण मंत्रवित्तमभिवादयेत ।
मंत्ररत्नेन संप्राश्य पश्चादाचमनं चरेत ॥११३॥
आपोहिष्ठेति मन्त्रेण पुनः सम्मार्जनं ततः ।
इत्यापार्के प्रतिपाहतृचा यत्र्या अतन्द्रितः ॥११४॥
आदित्यमण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम ।
शुद्धस्फटिकवर्णाभं कोमलाङ्गायुधैर्युतम ॥११५॥
सुस्निग्धनीलकेशान्तं रत्नकुण्डलशोभितम ।
पद्मासनस्थं देवेशं मुक्तादामविभूषितम् ॥११६॥
शुक्लमाल्याम्बरधरं शुक्लगंधानुलेपनम ।
वामांगे च श्रियायुक्तं ध्यात्वा मन्त्रं जपेद्बुधः ॥११७॥

सा च प्रोमंत्र रत्नंच जपोदयो दशन रंगानं(?) ।
उदुत्यमिति सूक्तेन चोपस्थानं विसर्जयेत् ॥११८॥
वैष्णवेषु च मंत्रेषु भिक्षाचरणमाचरेत ।
न (भैक्षं)मेते (म्ले)छलब्धे तु तण्डुला नितरेषु वा ॥११९॥
आपद्यपि न गृह्णीत पाषण्डपतितादिषु ।
दण्डाजिनोपवीतानि मेखलानि च धारयेत् ॥१२०॥
भिक्षालब्धं च यद्द्रव्यमाचार्य्याय निवेदयेत् ।
तस्य प्रसादरूपेण भुञ्जीत तदनुज्ञया ॥१२१॥
शुभे पात्रे च शुद्धान्नं गायत्र्या चाभिमंत्रयेत् ।
सत्यं त्वर्त्तेन परिषिंचामीति प्रदक्षिणम् ॥१२२॥
परिषिंच्यत्वनेनैव ह्यर्पितं वैष्णवेषु च ।
पञ्चप्राणांश्च जुहुयात् पञ्चैवाऽऽहुतयः क्रमात् ॥१२३॥
ध्यायन्नारायणं देवं ततो भुञ्जीत वाग्यतः ।
अमृतापिधानमसीत्यापः प्राश्य विचक्षणः ॥१२४॥
किञ्चिदुच्छिष्टमादाय सोदकं निर्वपेद्भुवि ।
संखे पुरस्य (?) निलेयेप आंबुद निवासिनाम् ॥
अर्थिनामुदकं नित्यमक्षय्यमुपतिष्ठतु ।
तत्र प्रक्षाल्य तोयेन मुखहस्तं मृदा सह ॥१२५॥
दंतान्काष्ठेन संशोध्य गण्डूषैश्चैव वारिभिः ।
प्रक्षाल्य हस्तौ पादौ च सम्यगाचमनं चरेत ॥१२६॥
उच्छिष्टपात्रं तमभि संप्रोक्ष्य च विशुध्यति ।
यावच्च हस्तपर्यन्तं तावदध्ययनं (चरेत) पठेत् ॥१२७॥

अस्तं गते दिनकरे सन्ध्यां पूर्ववदाचरेत ।
शौचाचमन स्नानादि (नं) यथाविधि समाचरेत ॥१२८॥
शीतोदके त्वशक्तश्चेत्कुर्यादुष्णेन वारिणा ।
मंत्रद्वयेनाभिमन्त्र्य स्नानं तत्कर्म शुद्धये ॥१२९॥
शुचिवस्त्रधरः सम्यगाचम्य विजितात्मवान ।
धृतोर्ध्वपुण्ड्र (देह) कोपश्च सन्ध्यां कुर्याद्यथाविधि ॥१३०॥
प्राणायामंच विधिवत्पूर्ववन्मार्जयेत्ततः ।
अग्निश्चमेति मंत्रेणापः प्राश्याचमनं चरेत ॥१३१॥
पुनः सम्मार्जनं कृत्वा पश्चादर्थं (र्घ्यं) निवेदयेत ।
उत्थाय मण्डले ध्यात्वा वासुदेवं सनातनम ॥१३२॥
नीलोत्पलदलश्यामं रक्ताम्भोरुहलोचनम ।
शंखासिशार्ङ्गवज्रधरं पीतवस्त्रं चतुर्भुजम ॥१३३॥
पद्मनाभं श्रियायुक्तं ध्यायेत्सवितृमण्डले ।
दद्यादर्ध्यत्रयं तस्मै गायत्र्या विनयान्वितः ॥१३४॥
आसीनश्च जपं कुर्यात्स्वल्पमष्टोत्तरं शतम ।
तथामंत्रद्वयं जप्त्वा द्रष्ठवित्पाना रविं ॥१३५॥
उपस्थाय च सूक्तेन नमस्कृत्य विसर्जयेत ।
अग्नि कार्यं ततः कृत्वा गुरून्नत्वाभिवादयेत ॥१३६॥
भैक्ष्यं चरेद् यथापूर्वं परिसंख्या तथा निशि ।
ऋतं त्वां सत्येन परिषिंचामीति पूर्ववत ॥१३७॥
अश्नी(श्नी) याद्धि (द्व) यथाशक्त्या स्वाध्यायाध्ययनं ततः ।
शुचौ देशे शुचिर्भूत्वा शयीत नियतेन्द्रियः ॥१३८॥

उत्थाय पश्चिमे यामे यामं ध्यानं समाचरेत् ।
एवं प्रतिदिनं कुर्याद् ब्रह्मवादी जितेन्द्रियः ॥१३९॥
वेदव्रतानि तत्काले कुर्य्याद्विप्रो यथाविधि ।
अध्यापनमुपाकर्म श्रावण्यां श्रवणेऽपिच ॥१४०॥
हस्ते चोत्पन्नमाने वा पञ्चम्यां श्रवणेऽपिवा ।
नदीं गत्वा तु पूर्वाण्हे गुरुणा महितो व्रती ॥१४१॥
तत्र स्नानं (त्वा) विधानेन तर्पयेद्देवतानृषीन् ।
अर्चयित्वा शुचौ देशे हरिं सर्वगतं तथा ॥१४२॥
परितः पूजयेद्देवानृषींश्च कुसुमाक्षतैः ।
विमला मुरवीतानं नदधावा पशार्ङ्गिणे ॥१४३॥
शाके राजसमे युक्तं सक्तुं हव्यं निवेदयेत् ।
अष्टोत्तरसहस्रं तु जपेदष्टाक्षरं मनुं ॥१४४॥
तत्र संस्थापयेदग्निमुपलेपादि पूर्वकम् ।
दया(द्या)दाज्य भागंच कृत्वा होमं समापयेत् ॥१४५॥
श्रद्धामेधा च सावित्री तथा प्रज्ञावधारणा ।
एतानुद्दिश्य होतव्यं सक्तुं साज्यं सशर्करम् ॥१४६॥
मण्डलाभ्यांच ऋग्भ्यांच सूक्तैर्विष्णुप्रकाशकैः ।
ततःस्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥१४७॥
उपवीतानि देवस्य दद्यादष्टोत्तरं शतम् ।
अष्टाविंशति वा दद्याद्भक्त्या देवस्य शार्ङ्गिणः ॥१४८॥
सुगन्धपुष्पधूपाद्यैः नैवेद्यैर्विविधैस्तथा ।
पूजयित्वा विधानेन नमस्कृत्य च भक्तिमान् ॥१४९॥

प्रागग्रे पु कुशेष्वेवमासीनः पुरतो हरेः ।
वेदानध्यापयेत्तत्र सांगोपांगसमन्वितान ॥१५०॥
समाप्ति वाचयित्वाथ ब्राह्मणान्भोजयेत्ततः ।
तदाप्रभृति वै शिष्यान्नित्यमध्यापयेद् गुरुः ॥१५२॥
यथाधीयीत तथा रात्रौ तस्मिन्नासीतद्विजोत्तमः ॥१५३॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतु संधिपु भुक्त्वा वा श्राद्धं पु प्रतिगृह्य वा ॥१५४॥
संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
सक्ष्यं(माप्य)वेदं (ग्रु निशा) मारण्यकमधीत्य च ॥१५५॥
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग् गुरु बन्धुपु ।
अकालवर्षेऽनध्यायस्त्रिरात्रन्तु विचक्षणः ॥१५६॥
अनध्यायदिनं वर्षं सोमगे ना विधीयते ।
अयने विपुवे चैव शयने भोजने तथा ॥१५७॥
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिपु ।
अपरेपु च पक्षेपु अष्टकादिस्मृतिष्वपि ॥१५८॥
हेमन्ते शिशिरे चैव नाध्यापयेद्वेदसंहिताम् ।
अन्वष्टकाव पूर्वेपु अष्टका इति सस्पत्व (शाश्वतम) ॥१५९॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंक्षये ।
भुक्त्वाऽर्द्र पाणि रंभोऽन्त रर्द्ध रात्रेऽतिमारुते ॥१६०॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ।
पांशुप्रस्कन्धदिग्दाह संध्यानीहार भीतिपु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥१६१॥

श्वक्रोष्टुगर्दभोलूकसामवाणार्त्तनिःस्वने ॥१६२॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणं ।
तत्कालिकाननध्यायान्वदन्ति मुनिसत्तमाः ॥१६३॥
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरेत्वहोरात्रमनध्यायं प्रकीर्तितम ॥१६४॥
सिंहव्याघ्रवराहोष्ट्रमृग(यानेषु) जानिषु वों(वां) त्यजेः ।
अन्तरागमनेन्वाष्टं (?) वाध्यायेन्त्ककटार्धकम ॥१६५॥
गच्छेमा(द)नन्तरं वापि जानुभ्यां मुक्ति शुद्धये ।
परे (चरेत) चान्द्रायणं वापि जानुभ्यां भुवि शुद्धये ॥१६६॥
एवमध्यापयेच्छिष्यान्वाग्यतः संयतेन्द्रियः ।
शनैश्चशिक्षयेच्चैव न च पारुष्यवाग्भवेत ॥१६७॥
शयानः प्रौढपादो वा नलाभ्यंगशिरस्तथा ।
नाध्यापयेत्तथा शिष्यन्नच पर्य्यङ्कसंस्थितः ॥१६८॥
कृताञ्जलिस्तस्य मनो गुरोरभिमुखं शिशुः ।
अधीयीत तथा शिष्यो वाग्यतो नियतेन्द्रियः ॥१६९॥
एवमध्ययनं कुर्यात्तर्पयेद्दे वतान पितॄन ।
उत्सर्जनं तथा कुर्यात पौषे मासेऽष्टकासु च ॥१७०॥
रोहिण्यां श्रवणे वापि पौर्णमास्यामथापि वा ।
उपाकर्मविधानेन कुर्य्याच्छिष्याग्रतो गुरुः ॥१७१॥
स्नात्वा विष्णुं समभ्यर्च्य तर्पयेत्पितृदेवताः ।
पयसा स्नपयित्वा तु ननाश्नंनितं (?) दुयात ॥१७२॥

शर्कराज्येनसंयुक्तां तिलैश्च्या जुहुयात्ततः ।
तर्पयित्वा पितृन्देवान कुर्य्यादुत्सर्जनं ततः ॥१७३॥
वर्षे वर्षे प्रकर्त्तव्यं वेदाध्यापनपारगैः ।
अध्यापनमुपाकर्म तथैवोत्सर्जनादिकम ॥१७४॥
समस्तसंहितायान्तु महानाम्नीव्रतं चरेत ।
आरण्यके वेदभागमवधार्यवनान्तरे ॥१७५॥
उदगयनं पूर्वपक्षे स्थालीपाली (कादिभिः) सितैर्युतम ।
आचार्यो जुहुयात्तत्र अग्न्याधानादिपूर्वकम ॥१७६॥
मनोहरे शुचौ देशे तरुच्छायासु शीतले ।
अर्चयेज्जगतामीशं पुष्पैरारण्यसम्भवैः ॥१७७॥
अन्यानि फलमूलानि भक्ष्याण्येव निवेदयेत ।
नमस्कृत्वा तु जुहुयान्मूलमंत्रेण मंत्रवित ॥१७८॥
नारायणानुवाक्येन तिलसंम्मिश्रितं चरुम ।
अग्नावग्निश्चरेत्यादि जपेन्मंत्रैः पृथक पृथक ॥१७९॥
हुत्वा व्याहृतिभिः पश्चाद्धोमशेषं समापयेत ।
आदित्य मण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम ॥१८०॥
मंत्रेणार्घ्यं प्रदातव्यं त्वंततानामिति द्विजः ।
त्रिरात्रमेकरात्रम्वा दीक्षां कुर्वीत वैदिकीम ॥१८१॥
अध्यापयेत्ततःशिष्यान विद्यामारण्यकीं गुरुः ।
पुरतो वासुदेवस्य निर्जने विज(पि)नेषेः (स्थितः) ॥१८२॥
अधः शायी ब्रह्मचारी दीक्षितो नियतोव्रती ।
प्रागेव भोजनादत्र ह्यधेतव्यं(अधीयीत)समाहितैः(तः) ॥१८३

नापराण्हे न सायान्हे रात्रावपि न कीर्त्तयेत् ।
एवमध्यापयेच्छिष्यान्विद्यामारण्यकीं बुधः ॥१८४॥
तदर्थमधिदातव्यं समाम्नाम्नापलासमे (?) ।
समाव्रतो ब्रह्मचारी यावदध्ययनंभवेत ॥१८५॥
प्रतिवेदसमाप्तौ तु शक्त्या सम्पूजयेद् गुरुम ।
तौ(औ)दा(द)नाख्यव्रतं कर्म कुर्य्याद् व्रतं समापयेत ॥१८६॥
चौलकर्मविधानेन कुर्य्याद्व दव्रतं स्वयम ।
श्याश्रु (स्वस्ति) वाचनमेवात्र स्वयं कुर्वीत पूर्ववत ॥१८७॥
समाप्य वेदं गुरवे दद्याद्गोदक्षिणावसुम ।
वेदोक्तानि पुराणानि सेतिहासानि शक्तितः ॥१८८॥
शास्त्रं मन्वादिकंचैव यथावा (शक्ति) सभ्ययन(समभ्यसेत)
वेदव्रतानिपार्श्वानीन्वाह्यमयमेव (?) हि ॥१८९॥
गुरवे दक्षिणां दत्वा स्नायीत तदनुज्ञया ।
व्रतं सर्वं तन्वाख्यं(औदनाख्यं) हि होमपूर्वकमाचरेत ॥१९०
स्नात्वा स्वस्त्ययनं कृत्वा होमपूर्वं समाचरेत ।
उपलेपादिपूर्वेण चौलोक्ता व्याहृतेः क्रमात् ॥१९१॥
हुत्वा ततः समभ्यर्च्य होतव्यं याज्ञिकैः शुभैः ।
समाग्निर्वचइत्यादिदशभिः प्रत्यृचं हुवेत ॥१९२॥
होमशेषं समाप्याथ मंगलस्नानमाचरेत् ।
मेखलाजिन दण्डादि(नि) ब्रह्मचर्य्यं सवनानि (व्रतानि) च ॥
मुक्तो (क्त्वा) नवानिवासांसि धारयेत्समलङ्कृतः ।
कर्णयोः कुण्डलेचैव चक्षुषोश्चाञ्जनं तथा ॥१९४॥

कटं (श्यां) च मणिसूत्रं च उपानच्छत्रमेव च ।
चन्दनं कुङ्कुमं चैव वेणुं वंसकमण्डलुम ॥१६५॥
धारयित्वा गुरुं म(न)त्वा ब्रह्मचर्य्यं समापयेत ।
पूर्वेषु सर्वतीर्थेषु सम्यग्विष्णुं समर्च्चयेत ॥१६६॥
अयुतं च जपेन्मन्त्रं वृतं (तो) नित्य मतीन्द्रियः (तन्द्रितः) ।
तर्पयेज्जुहुयाच्चैव नामभिः कीर्त्तयेत्सदा ॥१६७॥
ब्रह्मचर्योक्तमार्गेण सकृद्भोजनमाचरेत ।
विष्ण्वालये वसेद् वापि शायीत(शयीत)नियतेन्द्रियः ॥१६८
नालपेद् विष्णवभक्तं वर्वचनैस्सह (न तैश्च) संचरेत ।
एवं व्रतं चरेत्स्या (स्या) त्वा विजितःसंजितेन्द्रियः ॥
यावदाचार्य वाक्यं हि तावत्कालं समाचरेत ॥१६९॥

इति श्री वशिष्ठ संहितायां चौलोपनयनादिकथनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः

## गृहस्थधर्मवर्णनम

वशिष्ठ उवाच

गुरवे दक्षिणां दत्वा यमिक्षेमं (योगक्षेमं) समाचरेत
विरक्तः प्रव्रजेद्विद्वाननुरक्तो गृहे विशेत ॥ १ ॥
नैष्ठिकेन व्रतेनापि यावज्जीवं समाचरेत् ।
वसेदाचार्यसंङ्काशे विष्णोर्वा वैष्णवेषु वा ॥ २ ॥

अ(थ)ध्य वा परिचर्य्यायां विष्णोर्देवस्यशा (शा) ङ्गिणः ।
वैष्णवाच (चार) यवृद्ध्यर्थमुद्वाहेदुत्तमां स्त्रियम् ॥ ३ ॥
अरोगिणीं भ्रातृमतीं ममानार्षजगोत्रजां ।
पञ्चमे सप्तमे चैव मातृत पितृतस्तथा ॥ ४ ॥
दशापूरुषविख्यातांश्रौत्रियाणां महाकुलान् ।
शीललक्षणसम्पन्नां बुद्धिरूपकुलोचिताम् ॥ ५ ॥
पाखण्ड शामत (म्लेच्छ) पतितां समुत्पन्नां विसर्ज्जयेन् ।
एतैरेव गुणैर्युक्तः सर्वोत्कृष्टस्तथैव च ॥ ६ ॥
विद्यातपःसमायुक्तो वरः श्रेष्ठःस्वरूपवान् ।
विष्णो ततोऽनुपूर्वेण विवाहोब्राह्मणस्य वै ॥ ७ ॥ ॥
राज्ञो द्वे च विशश्चैका न शूद्रां नोद्वहेद्द्विजः ।
शूद्रस्य तु सवर्पा च विवाह्योत्तरोत्तरस्तथा ॥ ८ ॥
ह्यनुलोमा विवाह्यास्तु नोद्वाह्या प्रातिलोभा(मि) काः ।
पैतृघाती च नोद्वाहेत्तथा मातुः स्वसुः सुतां ॥ ६ ॥
मातुलस्य च पौत्रीं वा मातामहसुतां तथा ।
ब्राह्मं दैवं प्रजापत्यमार्षश्चेति शुभास्तथा ॥१०॥
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् ।
राक्षसासुरगांधर्वपैशाचा गर्हितास्तथा ॥११॥
आहूय दीयते कन्या सा कन्या समलङ्कृता ।
ब्राह्मो विवाहोविज्ञेयो (यः) सर्वं क्रतुफलंस्मृतम् ॥१२॥
यज्ञस्यऋत्विजो दद्यात्स दैवोद्वाह उच्यते ।
वरश्वाहूय समादाय स आर्ष इति दीयते ॥१३॥

सधर्मचरितः (सोऽयं) प्राजापत्य उदाहृतः ।
विवाह आसुरः प्रोक्तः शुल्कमादाय दीयते ॥१४॥
राक्षसो युद्धहरणात् गान्धर्वः समद्यापितः (समयान्मिथः) ।
यश्चौर्येण स पैशाचो मुनिभिः समुदाहृतः ॥१५॥
कन्यांवरयमाणानामेवंधर्मो विधीयते ।
सुहृदोमन्त्रवन्तश्च चत्वारो ब्राह्मणाः शुभाः ॥१६॥
तां कन्यां वरयेत्पूर्वं जय(पे)त्वेदसमान्तरम् ।
अतो देवेति सूक्तं न प्राग्मातश्च इति ऋचा ॥१७॥
अनर्क्षराजवेपश्चात्कन्या वैवाहिका शुभा ।
जपत्वेवरयेत्कन्या कुसुमाक्षतपाणयः ॥१८॥
अमुष्यपौत्रींवामुष्यपुत्रीं वाऽमुकगोत्रजाम् ।
इमां कन्यां वरायास्मै वयं तद्विवृणीमहि ॥१९॥
(तव पाद्य) तत्रपाध्यमितिब्रूयाद्योऽसौ कन्याप्रदायकः ।
वरो वधूगृहंगच्छेत् गीतवादित्रनिःस्वनैः ॥२०॥
पतिपुत्र (वती) पुनः स्त्रीभिस्तथाविप्रैः शुभान्वितैः ।
मंगल द्रव्य संयुक्तो जपन्वै वेद संहिताम् ॥२१॥
प्रक्षाल्यपादावाचम्य स्वस्तिवाचं समाचरेत् ।
भगवन्परिचर्य्यार्थमित्युदीर्य्योद्वहेत्स्त्रियम् ॥२२॥
ततो (वे) विद्यां संहितायां पालिकाध्वजतोरणैः ।
पूजयेद्वेदेवेशं पङ्कजैः कुसुमैः शुभैः ॥२३॥
अर्चयेद्रमयासार्द्धं दिव्यगन्धैर्मनोहरैः ।
पायसं शर्कराज्यादि प्रभूतफलसंयुतम् ॥२४॥

सुशीतलं पानकं च कर्पूरेण सुवासितम् ।
सपूगनागपत्रा (द्या) दि ताम्बूलश्चसमर्पयेत् ॥२५॥
पश्चान्नीराजनं कृत्वा सर्वं वस्तु निवेदयेत् ।
पश्चात्पुष्पाञ्जलिं दद्यान्नमस्कृत्य च शार्ङ्गिणम् ॥२६॥
श्रीकेशव जगन्नाथ उभयोः पादपाम्रयोः ।
अनयासह सर्वत्र परिचर्य्या सदाऽस्तु मे ॥२७॥
एवं सम्प्रार्थ्य देवेशं पश्चात्कर्म समाचरेत् ।
देवस्य पुरतोवन्हिं प्रतिष्ठाप्याथ पूर्ववत ॥२८॥
आज्यं संस्कारपर्य्यन्तं कृत्वा सम्यग्विधानतः ।
पूजितोमधुपर्केण कन्यायाश्च मदापकात् (?) ॥२६॥
नवन्निकांतर्हितां च कन्यां स मिंगलकृताम्(?) ।
ईक्षयेत्सुमुहूर्त्ते तु मन्त्रेण घोरचक्षुषा ॥३०॥
साद्रा (द्रां) क्षताश्चदूर्वाश्च कन्यां (च) समलङ्कृताम् ।
लाजाक्षतानिसर्वाणि पुष्पाणि सुरभीणि च ॥३१॥
तौर्यस्त्वरयामूर्ध्नि विकीर्येतां मनस्विनाम् (?) ।
कन्यामुदकपूर्वां च दर्य (दद्यात्) कन्याप्रदायकः ॥३२॥
वरं लक्षणसंयुक्तं विष्णुरूपमनुस्मरन् ।
पितादद्यात्सुकन्यां (च ) तदभावे पितामहः ॥३३॥
तदभावे पितृव्यः स्यात्तदभावेऽपिसोदरः ।
तदभावे तु जननी तदभावेऽपिगोत्रजः ॥३४॥
तदभावे तु बंधुःस्यात्तदभावे नृपः (उच्यते) स्मृतः ।
दातृणामप्यलाभे तु कन्याकुर्यात्स्वयम्बरम् ॥३५॥

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
माता पिता तथा भ्राता पितृव्यश्च पितामहः ॥३६॥
मर्वे तु नरके यान्ति दृष्ट्वा कन्यां रजम्वलाम् ।
तस्मात्प्राग्रजमुत्पत्तेः कन्यां दद्याद्विचक्षणः ॥३७॥
उच्चार्य्य म्रा (ना) मगोत्रे तु दद्यादुदकपूर्वकम् ।
कइदं कस्मादादित्यादिजपेन्मंत्रं (?) ममाहितः ॥३८॥
धर्मे चार्थे च कामे च नातिकाम्येति च ब्रुवन् ।
अहं नाति चरामीति वगे हन्याहतास्वियम (?) ॥३९॥
वरः प्रत्यङ्मुखो भूत्वा गृह्णीयात्वप्राङ्मुख (खी) म् ।
स्वस्त्रियं कर्त्तव्यानि च कर्माणि च स्त्र्योसमाचरेत्(?) ॥४०॥
सुहृदोमंत्रवन्तश्च गृहीत्वाजलपूरितम ।
कलशं मृण्मयं तौ तु मार्जयेत्तुकुशैर्जलैः ॥४१॥
अनुपृष्ठमसीत्यादि मन्त्राभ्याम्परिमार्जयेत् ।
नतस्यस्याशिरसि (?) च निधाय कुशपूर्वकम् ॥४२॥
दक्षिणं (?) तु युगच्छिद्रं मंसः मौवर्ण (?) संयुतम् ।
प्रनष्पंस्नाप (?) नितस्मस्याशिरसि च ।
निधायकूपे (?) नायाचमानैः शुभाहूये ॥४३॥
वासोभिः समलंकृत्य योक्त्रैणैव तु वेष्टयेत् ।
तौ परस्परयो (१) मूर्ध्नि सेचयेदसितान्शुभान् ॥४४॥
ऊर्णामयंकङ्कणन्तु बध्नीयाच्च तयोः करे ।
पश्चात्तु पुरतोवन्हेः स्थित्वा चैव सुखासने ॥४५॥

स्वस्य दक्षिणतः कन्यासूपवेश्याऽऽसनेशुभे ।
पश्चादुत्तरतोऽग्नीनग्रे स्थाप्यशुभान्वितम् ॥४६॥
उदकुम्भं पुरस्तात्तु मध्येसप्तपदाचितम् ।
तण्डुलैश्चशुभैः स्थाप्य पश्चात्कर्मसमाचरेत् ॥४७॥
तस्या समन्वारब्धायां जुहुयाच्चतुरः क्रमात् ।
अग्नरं पापितिसृभिश्चतु (भि) चयर्य(सपर्य)या ॥४८॥
आज्येन जुहुयादग्नौ कर्माण्य (ग्नि-विधानतः)अग्न्याधानप्रा ।
तिष्ठन्प्रत्यङ्मुखस्तत्र प्राङ्मुख्याः (च) स्त्रियाः करे ॥४६॥
प(अ)पत्रमोह सन्नीनि ति) वेदो कुर्यात्प्रदक्षिणाम् ।
आरोपयेनयाश्मानभीममस्मानभीत्यृचा ॥५०॥
वध्वाजलादुपस्तीर्थे (र्य्य) भ्राता तस्यवरोऽपिवा ।
द्वितलोतानानुयेत्यस्मिन्तो (न्निति) पूर्वं श्रुवेण तु ॥५१॥
अच्छिन्नेवातनिना (?) च जुहुयाद्द्वयमाहुतिम् ।
अर्यभूतानु देवा इति मंत्रेण प्रथमं तपः (?) ॥५२॥
वरुणं द्वितीयेति तृतीये (?) पूष्णान्विवितितूष्णीं सूर्यपुटेव
जुहुयात्पूर्वकर्मणि (?) ।
अश्मान्यारोरु (ह) तां चैव परिणायनमेव च ।
प्रदक्षिणं प्रकर्त्तव्य मत ऊर्ध्वं विकल्पितम् ॥५३॥
प्रन्यामुचामिवचणाविपादुणानिवं कर्मणि ।
अश्मान्यारोहतां चैव परिणायनमेव च(धनम्) ॥५४॥
आक्रम्योत्तरस्यान्तु दिशिसप्तपदानि तु ।
गृहीत्वैवपदाङ्गुष्ठं तेषुसंक्रमयेद्यति ( न्यतिः ) ॥५५॥

दृषणेन ( द्वयणे ) पदेत्यादि मंत्रैः समभिरेव च ।
तयोः शिरसि सिंचेत पूर्णकुम्भोदकैर्जलैः ॥५६॥
ब्राह्मण्यो जीवपत्यस्तु दृष्ट्वातावभिनन्दयेत ।
ततः स्विष्टकृते हुत्वा होमशेपं समापयेत् ॥५७॥
स्पस्तमथप्यंत सणचेद्यानिवेशितौ ।
अरुंधतीवशिष्ठे च ध्रुवं सप्तऋषीन्स्तथा ॥५८॥
दृष्ट्वाचैव नमस्कृत्वा (त्य) सायंहोमसमाचरेत् ।
प्राणायामेन संकल्प्य परिषिच्य हुताशनम् ॥५६॥
पूजयित्वाश्रियासार्द्धं जुहुयादाहुतिद्वयं ।
तण्डुलैश्चयचौवीवितिलैव्रीहिभिरेव च ॥६०॥
अन्यैःवापिशुभै र्द्रव्यै वर्जयित्वा च कोद्रवान् ।
अग्नये स्वाहेति पूर्वं प्रतापन्यं द्वितीयकम ॥६१॥
प्राजापत्येनतीर्थेन पूर्णं मङ्गलवारिभिः ।
जुहुयात्यपिषेत्याथ उपस्थानं जपेद् बुधः ॥६२॥
अग्नेत्वं तु अतमेति द्वाभ्यांत्ररभ्यां(?)हुताशनम् ।
मंस्थाप येदुपस्थाप्य नमस्कृत्वा(त्य) विसर्जनम ॥
प्रातः सूर्याहुत होमप्राजापत्यमनन्तरम् ।
सूर्योनो दिवस्पत्वितिसूक्ते (?) नालेव जपेद्बुधः ॥६४॥
एवमग्निश्च जुहुयादुद्वाहप्रभृतिं द्विजः ।
सायं प्रातः स्त्रियासार्द्धं तदग्नि प्रणमेत्सदा (तदग्निनप्रमयेत)
एवं होमविधानेन सायंहुत्वाहुताशनम् ।
ब्राह्मणान्भोजयेत्पश्चादाशीर्भिरभिनन्दितः ॥६६॥

अक्षारलवणं शुद्धं भुंजीत (यात) शुभाचिनो (न्वितः) ।
पुष्पालंकारवस्त्रादि वैदपयी ( ? ) समलंकृतः ॥६७॥
सत्यवाचा च यस्समो दीक्षितो ब्रह्मचारिणो ( ? )
अर्चयेत्तं श्रियायुक्तं पुराणं पुरुषोत्तमम् ॥६८॥
वस्त्रालङ्कारपुष्पादिधूपदीपनिवेदितैः ।
ब्राह्मणान्भोजयेत्पश्चाद् यथाशक्त्या च दक्षिणा(विचक्षणः)
त्रिरात्रं दशरात्रं वा सम्वत्सरमथापिवा ।
समन्वितत्र नौम्यातौ (?) दम्पती समलंकृतौ ॥७०॥
ततः स्वमालयं गच्छेद्भार्यया सहितो बुधः ।
अग्नितोद्वाहिकावन्हि न पदमत्र समन्वितम ॥७१॥
यूपात्वेतानिमंत्रणयानमारोहये (?) (स्याद्) दबुधः ।
आत्मन्यत्तीत्यर्द्धचैनमध्या (?) तु तारणे ॥७२॥
कल्याणदेशवृक्षोऽथमविधानं ऋचंजपेत् ।
सुमंगलेत्यृचा वापि तत्र तत्र च तर्पयेत् ॥७३॥
जापारुदेतीतिजपेन (?) रे दिर्नीति जपेद्बुधम् ।
भगवन्तं पुरस्कृत्य प्रविशेत्तु स्वमालये ॥७४॥
इह प्रिय जपेन्मन्त्रं तु ( नृ ) र्यघोषपुरस्कृतम् ।
प्रविश्य स्वगृहे रम्ये तस्मिन्सम्पूजयेद्धरिम् ॥७५॥
वितानादि सुशोभासं (दृश्य)मण्डले सुमनोहरे ।
पूजयेत्पुष्प शय्यायाश्रियामाधं सनातनम ॥
पुष्पैर्मनोहरैः शुभ्रैर्गन्धैरामोदितैः शुभैः ।
धूपैर्दीपैश्चताम्बूलैश्चामरैस्तालवृन्तकैः ॥७७॥

नैवेद्यैर्विविधैर्भक्ष्यैः भोज्यैः पक्कफलैस्तथा ।
पूजयित्वा नमस्कृत्वा जपेन्मन्त्रद्वयेनतः ( द्वयं ततः ) ॥७८॥
शतमष्टोत्तरं तत्र यथाशक्त्या जपेन्मनुः ।
ततः पुष्पाञ्जलिंदत्वा याहीयं(पश्चात) संप्रार्थयेत्ततः ॥७६॥
युवा ( पुचा ) वग्रहमनुष्याणां सर्वपांगृहमेधिनाम् ।
दासीदास स्वरूपेण परिचर्य्या च सर्वदा ॥८०॥
आवयोः सर्वकार्येषु सर्वदेशेषुचैवहि ।
परिचर्य्यास्तुपुयोयोपादाज्यं (?) युवयोः सहः ॥८१॥
एवं सप्रार्थयेद्देवं ईश्वरंचाग्रदम्पती (?)
नमस्कृत्वा (त्य) पुनस्तत्र होमकर्मसमारभेत् ॥८२॥
अभेयवंश्यातु उहश्चमेरायत्रतुदम्पती ।
गृहप्रवेशांगभूतं होमं कुर्य्यादशेपतः ॥८३॥
विवाहाग्निमुपस्थाप्य चेत्थं कुर्यादशेपतः ।
अतः प्रजाजनमितिऋग्भिश्च तिसृभिर्घृतम् ॥८४॥
हुत्वाथमार्जयित्वाद्यैरभिप्राशनमुच्यते ।
आज्ययोपेणवाभक्तिहृद्यशेतेपरस्परम् (?) ॥८५॥
ततः स्विष्टकृतं हुत्वाहोमशेपं समाचरेत् ।
ब्राह्मणान्भोजयेत्तंपामाशीर्भिरभिनन्दितः ॥८६॥
वधूवस्त्रैन्ततांते (?) तु दद्याद्विप्राय दक्षिणाम् ।
नमनतिल (?) सूक्तेन आशीर्भिरभिनन्दयेत् ॥८७॥
तत्र पाकं वितांते तु केचिदिच्छन्ति सूरयः ।
महाव्याहृतयस्तत्र होमंकुर्य्याद्विधानतः ॥८८॥

सदास्तान्ब्राह्मणांस्तत्र पूजयेच्छक्तितोनरः ।
ब्राह्म एव यं ब्राह्मणं सत्रं विशेषेण प्रपूजयेत् ॥८९॥
हरिं सम्पूजयेत्तत्र भक्त्या सम्यग्विधानतः ।
भोजयित्वा तु तं भक्त्या नमस्कृत्य विसर्जयेत् ॥९०॥
पाणिग्रहणप्रह्मात ( ? ) संगृह्यहरिमर्चयेत् ।
सायम्प्रातश्चजुहुयाद्यावज्जीवं समाहितः ॥९१॥
स्वयमेव तु दातव्यं पतिम्वापुत्रमेव वा ।
कुमारीम्वाप्प(म्य) शिष्यो वा ऋत्विग्वा(ऋत्विजं)शुभलक्षणः
आपत्काले तु सम्प्राप्ते समिदारोपणंस्मृतम् ।
स्मृतंहुत्वावाज्याहुती मेकांलभ्यतादे (?) ऋचातथा ॥९३॥
व्रते तस्मिन्समाप्ते तु पुनरायोपणं ( पोपणं ) स्मृतम् ।
आरण्यमेवसम्प्राप्य जुहुयाद्वष्पवाहनम् ॥९४॥
विवाहन्वनमध्ये (?) तु माशिते हव्यवाहने ।
धेनुं दत्त्वा च विप्राय पुनराधानमाचरेत् ॥९५॥
अश्मरारोहणञ्चैव परिणायनमेव च ।
पादानाक्रमं (?) वापि सर्पमप्रसमाचरेत् ॥९६॥
आतारकोदयानस्थित्वा नित्यहोमं समाचरेत् ।
विवाहाहुतयश्चैवलाजाहुतय एव च ॥९७॥
ना(आ)हुतयश्चैवतस्मिन्तस्मिन्नारोहणादिकम् ।
अत्रोज्वाननिर्वपण (?) भर्त्तायभ्य च सोदरा ॥९८॥
पर्वण्यतिक्रमे वापि कालातिक्रमणन्तथा ।
सीमातिक्रमणेचैव केशाकीटादि दूषिते ॥९९॥

प्रायश्चित्तादि दर्तिहि (?) होतव्यात्र श्रुवेण वै ।
तदभावे (तु) होतव्यं समिद्भिर्वातिलैः यवैः ॥१००॥
अन्योन्यस्यशतेरिष्टंद्रव्यंदेस्त्विष्टकृतं हुवेत् ( ? ) ।
विदानिरूप्रवेदा हि इत्येकादेवभित्यर्चम (?) ॥१०१॥
योऽग्निदेववीतये कुचित्सुन (?) इत्यृ चा ।
आमानो (?) अस्मित्यथा जुहुयादाज्यमेव च ॥१०२॥
प्रायश्चित्ताद्याहुतयोहोतव्या तत्र कर्मणि ।
अतिक्रमे प्रतिपनं (?) पुराधानं तथा चरेत् ॥१०३॥
सूतके मृतके होममनेनैव तु कारयेत् ।
एवं होमं प्रकुर्वीत सायं प्रातः सदागृही ॥१०४॥
पक्षान्तंजुहुयादिष्टं (?) चरुणादत सत्तमः ।
अग्निमग्निं च सोमाभ्यां इन्द्राग्निभ्यां शशिक्षयम् ॥१०५॥
सायम्प्रातश्चजुहुयादग्निहोत्रमतन्द्रितः ।
निर्वपेत्यथयज्ञाश्च विधिना प्रत्यहं गृही ॥१०६॥
ऋतौ तु प्रथमेप्राप्ते गर्भाधानं समाचरेत् ।
रजोदर्शनमारभ्य त्रिरात्रं न स्पृशेत्स्वयम् ॥१०७॥
चतुर्थेऽन्हि (च)सम्प्राप्ते स्नात्वाशुद्धाभवेत्तु सा ।
कृत्वास्वरूपयनंतस्याः (?) पूजयेत्पुरुषोत्तमम् ॥१०८॥
प्रातरुत्थायासने हुत्वा तस्मिन्होमंसमाचरेत् ।
विष्णुर्योतिनमेश इति पादक्रमेण तु ॥१०९॥
ब्राह्मणान्भोजयेत्पश्चादाशीर्भिरभिनन्दितः ।
तान्तुस्वलंकृतां क्षौमां गच्छेद्यु ग्मासुरात्रिषु ॥११०॥

षोडश निशास्तासामाद्यास्तिस्रस्तु वर्जयेत् ।
पर्वसु ब्रह्मचारी स्यात्तथाचाद्य दिनेषु तु ( (हि ) ॥१११॥
व्रतोपवासदिवसे सूतके मृतकेऽपि वा ।
शुभलग्ने शुभदिने चन्द्रताराबलान्विते ॥११२॥
सकृद्गच्छेनृस्त्रियं मौनी पुत्रप्रहाणा (कांक्षया) न्निरीक्षणे ।
एवमेव (?) सूतके मृतकेऽपिवा मल्येशुभदिने ॥११३॥
चन्द्रताराबलान्विते संयुक्तं पुत्रंवैजनयेत्सुधीः ।
तृतीये गर्भमासे तु कुर्यात्पुंसवनं ततः ।
उपोषितस्तुगर्भिण्यामिज्यार्थे तु प्रयोजयेत ॥११४॥
पूर्वाण्हे सूर्योदयात्पूर्वं स्नात्वास्वस्तिवाचनमाचरेत् ।
प्रातरौपाशनं हुत्वा तस्मिन्होमं समाचरेत् ॥११५॥
स्नपयित्वाचरेत्तत्र इज्याध्यानादिकंचरेन ।
अपरावाज्यभागौ तु हुत्वा पश्चाच्चरुं तथा ॥११६॥
प्राजापत्येनमंत्रेण जुहुयादाज्यसंयुतम ।
समानरूपत्वायंगौः गोदधे प्रसृतेन तु ॥११७॥
प्राभयतो स्त्रियंभर्त्तात्रिवारं घृतसंयुतम् ।
दक्षिणस्यां नासिकायां जिनामौपधीरसम् (?)॥११८॥
शतुकरो (?) तु वैतस्या मंत्राभ्यां सुसमाहितः ।
प्रजावज्जीवपुत्राभ्यां मंत्राभ्यांतत्समाचरेत ॥११९॥
इति सुशिवतोमे ति (?) हृदयं समुपस्पृशेत् ।
ततः स्विष्टकृतंहुत्वाहोमशेषं समापयेत् ॥१२०॥

चतुर्थे मासिगर्भस्थं सीमन्तोन्नयनं चरेत् ।
षष्ठेऽष्टमेवाकुर्वीत शुक्लपक्षे शुभेदिने ॥१२१॥
नान्दी श्राद्धं तु पूर्वाण्हे कुर्वीत पितृदेवताः ।
स्नात्वा पराण्हे कुर्वीत स्वस्तिवाचनपूर्वकम् ॥१२२॥
सुपुष्प मण्डपे रम्ये वितानध्वज शोभिते ।
पजयेद्विधिवद्विष्णुं सुगन्धकुसुमैः शुभैः ॥१२३॥
वस्त्रालङ्कारभूषाद्यैः धूपदीपनिवेदनैः ।
फलैश्च भक्ष्यभोज्यैश्च विवधै स्विष्टकारतैः ॥१२४ ॥
नाना पक्षैः सुहृद्यै (१) श्च पूजयेद्धितपूर्वकम् ।
तौ दम्पती नमस्कृत्य लक्ष्म्या युक्तं सनातनम् ॥१२५॥
तस्यैव पुरतः पश्चात्संस्तीर्य्यानुडुहस्त्वं (?) ।
तस्मिन्समुपविष्टौ तु प्रातर्होमः समाचरेत् ॥१२६॥
तस्मिन्नग्नौ तु जुहुयादाज्यमिध्यादिपूर्वकम् ।
धाता धातु न इतिद्वाभ्यां राकाभिमित्रस्वा (?) ॥१२७॥
नेज्यमेचेतिसृभिः (?) प्रजापतित्सित्रऋृचा तथा ।
हुत्वाशिलालुलशेन (?) त्रिशुल्क सलिलेन तु ॥१२८॥
त्रिभिश्चकुशपिजलैर्जपेद्भूभु वः (?) स्वरोमिति ।
पल्पासीमे (?) तु मध्ये तु त्रिवारं सम्यगुच्चरेत् ॥१२९॥
नामभिः कीर्त्तनैर्दिव्यैः देवदेवं जनार्दनम् ।
समाप्य होमशेषन्तु ब्राह्मणान्भोजयेत्सुधीः ॥१३०॥
ब्रह्मस्यब्राह्मणा (?) यत्र दद्यादेकं शुभेदिने ।

सकृत्संस्कृतसंस्कार्य्याः सीमंतादिक्रियाततः ।
पूर्णगर्भे प्रसूयेत तत्सर्वं संस्कृतम्भवेत् ॥१३१॥

इति श्री वशिष्ठस्मृतौ गर्भाधानादि पुंसवनादि सीमन्तो-न्नयनकथनं नाम चतुर्थोऽध्यायः ॥४॥

---

# अथ पञ्चमोऽध्यायः

## स्त्रीधर्मवर्णनम्

श्री वशिष्ठ उवाच

अधुना सम्प्रवक्ष्यामि स्त्रीणां धर्म सनातनम् ।
शीलमेव तु नारीणां प्रधानं धर्म उच्यते ॥ १ ॥
शीलभङ्गेन नारीणां यमलोकं सुदारुणम् ।
पतिर्हिदैवतं नार्य्याः पतिर्बन्धुःपतिर्गतिः ॥ २ ॥
तस्याज्ञां लङ्घयित्वैव नारी नरकमाप्नुयात् ।
नास्ति स्त्रीणां पृथग्ज्ञानं न व्रतं नाप्युपोषणम ॥ ३ ॥
पतिशुश्रूषणे तासां स्वर्गमेव विधीयते ।
भोजनं शयनं निद्रा भर्त्तुः पश्चाद्विधीयते ॥ ४ ॥
उत्थाने (नं) तु पुनस्तस्याः पूर्वमेव विधीयते ।
पतिं या नाभिचरति मनोवाक्कायसंयता ॥ ५ ॥
सा भर्त्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ।
दक्षा हृष्टा सुवेशा च सदा परपराङ्मुखी ॥ ६

सपुत्रा तस्करा (छायेवानुगता) शुद्धा सदाभर्त्तृपरायणा ।
श्वश्रूश्वशुरयोः पादवन्दनं प्रत्यहंचरेत ॥ ७ ॥
गृहं नित्यमलङ्कुर्यादुपलेपादिरंजनैः ।
अभ्यञ्जनमलङ्कारगन्धपुष्पादिधारणम् ॥ ८ ॥
मिष्टान्नभोजनं गानंत्यजेत्प्रोषितभर्तृका ।
स्वतन्त्रपुरुपाणां च प्रलापं सम्प्रचोदनम् ॥ ९ ॥
परवेश्मनिवासं (सो) वा पुंसांस्त्रीभिश्चसङ्गमम् ।
द्वारोपवेशसंस्पृष्टं गवाक्षावेक्षणं तथा ॥१०॥
केशवस्त्रादिविन्यासं पुरुषाणां निरीक्षणम ।
ताम्बूलगन्धपुष्पादिग्रहणं पुरुषान्तरात् ॥११॥
वादित्रगीतनृत्याद्यमुत्सवानांनिरीक्षणम् ।
स्त्रीकुर्यात्पतिना सार्द्धं सभायाश्चप्रवेशनम् ।
अपावृतास्यं हास्यं च पानं दुर्जनसङ्गमम् ।
पाशाविशेषणंचैव दूषणं कुलयेषिताम् ॥१३॥
अनूढां तु पिता रक्षेद्भर्त्ता तु तदनन्तरम् ।
पते(त्यु)रूर्ध्वं च पुत्रश्च तदभावेश(स)ना(जात)भयः ॥१४॥
बांधवाश्च ततो राजा नस्वात(न्त्र्यंस्त्रियःक्वचित्) किंचित्स्त्रियां
हीनासुस्याद्धवेदीवीगर्हितासाभवेद्ध्रुवम् (?) ॥१५॥
भर्तुःप्रियहिते युक्ता सदाचारा जितेन्द्रिया ।
इह कीर्त्तिमवाप्नोति गतिम्प्राप्नोत्यनुत्तमाम् ॥१६॥
स्त्रियाभर्त्तुर्वचः कार्यमेष धर्मः सनातनः ।
भिन्नमर्यादवृत्तिश्च न तु तस्यानुकूलता ॥१७॥

भर्तुः भ्रातापितृव्यश्च श्वश्रु-स्वसुर-देवरैः ।
पुत्रैश्च पूजनीया स्त्री भूषणाच्छादनाशनैः ॥१८॥
परमापद्यपि सदा मनोवाक्कायकर्मभिः ।
नान्येपतिर्नपुत्रीवात्तया (?) कुर्वन्नधःपतेत् ॥१६॥
वयसस्तु(वचषा तु) षोडशादूर्ध्वं पुत्रंवापिन संस्पृशेत् ।
अन्येषांगात्रसंस्पर्शान्महाहानिर्भवेत्स्त्रियः ॥२०॥
मैथुनं हसनं स्नेहसंलापं गात्रसंगमम् ॥
एकशय्याशनं वपुषोणे (स्वपुत्रेणापि)वापि हानिदम् ॥२१॥
अभ्यंगं गात्र संस्पर्श ( र्शं ) पुत्रं वापि न योजयेत् ।
भर्त्तुरन्यंनचब्रूयात्सुन्दरो(ऽपि) (पमिनियो)भवेत्कचित् ॥२२॥
भर्त्तुरारोपितां निद्रां न ब्रूयाच्छ्रुणुयान्न च ।
पितरं मातरं पुत्रं भ्रातरं वा गुरुं तथा ॥२३॥
धिद्धेपंतं (विद्विषन्तं) त्यजेद्भर्त्तु (?)यथाभर्त्तुस्तथा भवेत ।
ताम्बूलं दन्तकाष्ठं च स्नानं मज्जनभूषणे ॥२४॥
स्पर्शनं चैव सर्वत्र त्यजेत्पुष्पवती सती ।
त्रिरात्रंतु हि न स्नायात् ततः शुद्धाभवेत्तु सा ॥२५॥
शुद्धाभर्त्तु (सा च) श्चतुर्थेऽन्हि स्नानेन स्त्री रजस्वला ।
दैवेकर्मणि पित्रे च चतुर्थेऽहनिशुध्द्यति ॥२६॥
ऋतुस्नाता तु या नारी सन्निधौ नोपगच्छति ।
घोरायांभ्रूणहत्यायां युज्यते नात्र संशयः ॥२७॥
अर्थधाणं (?)शरीरं च भर्त्तारं या हि वध्नाति ।
युगकोटिसहस्राणि पच्यते नरकाग्निना ॥२८॥

पुरतो याचमानं च भर्त्तारं न ददाति या।
कल्पकोटिसहस्राणि विष्ठायां जायते क्रिमिः ॥२६॥
अदुष्टां विनतां भार्य्यां यौवने यः परित्यजेत्।
सप्तजन्म भवेत स्त्रीत्वं वैधव्यं च पुनः पुनः ॥३०॥
वृद्धोऽव्याधियुतोवापि दरिद्रो वा कुरूपवान्।
कोऽपिवापि भवेद्भर्तातन्देवमिव पूजयेत् ॥३१॥
भर्त्तुः पुरस्तादुत्थाय कृते (त) शौचं (च) क्रियादिभिः।
दंतधावनपूर्वं तु कंठस्नानं समाचरेत् ॥३१॥
हरिद्रासहितेनैव स्नात्वा मुक्ताण्यपावृता (शुक्लाम्बरावृता)।
केशप्रसाधने (नं) कृत्वा बध्वा कवरिकांकुचैः ॥३३॥
अलंकृत्वाऽथ स्वांगं वै गंधपुष्पादिधारणैः।
श्रीशं नत्वा गुरून्नत्वा पश्चात्कर्मसमाचरेत् ॥३४॥
दासी (दाससुतान्) दशतनो भृत्यांस्तत्र कर्मसु योजयेत्।
अलंकुर्वीत हर्म्याणि सेचनैरंगवल्लिभिः ॥३५॥
अर्चयेज्जगतामीशं गंधपुष्पफलौदकैः।
यज्ञार्थन्तु पचेदन्नमात्मार्थं न कदाचन ॥३६॥
शुचौ देशेवहन्यामुधान्यं (?) प्रयतवाक्शुचिः।
त्रिवारमेवहन्यानु (?) तंऽल्तन्छुक्लवत्तरं ॥३७॥
भांडानां सेचनै (नं) कुर्यात्पंच (गव्य)यं च सुकर्मसु ॥
शौचाचमनस्नानार्थभांडानि च यदिन्यसेत् ॥३८॥
जलपूर्णानि भांडानि सेचनार्थानि यानि च।
वेश्मन्येव च संस्थाप्यनैवरान् (?) गृह्यतेक्वचित् ॥३६॥

पव(च)नार्थानिभांडानि नवान्यैव तु नित्यशः ।
अलाभेक्षालनंकृत्वा दग्ध्वा(ग्ध्वा)चे(च)यज्ञियै(त्रृणैः)स्तृणैः ४०
पुनःप्रक्षाल्ययचनं (?) कुर्यान्तेषुसुवेश्मसु ।
भांडातरंजलंनीत्वा शोधयित्वा सुवाससी ॥४१॥
त्रिवारंशोधयित्वाऽथ जलकुम्भे प्रपूरयेत् ।
ततत्रचालायूषुनान्मादं (?) च प्रकल्पयेत् ॥४२॥
क्षालयित्वा करैर्भांडं (?) पृष्टौ प्रक्षालयेत्ततः ।
तंडुलानतक्षालयेत्पश्चात्(?)त्रिचतुर्वायता(श्कं)सदा ॥४३॥
संवंशोध्यतंडुलाश्चाद्भिः(?)पश्चात्पचनभावहेत्(मारभेत्) ।
आरनालं न कर्तव्यमापद्यपि कदाचन ॥४४॥
आरनाले हि विप्राणां सुरानुत्तम (?) संशयः ॥
केशानां रंजनार्थायति(ल) त्रिमत (तैलेन) (?) संयुतं ॥४५॥
केशाया (न्) (?) (प्र) क्षालयेत्रित्पंज रस मेववा ।
मापमुद्गादिचूर्णं वा तिन्तिणीफलमेववा ॥४६॥
कस्तूरी घनसारंवा चन्दनाद्यं प्रकल्पयेत् ।
शाल मूलश्रुभर (?) वद्रन खंडयेत् ॥४७॥
त्रिवारं क्षालयेत्पश्चात्सम्यग्यत्रासि (?) योजयेत् ।
अग्निकुण्डमंडलं (?) कृत्वावन्हिकाष्ठैः प्रदीपयेत् ॥४८॥
अमेध्यं गंधकाष्ठानि कण्टकानि स्फुलिङ्गकात् ।
अंतश्चाप्युपपन्नानि (?) सोच्छिष्टानि विसर्जयेत् ॥४९॥
केशलेपादि संयुक्तान्यमेध्य स्पर्शनानिच ।
चिर्तिस्पृष्ट (?) काष्ठा पूयोपकरणानिच ॥५०॥

चर्मास्थि (?) समवेतामित्परीषं शुक्लमेव च।
उच्छिष्टशुक्ल (क्त) पर्णानि न वन्हौ विनियोजयेत् ॥५१
शुष्कगव्यं पुरीषञ्च शुद्धमग्नौ प्रदीपयेत्।
महिषाश्वखरोष्ट्रादी(णाम्)न्पश्वादीं(नाम्)श्चविवर्जयेत्॥५२
बिभीतकं तथा शिग्रु कार्पासं रेणुकन्तथा।
खर्जूरं तालहिन्तालं केतकी शणशाल्मलीन् ॥५३॥
कपित्थं पैलवं चैव तिङ्कं तापसन्तथा।
खर्जूरी बदरी मोचा भल्लातक कपिञ्जलौ ॥५४॥
तुलसी राजवृक्षौ च मध्ये दग्धानि यानि च।
एवमादीनि काष्ठानि न वन्हौ विनिवेदयेत् ॥५५॥
तापयेन्नीलवृंतेन वन्हि वस्त्रेण नैव च।
विष्णोर्निवेदनार्थाय रा(पा)चयेदोनादिक(ये)ञ्च विशेषतः॥
स्निग्धंपथ्यं तथा शुद्धं शुभ्रंरुच्यं मनोहरम्।
यावपेदोदनाद्यं(पाचये दौदनाद्यं)तु चायता नियतेन्द्रियः॥
लवणं गुड़ (?) तैलाप्लगुड़ान्संप्रहेतथा।
मरीच लवणाम्लाज्य (?) गुड़ सूपादिसंयुतम् ॥५८॥
पाचयेत्कन्दमूलानि भक्ष्यं शुद्धं मनोहरम्।
अन्नञ्च पाचयित्वैव सुधीर्विष्णुंनिवेदयेत् ॥५६॥
अतिथिं च गुरूञ्चैव भोजयेत्पतिः ( स्वसुतान्ततः )।
स्वभर्त्तारं भोजयित्वा स्वयं भुञ्जीत योषिता ६०॥
सन्तोषं परमास्थाय पतिं सन्तोषयेद् गुणैः।
सदा धर्मपथे युक्ता सदा भर्तृपरायणा ॥६१॥

परुषं न वदेत्किञ्चित्सदा मधुरवाग्भवेन ।
यथोत्पन्नेन द्रव्येण संतुष्टा विगतज्वरा ॥६२॥

परमापद्गता वापि भर्त्तारं न निषेधयेन ।
भिक्षां च भिक्षवे दद्यादनृ वृत्तं तु(?) हमाविना ॥६३॥

न च संभापयेत्किञ्चिद्दुर्वृत्तकथनादिभिः ।
अल्प(?)शायामद्य्धः शयीत गंधपुष्पादि वर्जिता ६४॥

भवेत्पत्युत्पथि कृता न च सन्ताप कर्षिता ।
मरणेचाति कीर्त्तिश्चसमाप्नोति (हि) परां गतिम ॥६५॥

आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृतेम्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥६६॥

साध्वीनामेष नारीणांमग्निप्रयेत (?) नावृत्तो ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्त्तरि कुत्रचित ॥६७॥

तिस्रः कोट्योऽर्धं कोटीश्च यानि रोमाणि तानिच ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥६८॥

ब्रह्मघ्नोवा सुरापोवा मित्रघ्नं वापि दुःष्कृतिम् ।
पतिं पुमासं नारी (च) पतिं यानुभृता भवेत ॥६९॥

यावद्भर्त्तारमालिङ्गच्य मृतमग्नौ प्रवेशयेत ।
सामुत्रलोके भान्यौति (च सुखं)दिवि सम्पूज्यते सुरैः ॥७०॥

यदि प्रविष्टं नरकं बद्ध्वा पाशैः सुदारुणैः ।
सम्प्राप्य यातनास्थानं गृहीतो यमकिंकरैः ॥७१॥

तिष्ठगे (न्वा) विवशोदीनो वेष्टमानः स्वकर्मभिः ।
व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् ॥७२॥
तद्वद्भर्त्तारमादाय दिवं याति ततो बलात् ।
तत्र सा सुत्रपरमा स्तूयमानाप्सरोगणैः ॥७३॥
मोदते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ।
पृथक्कचिति समास्ह्य नविप्रा (?) गन्तुमर्हति ॥७४॥
इतरेषां तुवतां (युवतीनाम्) स्त्रीधर्मोऽथ परः स्मृतः ।
दुर्वृत्तं तारयेत्साध्वी (?) सद्वृत्तयवमन्यगात् ॥७५॥
भर्त्ता यत्पदमाप्नोति तेन तत्पदमश्नुते ।
गर्भिणी वा विदेशस्था सूतिका वा भवेद्यदि ॥७६॥
नचानुगमनम्भर्तुर्ब्रह्मचर्यव्रते स्थिता ।
शिरसोमुण्डनं कृत्वा सव(वस्त्रालङ्कार)विवर्जिता ॥७७॥
एक भुक्त्वाह्यधः स्नायी (शा) स्नानं त्रिषवणंचरेत् ।
चान्द्रायणे नयेत्कालं कृच्छ्रेण विजितेन्द्रिया ॥७८॥
नित्यमभ्यर्चयेद्देवं वासुदेवं सनातनम् ।
तत्वज्ञान समायुक्ता विरक्ता विष(येष्वतः) योधतः ॥७९॥
विशुद्धा विजितक्रोधा कामलोभविवर्जिता ।
जितेन्द्रिया शुभाचारा ह्यव्याज(?)नियताशना ॥८०॥
त्रिकालमर्चयेन्नित्यं वासुदेवं सनातनम् ।
ध्यायञ्जपन्नमस्कुर्वन् कीर्त्तयन्नामभिः शुभैः ॥८१॥
एवं व्रतसमाचारा नारायणपरायणा ।
सापि भर्त्तारमुद्धृत्य प्रयातिम् परमांगति ॥८२॥

मृते भर्त्तरि नारीणां ब्रह्मचर्यं यथोक्त(वत्)यान ।
अग्निप्रवेशनं वापिन्यना (?) दम्नानिधर्मतः ॥८३॥

इति वशिष्ठस्मृतौ पातिव्रतधर्मवर्णनंनाम पञ्चमोऽध्यायः

---

# अथ षष्ठोऽध्यायः

## नित्यनैमित्तिकविधिवर्णनम्

ऋषय ऊचुः ।

भगवन्ब्रूहि तत्वेन विष्णोराराधनम्परम् ।
नित्यं नैमित्तिकं यत्तन्मंत्राणां च विधिं तथा ॥१॥

श्री वशिष्ठ उवाच ।

शृणुध्वमृषयः सर्वे हरिपूजाविधिम्परां ।
नित्यमाराधनमादौ वक्ष्यामि मुनिसत्तमाः ॥२॥
ब्राह्मे मुहूर्त्ते(चो) उत्थाय मुखम्प्रक्षाल्य वाग्यतः ।
आचम्य प्रयतोभूत्वा जपेद्गुरुपरम्पराम् ॥३॥
ब्वालु(विष्णुश्च)रून्मनमाध्यात्वा प्रणम्य च पुनः पुनः ।
योगध्यानविधानेन ध्यायेद्विष्णुमतन्द्रितः ॥४॥
मनस्येत्यादि मंत्रेण संयुज्याथ प्रणम्य च ।
संकीर्त्य नामभिर्दिव्यैः स्नात्वा स्तुतिभिरेव वा ॥५॥
गच्छेद् ग्रामाद्बहिः पश्चाद् वाग्यतो नियतेन्द्रियः ।
नैऋत्यां पश्चिमे वाथ शुद्धदेशे च निर्जने ॥६॥

(?) कृत्वा यज्ञोपवीतंतुकंठतः ।
पृष्ठलंबिता अन्तर्धाय तृणेन्तृ (?) मिशिरः ॥७॥
प्रावृत्य वाससा वाचं नियम्य यत्नेनष्ठीवना ( दिकम् )
ष्ट्रिसर्वजितैः ।
विण्मूत्रे च ततः कुर्याज्जनैरनवलोकितः ॥८॥
न नद्यां मेहनं कुर्यान्नैवाप्सु न च गोमये ।
नोपजीव्याद्द्रुमच्छायां तथा यज्ञतरोरधः ॥९॥
न च सस्ययुतेक्षेत्रे तथा हलनिवा (पा) तने ।
नारामे न च केदारे न च यज्ञतृणेषु च ॥१०॥
न वर्त्मनि शिलास्पृष्टे न विले न जलाशये ।
न नारीजनसञ्चारे न शाकफलसंयुते ॥११॥
वृन्दावनसमीपे तु गोष्ठी (ष्ठ्यां) पुष्पद्रुमेषु च ।
नोत्सृजेन्मलमत्यर्थ(मूत्राद्य)मापद्यपि विचक्षणः ॥१२॥
उत्सृज्य मलमूत्रं च वृत्त (शिश्न) मुत्थाय वाग्यतः ।
मृद्भिरभ्युद्धृतैस्तोयैः शौचं कुर्याद्यथाविधि ॥१३॥
रम्रि(?)भावं जलंत्यक्त्वा शौचं कुर्यादनुद्धृतैः ।
पश्चात्तत्प्रोक्षयेत्स्न ( प्रक्षालयेत् ) ( स्थानं ) मन्यथा न
शुचिर्भवेत् ॥१४॥
मृदकूले च नद्यां तु न कुर्याच्छौचकर्मणि ।
तटाकान्ते च वा(प्या)यादौ जलान्त मृदमाहरेन ॥१५॥
इतरत्र तदर्धंवाशौ (न्ते) चे कर्मणि योजयेत ॥१६॥

उत्तरत्र तदर्द्धञ्च शौचे कर्मणि योजयेत् ।
कृत्वा शौचं विधानेन सम्यगाचम्य पूर्ववत् ॥१७॥
दन्तानां शोधनं कुर्यात्काष्ठैः कुर्याद्यथोक्तवत् ।
कनिष्ठिकाग्रवत्स्थूलं द्वादशांगुलमायतम् ॥१८॥
कण्टकक्षीरवृक्षोत्थं पूर्वाग्रकृतपूर्वकम् ।
प्राङ्मुखोदङ्मुखोवापि उपविश्य च वाग्यतः ॥१९॥
दन्तानां धावनं कुर्याज्जिह्वालेखनमेव च ।
अंकोलः खदिरश्चतस्थैवोदुम्बरो वटः ॥२०॥
अश्रातकं मधूकश्च प्लक्ष जम्बूत (क) वैणवम् ।
अपामार्गं निनिर्णीश्च कुटजं कुरवन्तथा ॥२१॥
कदम्बश्च शिरीषश्च धात्रीरुचकमेव च ।
जम्बीरनिम्बवृक्षोत्थंदन्तकाष्ठानि योजयेत् ॥२२॥
(निषिद्ध) शिग्रुवृद्धरश्मन्यश्च (?) शिग्रुपर्णे ।
पीलुः पलाशनिर्गुण्डी कपित्थं बिल्वकन्तथा ॥२२॥
खर्जरं नारिकेलश्चकेतकी युगमम्भवम् ।
कदलीनालकार्पासवदरीतापसन्तथा ॥२३॥
अन्यानि च निषिद्धानि वर्ज्जयेद्दन्तधावनम् ।
तुषागरकपालास्मतृणभस्मायसादिकं (?) ॥२४॥
सिकतावस्त्रचर्मास्थि वर्जयेद्दन्तधावनम् ।
द्वादश्यां प्रतिपत्षष्ठ्यो नवम्यां शशिसंक्षये ॥२५॥

श्राद्धेऽन्हि वर्जयेत्काष्ठैर्दन्तानां शोधनं बुधः ।
यत्रैव शोधयेद्दन्तान्गंडूषैर्द्वादशैर्जलैः ॥२६॥
आचम्य पूर्ववत्पश्चात्मपवित्रकरेण वै ।
नद्यां तटाके वाप्यादौ पश्चात्स्नानं ममाचरेत् ॥२७॥
कृत्वाऽघमर्षणस्नानं पूर्वन्तु सुसमाहितः ।
आचम्य मन्त्ररत्नेन प्राणायामं समाचरेत् ॥२८॥
अभिमन्त्र्य जलम्पश्चान्मंत्ररत्नेन वैष्णवः ।
विल्वंकुंकुम नागकेसरं (सौगन्धिकन्तथा) ॥२६॥
जलजानि च सर्वाणि कदम्बंकुटजन्तथा ।
दमनं ग्वर्वमूलञ्च मरुकं हरिपत्रकम ॥३०॥
एवमादीनि चान्यानि सुरभीणि समाहरेत् ।
निर्गन्धं छिन्नपत्रं च कीटाद्यपहतन्तथा ॥३१॥
आघ्रातं शकुनाद्यैश्च स्वयं च पतितम्भुवि ।
अन्यशेषं पर्युषितं वर्जयेद्यज्ञकर्मणि ॥३२॥
ग्रथितानि च पुष्पाणि नैव पर्युषितानि वै ।
एवमादाय पुष्पाणि पूजार्थं गृहमाविशेत् ॥३३॥
प्रक्षाल्य पादौ हस्तौ च सम्यगाचमनंचरेत् ।
यागभूमि प्रविश्याद्भिः सम्प्रोक्ष्यास्त्रं च विन्यसेत ॥३४॥
उपविष्टो गृहे रम्ये रंगवल्यादि शोभिते ।
वितानाद्यैः सुशोभाढ्यैः शुभैर्दीपैर्विराजिते ॥३५॥
चन्दनागरुकस्तूरीकर्पूरागरुवासिते ।
सम्पूज्य मंत्रयेत्तस्मिनर्चयेत्पीठकेशुभे ॥३६॥

तस्मिन्नास्तीर्य पर्यङ्कं रम्यं श्लक्ष्णान्तरे शुभे ।
विकीर्य्य तत्र पुष्पाणि रम्याणि सुरभीणि च ॥३७॥
तस्मिन् (शुभासने) देवमर्चयेद्रमयासह ।
स्वर्णेन रजतेनापि ताम्रकांस्याश्मदारुभिः ॥३८॥
देवस्य प्रतिमां कुर्यात्सर्वलक्षणसंयुताम ।
पद्मासनस्थं देवेशं सर्वलक्षणशोभितम् ॥३६॥
चतुर्भुजमुदारांगं शंखचक्रगदाधरम ।
चामीकरश्रियायुक्तं सर्वाभरणभूषितम ॥४०॥
नीलया च धरण्या च पार्श्वयोरूपशोभितम् ।
एवञ्च प्रतिमां कृत्वा देवं सम्पूजयेद्धरिम् ॥४१॥
प्रतिमाया अभावे तु शिलां वा समप्रकल्पयेत् ।
शालग्राम शिलायान्तु स्मृत्वा पूर्वोक्तविग्रहम् ॥४२॥
कृष्णाजिने कुशे वापि कम्बले वापि पीठके ।
उपविष्य गुरुन्नत्वा पूजयेत्सुसमाहितः ॥४३॥
पूजयित्वा गुरुं पूर्वं पश्चाद्देवं समर्चयेत् ।
सुखं बद्धासनो भूत्वा भूतशुद्धिं समाचरेत् ॥४४॥
आत्मानं शिरसि स्थाप्य हृदि सञ्चिन्तयेद्धरिम् ।
महापातक(?)पंचांगं तथोपांगकसंज्ञकं ॥४५॥
विरजां संस्मरेदप्सु वेद्यां दिव्यां शुभां (तथा) ।
निमज्याप्सु जपेत्पश्चान्मन्त्ररत्नं समाहितः ॥४६॥
उत्थाय जलमादाय मंत्रेणैवाभिमन्त्र्य च ।

प्राशयित्वा त्रिराचम्य देवार्दीस्तर्पयेद्द्विजः ।
उत्तीर्यपीत्येद्वयं (?) पुनराचमनं चरेत् ॥४७॥
सोत्तरीयं च कौपीनं वस्त्रयुग्मं च धारयेत् ।
आचम्य धारयेत्युरू(?) (दूर्ध्वपुण्ड्रं विधानतः) मृदमुत्रे ॥४८॥
नासिका मूलमारभ्य केशान्तं सुप्रकल्पयेत् ।
त्र्यङ्गुलं तस्य विस्तारश्चतुरङ्गुलमायतः ॥४९॥
सान्तरालं द्विजः कुर्यात्पार्श्वाविंगुलमात्रकम ।
धारयेदूर्ध्वपुंड्राणि ललाटे चोक्त पूर्वकम् ॥५०॥
ऊर्ध्वपुण्ड्रस्य मध्ये तु लक्ष्मी स्थानं प्रकल्पयेत ।
हारिद्रेण च चूर्णेन कुंकुमेन सुगन्धिना ॥५१॥
धृतोर्ध्वपुण्ड्रदेहस्तुसपवित्रकरस्तथा ।
सोपवीतो बद्धशिखः सन्ध्यां पूर्वोक्तवच्चरेत ॥५२॥
स्नानकर्मण्यशक्तस्तुधौतं धृत्वाऽथ वाससी ।
मन्त्रैः सम्मार्जयेदद्भिः शुचिरब्दैवतै द्विजः ॥५३॥
ध्यायन्नारायणं देवं मन्त्ररत्नेन मार्जयेत् ।
अभिमंत्र्य जलं प्राश्य पश्चादाचमनं चरेत् ॥५४॥
सन्ध्यामुपास्य विधिवज्जापाजप्यं (जापंजप्त्वा) हि पूर्ववत् ।
तर्पयेन्मन्त्ररत्नेन शक्त्या देवं जनार्दनम् ॥५५॥
तदीयां स्तर्पयेशनिष्पाद्य(?)स्नान वस्त्रां पुनराचमनं चरेत् ।
पुष्पाण्यादाय पूजार्थे स्त्र्य(आ)रामेवाप्यरण्यके ॥५६॥
उपादेयानि पुष्पाणि गृह्णीयाद्वैष्णवोद्विजः ।
शुचौ देशे शुचिर्भूत्वा कुर्यात्पुष्पस्य संग्रहम् ॥५७॥

तुलसी जाति पुष्पं च सेमती नवमल्लिका ।
मल्लिका करवीरं च कौसुंभं (?) चक्तु मदार्कम ॥५८॥
चम्पकाशोकपुन्नागकेतकीवकुलानि च ।
मन्दारं पारिभद्रश्च कौशेयं पाटलन्तथा ॥५९॥
खादिरश्च समीपुष्पं जपापुष्पश्च यूथिका ।
श्वेतं च किंसुकंजं (?) ॥६०॥
उपपातक सर्वाङ्ग कृष्ण (?) कुक्षौ विचिन्तयेत ।
अथषट्कोणमध्यस्थं षड्भिर्विन्दुभिरन्विस्थितम ॥६१॥
वायुवीजंस्मरेत्तत्र नाभिदेशे समाहितः ।
तवो स्थितेन (?) संध्ये वायुनायातिग्रहम ॥६२॥
प्राणायाम विधानेन शोधयित्वा समुत्सृजेत ।
(थाव) अथवा दैवतं वीजं चन्द्रमण्डल संस्थितम ॥६३॥
ध्यायेत्स्व शिरसिप्राज्ञस्तस्मिन्नुन्दित(?) वारिणा ।
क्षालयित्वा स्वकं देहं शोधयित्वा समुत्सृजेत ॥६४॥
अथात्मानं हृत्कमले विन्यस्य विमले शुभे ।
पंचविंशात्मकं शुद्धमव्ययं प्रकृतेः परम ॥६५॥
स्वरूपमात्मनोज्ञात्वा मंत्ररत्नं न मंत्रवित ।
प्राणायामत्रयं कृत्वा पश्चात्प्रामं समाचरेत ॥६६॥
पंचविंशाक्षरोमंत्रः प्रणवेन समन्वितः ।
पदैश्चैव समायुक्तो मंत्ररत्नमिहोच्यते ॥६७॥
तस्य नारायणा वन्तु(?) नारदाद्यै महर्षिभिः ।
श्रीमन्नारायणः प्रोक्तो प्रवता(देवता) जगदीश्वरः ॥६८॥

छन्दस्तु देवी गायत्री प्रणवोबीजमुच्यते ।
शक्तिः श्रीश्चात्र विज्ञेया मंत्ररत्नस्य सर्वदा ॥६९॥
हृदयादि षडङ्गं षुबद्धादानितु (?) विन्यसेत ।
करन्यासं ततः कृत्वाह्यङ्गुलीषुतथा क्रमम ॥७०॥
पञ्चविंशात्मके देहे मन्त्रवर्णानि विन्यसेत ।
वक (एवं) न्यासं ततः कुर्याद हृदयादिषु मंत्रवित ॥७१॥
एवं न्यासविधिं कृत्वा पश्चाद ध्यानं समाचरेत ।
अनन्ते भोगपर्यङ्के फणारत्न विचित्रिते ॥७२
तत्रासीनं श्रिया सार्द्धं नीलदेहसमन्वितम ।
सूर्यकोटिप्रतीकाशं पीताम्बरधरं हरिम ॥७३
सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम
पद्मासनस्थितं देवं कामलावण्यशोभितम ॥७४॥
प्रफुल्लपद्मपत्राभं लोचनद्वयशोभितम ।
श्लक्ष्णवासं लसद्वस्त्रं (स्र) सुभ्रू युगलनाञ्चितम ॥७५॥
उद्यद्दिनकरा(रा)भायाकुण्डलाभ्यविराजितम ।
सम्पूर्णचन्द्रप्रतिमं स्मितवक्त्रं शुभाननम ॥७६॥
मुक्तादाम लसज्ज्योत्स्नाक्ष्मा(दन्ता)वलिविराजितम ।
सिंहस्कन्धोसुरूपांसं कृत्तायतचतुर्भुजम ॥७७॥
केयूरांगदहारादिभूषणैरुपशोभितम ।
गृहीतशङ्खचक्राभ्यामुद्राहुभ्यां विराजितम ॥७८॥
वरदाभययुक्ताभ्यामितराभ्यां विराजितम ।
रत्ननूपुरशोभाढ्यं पद्मयुग्मविराजितम ॥७९॥

वामांके संस्थितां देवीं स्मरेत्काञ्चनसन्निभाम् ।
सर्वलक्षणसम्पन्नां सर्वाभरणभूषिताम् ॥८०॥
दुकूलवस्त्रसंवीतां नीलकुंचितशीर्षजाम् ।
रक्तकुण्डलसंयुक्तां सर्वावयवशोभिताम् ॥८१॥
दिव्यचन्दनलिप्ताङ्गां दिव्यायुधविराजिताम् ।
हस्तैश्चतुर्भिः संयुक्तां केयूरांगदभूषिताम् ॥८२॥
गृहीत पद्म युगलमृद्वा(हस्ता)भ्यां (सु)विराजिताम् ।
गृहीतमातुलिङ्गां ताम् जाम्बूनदकरान्तथा ॥८३॥
एवं देवीं स्मरेन्नित्यं वामांके सततं हरेः ।
यथात्मनि तथा देवे न्यासकर्म समाचरेत् ॥८४॥
मुद्राम्प्रदर्शयेत्पश्चाच्छङ्खचक्रगदादिभिः ।
वासुदेवस्य दक्षिणे पार्श्वे विन्यसेत्कलशं शुभम् ॥८५॥
सुगन्धद्रव्यसंयुक्तं विचित्रोदकपूरितम् ।
तथा च वामपार्श्वेषु पूजाद्रव्याणि विन्यसेत् ॥८६॥
पात्राणां शोधनं कुर्यात्पुरतो ह्यपसव्ययोः ।
पाद्यार्घ्याचमनं स्नानं मधुपर्कार्थमेव च ॥८७॥
मध्ये तु मधुपर्कार्थे सद्योप्राणी(?) तथैव च ।
एलालवंगकंकोलं कुष्टं जातीफलं तथा ॥८८॥
उशीरं तुलसीपत्रं केशरं चंदनं तथा ।
पुष्पाणि वि(सु)सुगन्धीनि विन्यसेत्कलशोदके ॥८९॥
सौरभेयीं तथा मुद्रां दर्शयेत्कलशे शुभे ।
कलशस्यसमन्तात्त नादार्थं (?) मुपदर्शयेत् ॥९०॥

उद्धरेदर्घ्यपात्रे तु गृह्णीयात्कलशे जले ।
तस्मिन् सौदामिनीं मुद्रां दर्शयित्वाभिमंत्रयेत ॥९१॥
मन्त्रेणैवाभिमन्त्र्याऽथ निक्षिपेत्कलशोदकं ।
पाद्यार्घ्याचमनस्नानं पात्रेषुवा (हि) तथैवच ॥९२॥
पात्रं तु पूरयेत्पश्चादुद्धरेदुदधृतं जलम् ।
द्रव्याणि विन्यसेत्तत्र वक्ष्यमाणानि वै बुधः ॥९३॥
पत्रकं चन्दनंकुष्ठं पाद्यपात्रे विनिक्षिपेत् ।
कुशां दूर्वाक्षतान् पुष्पंकुंकुमं तिलसर्पिषम् ॥९४॥
तुलसीमञ्जरीश्चैव न्यसेदर्घ्यजलेयुते ।
तथैवाचमने दद्यात्कर्पूरागरु(चं)दनम ॥९५॥
धात्री तु तुलसी पत्रं गुग्गुलं त्रिफलन्तथा ।
एलां लवंगं कस्तूरीं स्नानपात्रे विनिक्षिपेत् ॥९६॥
शर्करादधिमध्वाज्यमधुपर्कं समर्पयेत ।
ततः सर्वाणि पात्राणि मन्त्रेणैवाभि मंत्रयेत ॥९७॥
द्रव्याणामप्यलाभे तु विन्यसेत्तुलसीदलम् ।
गुरुं समर्चयेत्पूर्वम्पश्चात्पीठं समर्चयेत ॥९८॥
शक्तिराधारशक्तिश्च चिच्छक्तिश्चेतिशक्तयः ।
कूर्मादयश्चपीठाधः पूजयाप (नीया) यथाक्रमम ॥९९॥
धर्मादीनर्चयेत् सर्वान् पादगात्रभगात्मकान ।
चंडादिद्वारपालांश्च कुमुदादीन्समर्चयेत् ॥१००॥
गृहीतचामरादेव्यो विमलाद्याश्च शक्तयः ।
पूजनीयाः प्रयत्नेन गंधपुष्पाक्षतादिभिः ॥१०१॥

एवं समर्च्चनं कृत्वा पश्चाद्देवं समर्चयेत्।
मन्त्ररत्नेन वै दद्यात्पाद्यार्घ्याचमनादिकम् ॥१०२॥
स्नानार्थेण (?) दर्यादनु दद्यादुतकरं ततः।
तस्मिन्निवेश्य देवेशं दन्तकाष्ठं समर्पयेत् ॥१०३॥
गण्डूषाचमनंदद्यात्सुवासितजलैः शुभैः।
आदेश व (?) ततो दद्याद्विमलचात (कं) पत्रकम् ॥१०४॥
सुवासितेन तैलेन कुर्यादभ्यञ्जनं ततः।
उद्वर्त्तनं ततो दद्यात्कृत्वा सूर्यादिध(?) प्रकल्पितैः ॥१०५॥
केशानांरंजनार्थाय दद्याद् गन्धं सुवासितम्।
स्नापयेद्विधिवत्पश्चादुष्णं शीतजलैः शुभैः ॥१०६॥
हरिद्रया कुंकुमेन दद्यादुद्वर्त्तनं ततः।
सुवासितेन तोयेन शीतेन स्नापयेत्ततः ॥१०७॥
स्नानशात्रप्रितोयेनमन्त्ररत्नेन मन्त्रवित्।
अभिषेकं ततः कुर्यात्सूक्तैर्विष्णुप्रकाशकैः ॥१०८॥
श्री विष्णु प्रकाशकान्येव सूक्तान्यामभिषेचयेत्।
देव्य (वस्य) स्नानकाले तु प्रकुर्यात्तूर्य्यघोषणम् ॥१०९॥
अभिषिच्य ततः कुर्याद् धूपैर्नीराजनैः शुभैः।
श्रुतैं पश्चाद्दोवमदंदत्वावस्त्रैः सम्वेष्टयेच्छुभैः ॥११०॥
पश्चादाचमनं दत्त्वा भूषणैर्भूषयेत्ततः।
आदर्शं दर्शयित्वा च पूजापीठे निवेशयेत् ॥१११॥
नीला धरण्यौ संपूज्य याश्च यौम्न (?) दनंतरम्।
अनन्तवैनतेयौ च सेनेशं च प्रपूजयेत् ॥११२॥

परितः पूजनीयाश्च मूर्त्तयः केशवादयः ।
चण्डादयश्च सम्पूज्याः कुमुदाद्याश्च मुक्तिदाः ॥११३॥
एवं सम्पूजयित्वाऽथ धूपं दद्यात्सुवासितम् ।
चन्दनागरुकर्पूरदेवदारुश्च गुग्गुलुः ॥११४॥
जातीफलंधात्रीफलमुशीरं कुष्ठमेव च ।
तथैव मालनिर्यासं दशांगो धूप उच्यते ॥११५॥
गवाज्येन युतं दद्यात् धूपंदिव्यं मनोहरम् ।
गोघृतेन सुसंयुक्तं दीपं च विनिवेदयेत ॥११६॥
क्षौमकार्पासर्कशोर्यकर्णिकारन्तुशाल्मली ।
अर्वोधक्षारतूलं च दीपमष्टांगमुच्यते ॥११७॥
स्नाने दीपे तथा दाये (?) नैवेद्ये शयने तथा ।
बोधने भूषणे चैव तूर्यघोषं समाचरेत ॥११८॥
नैवेद्यं च ततो दद्यात्प्रात.काले समाहितः ।
दध्यान्न (दध्यन्नं) क्षीरसंयुक्तं फलानि च समर्पयेत ॥११९॥
पश्चादाचमनं दत्त्वा ताम्बूलं सुमनोहरम् ।
पुष्पमाल्यां ततोदत्त्वा नीराजनमथाचरेत् ॥१२०॥
सुरभीणि च (सु)पुष्पानि कस्तूरी सहितानि वै ।
नमस्कृत्वा(त्य) ततो भक्त्या स्तुत्वा स्तुतिभिरेव च ॥१२१॥
नैवेद्यं शेषविप्रेभ्यो वैष्णवेभ्यः समर्पयेत ।
एवम्प्रातः समाराध्य देवं नारायणं हरिम ॥१२२॥
प्रातरौपासनं कुर्यात्पूर्वोक्तविधिना ततः ।
वैष्णवेभ्योऽथ वृद्धेभ्यश्च(?) स्वयमेवार्जयेन्मुदा ॥१२३॥

पित्रार्जितेन वा कुर्यात्स्वस्यवृद्धिफलोदयः ।
कृषिकर्मण्यक्षसकृद् विप्रेभ्योदीयतेधनम् ॥१२५॥
यास्तृम्पतितादिभ्य (?) कथं विप्रो नयाचयेत् ।
मुष्टिमात्रमथामं वा याचयेत्तु गृहे गृहे ॥१२५॥
तदभावेशिलोञ्छेन जीवेच्छक्त्याद्विजोत्तमः ।
सर्वेषां सत्यलाभे तु वने शाकादिना चरेन ॥१२६॥
शाकमूलफलैर्वापिजीवेत्सम्यक्सुतोषितः ।
तान्प्रायेनार्जयेद्द्रव्यं परमापद्गतोऽपिवा ॥१२७॥
एवं द्रव्यार्जनं शक्त्या कुर्वीत प्रत्यहं गृही ।
क्षत्रविट्शूद्रजातीनां स्वस्वकर्मोपजीविनाम् ॥१२८॥
पृथ्वीपालनं राज्ञः कृषिगोरक्षणं विशः ।
कृषिकर्म च शूद्राणां वृत्त्यर्थं मुनिभिःस्मृतम् ॥१२६॥
एवं कुर्यात्सदावृत्तिं स्वयं धर्मे स्वधर्मवित् ।
अथ अरुणोदये सूर्ये गते स्नानं समाचरेन ॥१३०॥
तीर्थे नद्यां तटाके वा गृहे वापि समाहितः ।
कुर्यात्पूर्वोक्तविधिना शौचाद्याचमनक्रियाः ॥१३१॥
स्नानार्थं मृत्तिकाः शुद्धा दूर्वाधात्रीतिलाक्षतान् ।
गृहीत्वा च शुचौ देशे विन्यसेत्प्रयतोद्विजः ॥१३२॥
कुशानथाहरेत्साग्रान ह्रस्वान्मूलयुता (न्तथा) ।
(स)पवित्रपाणिराचम्य सकृदप्सु निमज्य च ॥११३॥
मंत्रेणैव तु गायत्र्या मृत्तिकामभिमंत्रयेन् ।
वि(द्वि)धाकृत्वा मृदं पश्चात्सदूर्वां च सगोमयं ॥१३४॥

स्योनापृथिवीति मंत्रेण गंधद्वारेत्यृचा तथा ।
अधमोत्तममध्येषु कुर्यादङ्गेषु लेपनम् ॥१३५॥
धात्रीमथतिला(न)क्षताञ्चैवाभिमन्त्रयेत ।
ध्यात्वा जगद्गुरुं तत्र देवेशं जलशायिनम् ॥१३६॥
मूलमन्त्रेणाभिमंत्र्यशिरःसंभाजनिं(संमार्जनं) चरेत् ।
तरत्संमंदीतिमंत्रेण आपोहिष्ठेत्याद्यृचा ॥१३७॥
अन्यैश्चपावमानाद्यैः शक्त्या संमार्ज्जनं चरेत् ।
पश्चादप्सु निमज्ज्याथ त्रिः पठेदघमर्षणम् ॥१३८॥
मंत्रद्वयन्तथाजप्त्वा तद्विष्णोरिति वै ऋचम्
उत्थायाचम्यविधिवद्देवांदींस्तर्पयेत्ततः ॥१३९॥
वसून्रुद्रांस्तथाऽऽदित्यान् विश्वेदेवान्मरुद्गणान् ।
सन्ध्याश्च तर्पयेद्विद्वान्तउपवित्यक्षतोदकैः ॥१४०॥
मरीचिरत्रिरंगिराः पुलस्त्यः पुलहः क्रतुः ।
नारदादीनपि ऋषीन्सन्तर्प्य च तिलाक्षतैः ॥१४१॥
तिलोदकैः पितॄन्सम्यक्तर्पयेद्दक्षिणामुखः ।
अग्निष्वात्तान्सोमपांश्च सुमन्तुबर्हिषस्तथा ॥१४२॥
एतान्सन्तर्पयेत्पश्चादपसव्येन वै पितॄन् ।
तर्पयेत्पितृसूक्तेन पितॄन्मातामहान्स्तथा ॥१४३॥
उत्तार्य स्नानवस्त्रन्तु निष्पीड्याऽऽचमनं चरेत् ।
शुक्लाम्बरधरो भूत्वा सपवित्रकरस्तथा ॥१४४॥
धृतोर्ध्वपुण्ड्र आचम्य सन्ध्यां कुर्वीत पूर्ववत् ।
जपेत्तथैवसावित्रीं तथा मंत्रद्वयं शुभम् ॥१४५॥

उपस्थानं जपं कृत्वा ब्रह्मयज्ञमनन्तरम् ।
ब्रह्माञ्जलिं कुशैः सार्धं प्राङ्मुखः सुसमाहितः ॥१४६॥
सव्याहृतिकां सप्रणवां सावित्रीं च जपेद् बुधः ।
तरत्समंदीति सूक्तं च तथावेदादिकम्पठेत् ॥१४७॥
आध्यात्मिकीं तथा विद्यां तद्विष्णोरिति वै ऋचम् ।
मन्त्रद्वयंच सावित्रीं चैशावी (?) च जपेद्विजः ॥१४८॥
ततः स्वगृहमागच्छेद्वाग्यतो नियतेन्द्रियः ।
पादप्रक्षालनं कृत्वा पश्चादाचमनं चरेत् ॥१४९॥
उपविश्याऽऽसने शुद्धे पूजां पूर्ववदाचरेत् ।
पौरुषेण च सूक्तेन तथा मंत्रद्वयेन च ॥१५०॥
गन्धपुष्पादिभिः सत्यपूजां पूर्ववदाचरेत् ।
अनुष्टुभस्य सूक्तस्य त्रिष्टवत्तस्य (?) देवता ॥१५१॥
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ।
प्रथमं विन्यसेद्वामे द्वितीयं दक्षिणे करे ॥१५२॥
तृतीयं वामपादे तु चतुर्थे दक्षिणे पदे ।
पञ्चमं वामजानौ तु षष्ठे वै दक्षिणे तथा ॥१५३॥
सप्तमं वामकुक्षौतु दक्षिणस्यां तथाष्टमम् ।
नवमं नाभिदेशे तु दशमं हृदि विन्यसेत् ॥१५४॥
एकादशं कण्ठ देशे द्वादशं वामबाहुके ।
त्रयोदशं कुक्षौ तु आस्यमध्ये चतुर्दशम् ॥१५५॥
अक्ष्णोः पञ्चदशं न्यासे षोडशं मूर्ध्नि विन्यसेत् ।
एवन्न्यासविधिं कृत्वा पश्चात्पूजां समाचरेत् ॥१५६॥

आद्येनावाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीयेनाऽऽसनं दद्यात्पाद्यं दद्यात्तृतीयया ॥१५७॥
चतुर्थ्यार्घ्यं प्रदातव्यं पंचम्याचमनीयकम् ।
षष्ठ्या स्नानं प्रदातव्यंसप्तम्या वस्त्रमेव च ॥१५८॥
अष्टम्या चोपवीतञ्च नवम्या गंधमेव च ।
दशम्या पुष्पदानञ्च एकादश्या सुधूपकम ॥१५९॥
द्वादश्या दीपदानञ्च त्रयोदश्या निवेदनम ।
चतुर्दश्यां नमस्कारं पञ्चादश्या प्रदक्षिणम् ॥१६०॥
षोडश्योद्वासनं कुर्याच्छेषं कर्म समाचरेत् ।
स्नानं वस्त्र च नैवेद्यं दद्यादाचमनीयकम ॥१६१॥
धूपं दीपञ्च पाद्यञ्च ताम्बूलं दन्तधावनम् ।
हुत्वा षोडशभिर्मन्त्रैः षोडशाज्याहुतीः क्रमान ॥१६२॥
तथैवान्येन होतव्यं ऋग्भिः षोडशभिः क्रमात् ।
तच्च सर्वं जपेद्भक्त्या पौरुषं सूक्तमेव च ॥१६३॥
शक्त्या मंत्रद्वयं जप्त्वा स्तुत्वा स्तुतिभिरेव च ।
भूय एव नमस्कृत्य (त्वा) तदीयान्पूजयेत्ततः ॥१६४॥
एवमभ्यर्चयेद्देवं पूर्वोक्तविधिनैव तु ।
हविष्यं व्यञ्जनैर्युक्तं दुग्धभोज्यंसमर्पयेत् ॥१६५॥
अत्युष्णमतिरूक्षं च शुष्कं •पर्युषितं तथा ।
आघ्रातमितरैर्दृष्टं प्रयत्नेन विवर्जयेत ॥१६६॥
उपादेयानि शाकानि भक्ष्याणि च फलानि च ।
सुपक्वानि सुरुच्यानि पवित्राणि विनिवेदयेत् ॥१६७॥

कदली करल्ली च पटोली बृहतीद्वयम् ।
कूष्माण्डं कुटजञ्चैव उर्वारुद्वयमेव च ॥१६८॥
पनसं नारिकेलं च धात्रीबदरी फलम् ।
कपित्थं क्षुद्रवृन्ताकमाम्रमातकं तथा ॥१६९॥
मदनं कुटजादकं मधूकं द्राक्षमेव च ।
आर्द्रं कपित्थलीचैव जंबीरं तिंतिणीद्वयम् ॥१७०॥
सीतकन्दद्वयंचैव नागरं सूरणन्तथा ।
दीघमूलं कालकं च शाल्मलीकंदमेवच ॥१७१॥
द्रुमशाकं महाशाकं शाल्मलीद्वयमेव च ।
शुकशाकद्वयञ्चैव सीतारामन्तथैव च ॥१७२॥
एवमादीनि शाकानि पवित्राणि निवेदयेत् ।
अभक्ष्याणि निषिद्धानि सर्वालाभे विवर्जयेत् ॥१७३॥
कोद्रवाणि च सूराणि निष्पावं च कुलत्थकम् ।
कृष्णानि आरनालानि चोत्थकानि तु वर्जयेत् ॥१७४॥
मूलकं तिलपिष्टञ्च नालिका शिग्रुमेव च ।
विवंद्वयमलाबुंजपीलुकोशतकंतथा (?) ॥१७५॥
वार्त्ताकं शशणं ष्पह्यश्चच्छदवरं वटी ।
प्लक्षत्वकतकंबिल्व कालिंगं तण्डलीयकम् ॥१७६॥
श्लेष्मातकं कोविदारं माद्राशाकं च भौतिकम् ।
निर्यासानि च सर्वाणि कुम्भानि च तथा हलम् ॥१७७॥
चंचुलिंगुग्गुलुञ्चैव तिक्ताशोकं कलम्बिका ।
अन्यानि च निषिद्धानि वर्जयेत्सवदा द्विजः ॥१७८॥

शुचौ देशे शुचिर्भूत्वा शाकमूलादिकं गृही ।
गृहीत्वा शोधयेत्पश्चात्प्रक्षाल्यैव पुनः पुनः ॥१७९॥
तथा पयोदधिग्राह्यं गव्यमेव हरेः सदा ।
आज्यं च तदभावे तु वर्जयेदितरम्पयः ॥१८०॥
अनिर्दशाहगोक्षीरमवत्सायाश्च वर्जयेत् ।
एवं निवेद्य देवाय दद्यादाचमनं ततः ॥१८१॥
सकर्पूरं च ताम्बूलं पुष्पमाल्यं समर्पयेत् ।
दीपै नीराजनं कृत्वा स्तुत्वा स्तुतिभिरेव च ॥१८२॥
भूय एव नमस्कृत्वा शय्याञ्च (?) विनिवेदयेत् ।
मङ्गलाशासनंकृत्वाकर्मशेषं समापयेत् ॥१८३॥
हरेर्नैवेद्यशेषेण पंचयज्ञान्समर्पयेत् ।
वैदिके लौकिके वापि देवेज्यं जुहुयाद्धविः ॥१८४॥
परितः व्यपरिस्तीर्य समिधौ द्वे विनिक्षिपेत् ।
आधानोपासनोक्तं तु जुहुयादाहुतिद्वयम् ॥१८५॥
सोमोवस्यातिश्चाग्निरग्नि सोमो तथैव च ।
द्यावापृथ्वी इन्द्राग्नी इन्द्रो धन्वन्तरिस्तथा ॥१८६॥
ब्रह्मा च विश्वेदेवाश्च साध्याश्चैव मरुद्गणाः ।
वसुभ्यश्चैव रुद्रेभ्यः आदित्येभ्यस्तथैव च ॥१८७॥
एतानुद्दिश्य होतव्यमन्नं विष्णुनिवेदितम् ।
स एष देवयज्ञस्तु मुनिभिः सम्प्रकीर्त्तितः ॥१८८॥
ततः पितृभ्योदातव्यमर्चनादिसमन्वितः ।
भूतेभ्यश्चबलिंदद्यादतिथिभ्यश्च तथैव च ॥१८९॥

तत्रागतेभ्यः सर्वेभ्यो दद्याद्भक्त्या(शक्त्या)नुसारतः ।
चौरो वा यदि चाण्डालोविप्रघ्नः पितृघातकः ॥१९०॥
वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसंग्रहः ।
दूरादध्वान्नआतस्तु वैश्वदेवे समागतः ॥१९१॥
अतिथिन्तं विजानीयान्नातिथिः पूर्वमागतः ।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ॥१९२॥
स तस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति ।
तस्मात्तत्रागतान्विप्रान्पूजयेदविचारयन् ॥१९३॥
अपृच्छद्गोत्रचरणंन स्वाध्यापकं कथञ्चन ।
तत्र सुस्थंहरिं ज्ञात्वा पूजयेदविचारयन् ॥१९४॥
विशिष्टो वैष्णवोविप्रो गृहं प्रत्यागतोयदि ।
प्रत्युद्गम्य प्रणम्याशुः पूजयेत्तम्विधानतः ॥१९५॥
पादप्रक्षालनं कुर्याच्छुभे यावान्त्नरेद्विजः (?) ।
उपविश्यासने रम्ये मधुपर्केण पूजयेत् ॥१९६॥
भोजयेदन्नपान्नाद्यै रतिथीन्श्रोत्रियोद्विजः ।
आसीमंतुव्रज्वेत (?) नमस्कृत्वा विसर्जयेत् ॥१९७॥
बन्धुभिर्बालवृद्धाद्यैः स्वयं भुञ्जीत वाग्यतः ।
उपविश्याऽऽसने रम्ये प्राग्वा प्रत्यङ्मुखोऽपि वा ॥१९८॥
मण्डले चतुरस्रे च विन्यसेद्भाजनंशुभम् ।
स्वर्णं वा रजतं वापि विशुद्धं कांस्यमेव च ॥१९९॥
चतुःषष्टिपलञ्चैव कांस्यं मुख्यं प्रमाणतः ।
तदर्धेनापि कर्त्तव्यं ततोहीनं विसर्जयेत् ॥२००॥

मधुपर्काय (?) कौठजं पत्र ब्रह्ममेव च ।
प्लक्षमौदुम्बरं वापि मातुलिङ्गञ्च पानसम् ॥२०१॥
जम्बू पुन्नागपर्णे वा भाजने तु विशिष्यते ।
यथा लाभेषु पर्णेषु भुञ्जीया(त)त्सुसमाहितः ॥२०२॥
भिक्षां दद्यात्प्रयत्नेन यतये ब्रह्मचारिणे ।
विष्ण्वर्पितं तु भुञ्जीयात्तीर्थप्राशनपूर्वकम् ॥२०३॥
सम्प्रोक्ष्यपरिषिच्यापःपीत्वा होमं समाचरेत् ।
अमृतोपस्तरणमसीत्यापः प्राश्य विचक्षणः ॥२०४॥
प्राणेभ्योजुहुयादन्नं पश्चाद्भुञ्जीतवाग्यतः ।
न वेष्टितशिरोवासाः सिक्तपादोऽबर्हिजानुकरस्तथा ॥२०५॥
न निधायकरं भूमौ नाशिरो पिवहस्तवात्(?) ।
न काशे न शयानश्च भुञ्जीयात्तुकदाचन ॥२०६॥
ग्रासशेषं न चाश्नीयात्पीतशेषं पिबेन्न तु ।
शाकमूलफलादीनि दन्तच्छेदं न भक्षयेत् ॥२०७॥
यस्तु पाणितले भुङ्क्ते यस्तु भुङ्क्तेऽसमन्हितः ।
प्रसृताङ्गुलिभिर्यस्तु तच्च गोमांसतः समम् ॥२०८॥
शकृदापोशनं(?)पीतं पानीयं पायसं घृतलवणमेव च ।
अन्नं हस्ते न भुञ्जीत तत्तुल्यं गोमांस भक्षणम् ॥२०९॥
प्रत्यक्षलवणञ्चैव करे च लवणान्विते ।
दधि हस्ते न मथितं दीर्घतक्रमयेऽपियत् ॥२१०॥
विद्यमाने स्वहस्ते तु ब्राह्मणो ज्ञान दुर्बलः ।
तोयं पिबति हस्तेन स्व(श्व)मूत्रेणसमं नु तत् ॥२११॥

उद्धृत्यवामहस्तेन यत्तोयं पिबते द्विजः ।
सुरापानेन तत्तुल्यमेवमाह प्रजापतिः ॥२१२॥

पिबेत्पात्रात्तरोद्विधो (?) नारिकेल फले रसम् ।
स सुरापी महापापी रौरवं नरकं व्रजेत ॥२१३॥

चलिते वासने (?) विप्रो विनार्द्र करपादकः ।
दक्षिणास्यो हि यो भुङ्क्ते महायज्ञ फलं लभेत ॥२१४॥

एवं भुक्त्वा विधानेन पश्चात्संप्राशयेज्जलम् ।
अमृतापिधानमसीति मन्त्रेणापो द्विजोत्तमः ॥२१५॥

भुक्तोच्छिष्टं समादाय सवस्मात्किंचिदाहरेत (?) ।
त(उ)च्छिष्टभागदायेभ्यः सोदकं निर्वपेद्भुवि ॥२१६॥

उत्थाय सम्यगाचामेत् भोजनान्तेति संस्थितः ।
मुद्गादिचूर्णमृद्भिर्वा जलैः संशोधयेत्करौ ॥२१७॥

काष्ठेन जलगण्डूषैर्वक्त्रां संशोधयेत्ततः ।
द्विराचम्य विधानेन सुखासीनः स्मरेद्धरिम ॥२१८॥

इतिहासपुराणानि स्वाध्यायं च पठेत्ततः ।
अस्तंगते दिनकरे सन्ध्यां कुर्वीत पूर्ववत् ॥२१९॥

ततः सम्पूजयेद्देवं पूर्ववत्सुसमाहितः ।
अष्टाक्षरविधानेन पूजयेद्द्विजसत्तमः ॥२२०॥

अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते ।
मकारेणोच्यते जीवस्तयोर्दास उदाहृतः ॥२२१॥

तमसः परंगतस्या विष्णोर्नारायणस्य वै ।
नरो नारायणः साक्षात्सो धनगतिरीरितः ॥२२२॥
तस्मै तु नित्य को (?) कार्यं प्रार्थनां तदनन्तरम् ।
चतुर्थ्यं चोच्यते सर्वदेशकालेषु धैववहि (सर्वथा ॥२२३॥
एवमर्थं विदित्वैव ऋषिं छन्दोऽधि दैवतम् ।
न्यास मुद्रादिकं पश्चात्कृत्वा विष्णुं समर्चयेत् ॥२२४॥
क्रुद्धाक्त (?) यमहोक्वाय तथैव च ।
स्रूत्क्वाय(?)सहस्रोत्काय पचमिष्टे तुक्षैवप्रपृहृष्टो तदनन्तरम्
अष्टाक्षराण्यष्टदिक्ष यथा मन्यन्यसेद्बुधः ।
एवं न्यासविधिं कृत्वा पूजां पूर्ववदाचरेत् ॥२२६॥
क्षीराज्यशर्करोपेतं नैवेद्यन्तु समर्पयेत् ।
ततः स्तुत्वा नमस्कृत्वा शय्यायां विनिवेशयेत् ॥२२७॥
सम्यक्श्लक्ष्णतरे रम्ये पर्यङ्के पुष्पशोभिते ।
स्वापयेद्रमयासार्द्धं परमुपारमणीयया (?) ॥२२८॥
मंगलाशासनं कुर्यात्तूर्यघोषपुरस्सरम् ।
नामानि कीर्त्तयित्वाऽथ सायंहोमं समाचरेत् ॥२२९॥
अतिथीन्स्तर्पयित्वाऽथ स्वयं भुञ्जीत पूर्ववत् ।
आचम्य प्रयतो भूत्वा स्वाध्यायाध्ययनम्पठेत् ॥२३०॥
अन्यत्र देवायतनाच्छयीत नियतात्मवान् ।
एवमाराधयेद्देवप्रति ( मां ) नित्यमतन्द्रितः ॥२३१॥
अथ नैमित्तिकं वक्ष्ये हरेराराधनं द्विजाः ।
मन्दवारेतु सायाह्ने (सायाह्नं) विधिवित्पूजयेद्धरिम् ॥२३२॥

गन्धपुष्पादिभिर्देवं धूपदीपनिवेदनैः ।
फलैश्च भक्ष्यभोज्यैश्च गीतवादित्रनर्त्तनैः ॥२३३॥
अर्चयेदच्युतं भक्त्या यथावित्तानु सारतः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥२३४॥
अर्चयेज्जगतामीशं पूजाजागरणादिभिः ।
प्रभाते विमले स्नात्वा द्वादश्यां पुरुषोत्तमम् ॥२३५॥
अर्चयेन्मालतीपुष्पैःपयःस्नानं समर्पयेत् ।
ब्राह्मणान्भोजयेद् भक्त्या स्वयं कुर्वीत पारणम् ॥२३६॥
वैष्णवर्क्षे तु पूर्वाह्ने पूजयेत्सर्वदा द्विजः ।
सेवन्तीकुसुमैर्दिव्यैर्धूपदीपैर्मनोहरैः ॥२३७॥
निवेदयेच्च दध्यन्नं पानं च शर्करायुतम ।
मध्यान्हे पौर्णमास्यां वा पुन्नागैश्चम्पकैरपि ॥२३८॥
पूजयेदच्युतं भक्त्या शुद्धान्नं विनिवेदयेत् ।
रात्रौ सम्पूजयेत्तस्यां मल्लिकाकुसुमैः शुभैः ॥२३९॥
निवेदयेद्रौप्यपात्रे पायसं शर्करान्वितम ।
अमायान्तु विशेषेण मासि मासि प्रपूजयेत् ॥२४०॥
पूजयेत्कुसुमैः कुन्दैः करवीरैः सपाटलैः ।
पिण्डयज्ञविधानेन अर्घ्यावाहनपूर्वकम ॥२४१॥
भोजयेद्ब्राह्मणान् भक्त्या पितॄनुद्दिश्य स्वशक्तितः ।
पितृरूपं हरिं तत्र प्रीणात्वितिवै (?) ब्रुवन् ॥२४२॥
कुर्याच्छ्राद्धविधानेन विष्णोराज्ञामनुस्मरन् ।
प्रसादतीर्थे दद्याद्वै पितृभ्यश्च विशेषतः ॥२४३॥

ग्रहणे रविसङ्क्रान्तौ शक्त्या देवं प्रपूजयेत् ।
तत्कालसंभवैः पुष्पैः धूपदीपैर्निवेदनैः ॥२४४॥
तपोमासि मिते पक्षे द्वादश्यां च विशेषतः।
वाराहरूपिणं देवं सम्यक् तत्र प्रपूजयेत् (?) ॥२४५॥
अपूपैः मंठकाद्यैश्चभक्ष्यभोज्यनिवेदनैः ।
भक्त्या सम्पूजयेद्देवं ततः सम्पूजयेत्पितृन् ॥२४६॥
ततः ( श्च तर्पणं कृत्वा पुनः ) सम्पूजयेद्धरिम् ।
पूजयेत्कुमुदैः शुभ्रैः पुण्डरीकैस्तथोत्पलैः ॥२४७॥
कृसरं मुद्गसूपं च नैवेद्यं च निवेदयेत् ।
प्राजापत्यर्क्षसंयुक्तं कृच्छ्रा सा तु शिवाष्टमी ॥२४८॥
सा जयन्तीति विख्याता त्रिपु लोकेषु विश्रुता ।
तस्यामुपोष्य विधिवच्छक्त्या सम्पूजयेद्धरिम् ॥२४६॥
जयन्त्यामुपवासश्च महापातकनाशनः ।
स कार्यश्च यथाशक्त्या पूजनीयश्च केशवः ॥२५०॥
बालकृष्णं विधानेन भानुरुत्तुंगसंस्थितम् ।
पूजयेद् विविधैः पुष्पैर्गन्धधूपादिभिस्तथा ॥२५१॥
नैवेद्यैर्विविधैः श्लक्ष्णैः गुड़ाद्यैः कृसरैरपि ।
रात्रौ जागरणं कुर्याद् गीतवादित्रनिःस्वनैः ॥२५२॥
इतिहासपुराणानां पठनैः श्रवणैरपि ।
प्रभाते (विमले) स्नात्वा विशिष्टै र्वैष्णवैःसह ॥२५३॥
पूर्ववत्पूजयेद्देवं ब्राह्मणांश्चैव भोजयेत् ।
स्वयं च पारणं कृत्वा विष्णुमेवं प्रपूजयेत् ॥२५४॥

सामगानैर्नृत्तगीतैस्तूर्यघोषैः समाहितः ।
निवेश्य कृष्णं दोलायां तोलयेद् भगवत्परः ॥२५५॥
अपूपान्शर्करोपेतान् निवेद्य विनिवेशयेत् ।
एवं सम्पूजयेद्देवं वर्षे वर्षे च वैष्णवः ॥२५६॥
मासि चैत्रे शुक्लपक्षे नवम्यां च पुनर्वसौ ।
कौशल्यायां समुत्पन्नो विष्णुः काकुत्स्थ इतीरितः ॥२५७॥
तस्यां स्नानोपवासाद्यैः पूजाजागरणादिभिः ।
अर्चयेद् गन्धपुष्पाद्यैर्गीतवादित्रनर्त्तनैः ॥२५८॥
अवो (महो) त्सवं प्रकुर्वीत कृष्णजन्मनिवन्नरः ।
श्रवणेन समायुक्ता मासे भाद्रपदे सिता ॥२५९॥
द्वादशी सा महापुण्या नाम्ना तु विजया तिथिः ।
तस्यां स्नातो विधानेन सर्वतीर्थफलं लभेत् ॥२६०॥
दानोथवा(दानन्तथा)महोमाद्यं(महामन्त्रं)सर्वमानन्त्यमश्नुते
वामनं पूजयेद्विष्णुं काश्यपेयं सनातनम् ॥२६१॥
कुन्दैश्च कुटजैर्होमस्तुलस्याः कोमलैर्दलैः ।
दध्यन्नं फलसंयुक्तं तथैव च गुडोदनम् ॥२६२॥
भक्त्या सम्पूजयेद्देवं विप्रान् समभोजयेत्तथा ।
कार्तिके मासि नियमात्सायं संध्यासमागमे ॥२६३॥
अर्चयेन्मालतीपुष्पैस्तथा रक्तोत्पलैरपि ।
दीपान्निर्वापयेत्तत्र तिलतैलसमन्वितान् ॥२६४॥
सुहृद्यम्पायसान्नंच नैवेद्यम्विनिवेदयेत् ।
निरन्तरंचतुर्मासे पूजयेदरुणोदये ॥२६५॥

तूर्यघोषैर्नृत्यगीतैश्छत्रचामरसंयुतैः ।
अपूपान घृतपक्वांश्च शर्कराश्च समर्पयेत् ॥२६६॥
शाल्यन्नं दधिसंयुक्तं कदलीफलसंयुतम् ।
भक्त्या निवेदयेच्चैव माममेकन्तु वैष्णवः ॥२६७॥
पूजयेद्धरिपत्रैश्च चंपकैर्बकुलैरपि ।
शयने वाथ न कुर्यादुत्सवं पंचवासरम् ॥२६८॥
वादित्रैर्नृत्यगीताद्यै दीपैर्नानाविधैः सदा ।
फलैश्च विविधैर्भक्त्या शक्त्या देवं च पूजयेत् ॥२६९॥
प्रतिमासे पौर्णमास्यां कालाण्या दिंनिमिष्टापि ।
महोत्सवं प्रकुर्वीत जपहोमार्चनादिभिः ॥२७०॥
परिशोध्यं च गंधाद्यैः शीतलैस्तर्पयेज्जलैः ।
तोरणैर्विविधैः रम्यैरलङ्कुर्वीत वर्त्मसु ॥२७१॥
रम्ये निवेश्य देवेशं पानकास्त्रजशोभितैः ।
शंखभेरीनिनादैश्च स्तोत्रगीतैश्चनूतनैः ॥२७२॥
विधिवदर्पयेदन्नं देवं वदभि (?) वैष्णवैः ।
सहवाराणैः(?)र्व्यदनैरश्वे दीपिकाभिः समुज्ज्वलैः ॥२७३॥
महोत्सवं सर्वत्रार्थव (?) सम्पूजयेद्धरिम ।
वैष्णवेषु यथाकाले आगतेषु महात्मसु ॥२७४॥
तत्राप्येवं विधानेन कुर्वीतोत्सवमुत्तमम् ।
तत्कालसम्भवैर्द्रव्यैर्यथाशक्त्यानुसारतः ॥२७५॥
उत्सवं वासुदेवस्य कुर्वीत श्रद्धयान्वितः ।
पुष्पैः फलोपहारैर्वा कुर्यादास्तिक्यभावतः ॥२६६॥

उत्सवे वासुदेवस्य स्पृष्टास्पृष्टिर्न विद्यते ।
उत्सवे वासुदेवस्य यः स्नाति स्पर्शशंकया ॥२७७॥
स्वर्गस्थाः पितरस्तस्य पतन्ति नरकेषु च ।
समाजमंत्रवीथीषु कृ(ग)त्वा वाऽऽचमनं चरेत् ॥२७८॥
तथोत्सवे हरिद्राद्यैर्विकीर्णागीथी वैष्णवः ।
महाभागवतानो पुष्पैः स्नायादपांशुभिः ॥२७९॥
न स्नायाच्छन्नगात्रोऽपितथार्यक्ष जलैः शुभैः ।
नित्यनैमित्तिकेष्वेव विष्णोराराधनक्रमः ॥
पुरा यथोक्तविधिना या वै प्रोक्ता द्विजोत्तमाः ॥२८०॥

श्रीवशिष्ठः

अमायामपराह्णे तु पितृयज्ञं समाचरेत ।
स्नात्वा यथोक्तविधिना पूजयित्वा जनार्दनम ॥२८१॥
स्थापयित्वा चरुं वह्नौ स्थाल्यां व्रीहिमयं शुभम् ।
वन्हेर्दक्षिणतः स्थाप्य चाभिघार्य श्रुवेण वै ॥२८२॥
वहिद्यासाद्धार्य (?) परिस्तीर्यापसव्यवत् ।
इध्माधानं ततः कुर्यादाघारौ चक्षुपी तथा ॥२८३॥
त्वसोऽथ इतिसूक्तेन मधुव्वात इतिऋचा ।
अभिधानं विधानेन जुहुयात्प्रत्यृचं चरुम् ॥१८४॥
प्राचीनावीतिना हुत्वा शेषं कर्म समाचरेत् ।
अग्नेर्दक्षिणतः पिण्डान्दत्त्वा च निर्वपेत् ॥२८५॥
गोमयेनोपलिप्याऽथ मण्डलं वर्त्तुलं शुभम् ।
तस्मिन्विकीर्य्यं सतिलान्कुशानास्तीर्य मण्डले ॥२८६॥

दक्षिणाग्रेषु दर्भेषुदद्याद्दरि (?) तिलैः सह ।
श्रुधं तायित इति (?) तिलं दद्यात्क्रमेणतु ।।२८७।।
अंजनाद्व्यञ्जनंदद्याद्धिरण्यं चैववासमसी ।
नमोवः पितर इति+उपस्थानं जपेत्पितृन् ।।२८८।।
तान्पिण्डान्निक्षिपेदग्नौ नद्यांवाऽपि शुभेजले ।
आहूयब्राह्मणान्पश्चात्पितृयज्ञार्थसिद्धये ।।२८९।।
पित्र्यर्थं देवतार्थं च शक्त्या वाऽथ निमन्त्रयेत् ।
द्वौ दैवे ब्राह्मणौ प्रोक्तौ त्रयः पित्र्ये तथैव च ।।२९०।।
एकं वाऽपि यथाशक्त्या ब्राह्मणं वै निमन्त्रयेत् ।
कुशासनेपु चांचाता (तान्सर्वान) यथार्हमुप वेशयेत् ।।२९१
प्राङ्मुखो दैवते प्रोक्तः पित्र्ये चोदङ्मुखस्तथा ।
उपविश्यासनेदेवं तत आवाहयेद्द्विजान ।।२९२।।
पूर्वमावाहयेद्देवान्विश्वेदेवास इत्यृचा ।
यवान्विकीर्य परितः पात्रं कुशासमन्विते ।।२९३।।
शन्नोदेवीःक्षिपेद्वारि यवोऽसीतियवास्तथा ।
या दिव्या इति मन्त्रेण हस्तेनार्घ्यं निवेदयेत् ।।२९४।।
पश्चात्सम्पूजयेच्छक्त्या गंधपुष्पाक्षतादिभिः ।
प्राचीनावीकःपश्चात्पितृनावाहयेत्तथा ।।२९५।।
अपहता इति तिलान्विकीर्य च समंततः ।
पूर्ववत्स्वकरे पात्रं दत्वा तिलयुतं जलम् ।।२९६।।
उपंत्वेति चारु च जप्त्वाऽर्घ्यं विनिवेदयेत् ।
पूर्ववद् गंधपुष्पाद्यैः पूजयेत्सुसमाहितः ।।२९७।।

मण्डले चतु रस्रे ति विन्यसेद्भाजनं शुभम् ।
पितृणां निमित्ते तु दद्याद्भाजनं तिलसंयुतम ॥२९८॥
पूर्वोक्तानि च पर्णानि स्वर्णानि रजतानिच ।
प्रक्षाल्य मण्डले दत्वा पात्रे प्रक्षालनं चरेत् ॥२९९॥
महामाहानामघेवं (?) कुर्यादावाहनादिकम् ।
पतीनांयतिनासार्धं (?) विनाभ्युदय कर्मणि ॥३००॥
उपस्तीर्य घृतम्पात्रो दद्याद् गव्यमतन्द्रितः ।
हरेर्निवेदितं दद्यात्सर्वमानन्त्यमश्नुते ॥३०१॥
यवासंगुड़मेधाज्यनार्द्र कं कदलीफलम् ।
महाशाकं कालशाकं दद्यात्कृशरं तथा ॥३०२॥
परिस्तीर्य कुशैः पात्रं परिपिच्य जलेन तु ।
आपोशानक्रियापूर्वं भोजयेत्तान् समाहितः ॥३०३॥
अभावे पितृयज्ञे तु पिण्डांस्तान् विनिक्षिपेत् ।
दद्यादाचमनं तस्मात्स्वधाकारमुदाहरेत् ॥३०४॥
दत्वा तु दक्षिणां शक्त्यावाजेवाजेत्यृचं जपेत् ।
प्रदक्षिणानमस्कारैस्ततो विप्रान्विसर्जयेत् ॥३०५॥
एवं (श्राद्धं) विधानेन माता पित्रोर्मृतेऽहनि ।
प्रतिसम्वत्सरं कुर्यात्पितृयज्ञादि पूर्ववत् ॥३०६॥
तथा नांदीमुखंश्राद्धं कुर्याद्वै पितृदैवतम् ।
एवं प्रदक्षिणावर्त—कुर्यादत्रोपवीतिना ॥३०७॥
(होम) पितृयरां(?)वर्जयित्वा सर्वं कर्म समाचरेत् ।
मातृश्राद्धंतुपूर्वंस्यात् पितृणां तदनंतरं ॥३०८॥

ततो मातामहानां च वृद्धंश्राद्धत्रयं स्मृतं ।
युग्मानेव हि सर्वत्र ब्राह्मणान्विनियोजयेत् ॥ ३०६॥
उपवेश्य प्राङ्मुखान्सर्वान पूर्ववत्पूजयेद्द्विजान् ।
तिलांस्तु वर्जयेत्तत्र सर्वं कुर्याद्यवैरपि ॥३१०॥
भोजयेदन्नपानाद्यैर्हृद्यैश्चैव मनोहरैः ।
पयैश्चानिवयेत् (पायसैर्निमर्येत)पिण्डानपि कर्कन्धुमिश्रितान् ॥
दद्यादुदकप्रणवं (?) वापिसर्वमंत्र समाचरेत ।
आवाहनाग्नौकरणरहितं (?) ह्यपसव्यमनु ॥३१२॥
एकोद्दिष्टंरकाध्यमेकपिंडा (?) द्विधा द्विधा ।
द्वैतिल मिश्रितं (?) ॥३१३॥
अभिरम्यतामितिवदन्नु कुर्यादग्र विसर्जनम् ।
तिलैर्युतं सोदकुम्भं दद्याद्दक्षिणया सह ॥३१४॥
पितृ मातृ गुरु भ्रातृ सुतमातामहादयः ।
संस्कार्याः पिण्डमेवैन(?) यदि पंचत्वमागताः ॥३१५॥
एवं शरीरं संस्नाप्य आच्छाद्य शुभवाससा ।
उपलिप्ते शुभे देशे स्थापयित्वा कुशान्तरे ॥२१६॥
चतुरस्रं शुचौ देशे कुर्वीत शुभमंडलम् ।
तस्मिन्नुलूखलं स्थाप्य परमात्मेति वैजपेत् ॥३१७॥
अवहन्याद्धरिद्रां तु शुभचूर्णमयीं शुभाम् ।
प्रवाप्य केशश्मश्रु स्वयं स्नात्वा विधानतः ॥३१८॥
अर्चयेद्गंधपुष्पाद्यै वेदसं हरिमच्युतं ।
गोभू (वस्त्र) हिरण्याद्यैः पूजयेद् ब्राह्मणंसदा ॥३१९॥

पितरोपासनं कृत्वा शिविकां कारयेच्छुभाम ।
प्रेतस्योद्वहनार्थन्तु वाहकान वरयेच्छुभान ॥३२०॥
वाहकेपुनलब्धेषु कृष्णानडुहयोजयेत ।
निवेश्य गोरथे प्रेतं (?) दाहदेशमनु जपेत् ॥३२१॥
हर्यर्पित हरिद्रादि गन्धमाल्यविभूषणैः ।
अलङ्कृत्य यथाप्रेतं दाहदेशं निवेदयेत् ॥३२२॥
गृहीत्वोपासनं तत्र विशिष्टैर्ब्राह्मणैः सह ।
प्रेतमादायगच्छेयुः जपेद्वै वेदसंहिताम ॥३२३॥
हरिद्रां विकिरन्मार्गे गीतवादित्रसंयुतः ।
दाहदेशं व्रजेत्सम्यग्वर्जयेद्रोदनं तथा ॥३२४॥
प्रेतस्य दहनार्थन्तु खनेत्कुण्डं सुशोभनम ।
सगोमयेनोदकेन सम्प्रोक्ष्य च विशोधयेत् ॥३२५॥
शमीपर्ण तिलैः मिश्रितोयैः (?) सम्मार्जयेत्ततः ।
काष्ठैश्च याज्ञिकैः शुद्धैः स्थितिं कुर्यात्प्रयत्नतः ॥३२६
कृष्णाजिनमथास्तीर्य तस्मिन्प्रेतं निवेशयेत् ।
घृतानुलेपनं कुर्यात्प्रेतदेहे तु मन्त्रतः ॥३२७॥
तिलैर्दर्भैर्निधायाथ तस्मिन्नग्निं विनिक्षिपेत् ।
क्रव्यादमिति ऋचं जप्त्वा दद्यादग्निं तथोरसि ॥३२८॥
प्रज्ज्वाल्य वन्हि दर्भैस्तु परिस्तीर्य तिलैः सह ।
पर्युक्षणं जलैः कृत्वा पात्रमादनमाचरेत ॥३२९॥
आसादनं च पात्राणां पितुर्दक्षिणतस्तथा ।
इममग्नेत्यृचंजप्त्वा चमसा सादनं ततः ॥३३०॥

आज्यसंस्कारणं (?) कृत्वा तूष्णीं सिध्म निधाय च ।
प्राविनावीतिना तत्र कार्यं सर्वमशेषतः ॥३३१॥
परिस्तरणपर्युक्षं सर्वं तत्रापसव्यवत् ।
तूष्णीमेवात्र जुहुयादाघारावाज्य (?) भागकौ ॥३३२॥
चतुराज्याहुतीस्तत्र होतव्यास्तु स्रुवेण वै ।
अग्निः कामोऽथ लोकश्च देवताः समुदीरिताः ॥३३३॥
एतानुद्दिश्यजुहुयादाज्यं तत्र समाहितः ।
तदभावेनिवचरुणा (?) अन्यैर्वायात्रिकैः शुभैः ॥३३४॥
हुत्वा मन्त्रेण जुहुयाद्दशवारं समाहितः ।
हुत्वाथासौस्विष्टकृतं योऽग्नि (?) मितवैत्यृचा ॥३३५॥
प्रायश्चित्ताहुती हुत्वा होमशेषं समापयेत् ।
दह्यमानं ततः प्रेतं कुशैश्च जुहुयात्ततः ॥३३६॥
प्रत्यृचं प्रणवाद्यन्तं जुहुयाद्वै पृथक् पृथक् ।
एवं प्रदहनं कृत्वा तमग्निं शमयेज्जलैः ॥३३७॥
शमीपर्णैः तिलैः स्तोयैः शान्तिकैस्त्रिऋचं जपेत् ।
अस्थीनि संचयित्वाथ शुभे तोये विनिक्षिपेत् ॥३३८॥
तीर्थे नद्यां ह्रदे वापि निक्षिप्य स्नानमाचरेत् ।
ततस्तिलोदकंदत्त्वा यावाणं (?) ह्यपसव्यवत् ॥३३९॥
उच्चार्य नामगोत्रे तु पित्रे दद्याज्जलाञ्जलिम् ।
पाचयित्वा चरुं तत्र दद्यात्पिण्डं कुशोत्तरे ॥३४०॥
निक्षिप्य तज्जले स्नात्वा स्वगृहं प्रविशेत्ततः ।
श्राद्धमस्मैप्रकर्त्तव्यमेकोद्दिष्टं विधानतः ॥३४१॥

आममेवात्र दातव्यमन्नं तु प्रतिषिध्यते ।
आवाहनाग्नौ करणं वैश्वदेवं च वर्जयेत ॥३४२॥
पाद्यार्घ्यगन्धपुष्पाद्यैरर्चयेदपसव्यतः ।
भोजनाद्द्विगुणं त्वामं दद्यादाज्यादि संयुतम ॥३४३॥
शर्करासूप लवणं वस्त्रहेमतिलानि च ।
दद्याच्च दक्षिणां शक्त्या ततो विप्रान्विसर्जयेत ॥३४४॥
अधः शायीब्रह्मचारी तथैव नियताशनः ।
नित्यं स्नात्वा विधानेन दद्यात्प्रेते तिलोदकम ॥३४५॥
एकोत्तरेण वृद्ध्या तु दद्याद्दशदिनेषु च ।
एकैकं प्रत्यहं पिण्डं दद्याद्वै प्रयतो बहिः ॥३४६॥
श्राद्धन्तु प्रत्यहं कृत्वा पूर्वत्र दशवासरम् ।
दशमेऽहनि सम्प्राप्ते सर्वमेव समापयेत ॥३४७॥
स्नात्वा तिलोदकं दत्वा तत्राशौचं निवर्त्तयेत ।
मङ्गलद्रव्यसंयुक्ताः प्रविशेयुः स्वमालयम् ॥३४८॥
दूर्वाक्षतान्सर्षपाश्च घृतक्षीरमधूनि च ।
आदाय पूर्णकुम्भञ्च प्रविशेच्च गृहं प्रति ॥३४९॥
दशाहं ब्राह्मणानान्तु राज्ञां द्वादशवासराः ।
पञ्चादशाहं वैश्यानां शूद्राणामेकविंशतिः ॥३५०॥
आशौचं पिण्डदानादि कर्त्तव्यं हि यथोक्तवत ।
अमंत्रकेण शूद्राणां सर्वकर्म विधीयते ॥३५१॥
एवं दशाहं निर्वर्त्य गृहशुद्धिं समाचरेत् ।
मृण्मयानिच भाण्डानि सर्वाण्यपि परित्यजेत् ॥३५२॥

एकादशेऽन्हि सम्प्राप्ते स्वस्तिवाचनमाचरेत् ।
सम्पूज्य विधिवद्विष्णुं गन्धपुष्पादिभिर्द्विजः ॥३५३॥
पायसापूपलड्डाद्यान्नपानकादि निवेदयेत् ।
आहूय ब्राह्मणान्पश्चाच्छ्राद्धाय विनिमन्त्रयेत् ॥३५४॥
वृषमथो (षु) त्सृजेत्तत्रनीलं लोहितमेव च ।
अग्निसंस्थापनं कुर्यादुपलेपादिपूर्वकम् ॥३५५॥
इध्माधानाज्य भागौ च हुत्वा होमं समाचरेत् ।
चरुणा पायसेनापि यावकेन तथैव च ॥३५६॥
इन्द्रं सोमं च रुद्रं च जुहुयादत्र देवताः ।
परोमात्रेति सूक्तेन पश्चादाज्यं श्रुवेण तु ॥३५७॥
होमशेषं समाप्याथ चक्रेणैवांकयेद् द्वयम् ।
परिणीय ततो वन्हिमुत्सृजेत्तु वृषं ततः ॥३५८॥
माता रुद्राणा मिति ऋचं जपित्वैवोत्सृजेद् वृषम् ।
पूजयेद्ब्राह्मणान्सम्यक्पाद्यार्घ्याचमनादिभिः ॥३५६॥
षोडशैव तु पिण्डास्तानेकोद्दिष्टविधानतः ।
आचान्तान्तोषयेद्विद्वान दक्षिणाभिः स्वशक्तितः ॥३६०॥
उदकुम्भाश्च दत्वाऽथ प्रणिपत्य विसर्जयेत् ।
पिण्डांस्तुनिर्वपेदाशु स्नात्वा बन्धुजनैः सह ॥३६१॥
हविष्यं वाग्यतोसकृद्भुक्त्वा भुञ्जीतात्र समाहितः ।
सपिण्डकरणं कुर्याद्द्वादशेऽन्हि यथोक्तवत् ॥३६२॥
त्रयोदशेऽन्हि वा कुर्यात्त्रिपक्षेवा त्रिमासिके ।
षण्मासे संवत्सरान्ते वा एकविंशेऽन्हि वा तथा ॥३६३॥

आमन्त्र्य ब्राह्मणान्स्नात्वा हरिर्विधिवदर्चयेत् ।
गन्धपुष्पैर्धूपदीपैर्नैवेद्यैर्विविधैस्तथा ॥३६४॥
सम्पूज्य जगतामीशं वासुदेवं सनातनम् ।
पार्वणोक्तविधानेन ब्राह्मणानुपवेशयेत् ॥३६५॥
पितृयज्ञविधानन्तु वर्जयेद्दैव कर्मणि ।
कामकालकसञ्ज्ञास्तु विश्वेदेवा प्रकीर्तिताः ॥३६६॥
देवे द्वौ प्राक्त्रयः पित्र्ये उदक्तार्थ(?)मेव तु ।
एवं विप्रान्निवेश्याथ कर्मशेषं समाचरेत् ॥३६७॥
गन्धोदकतिलैर्युक्तं कृत्वापात्रचतुष्टयम (?) ।
प्रेतपात्रोदकं तेष पितृपात्रेष योजयेत् ॥३६८॥
पृथक्संयोजयेदद्भिः संग (च्छ) ध्वमितिऋचा ।
ये समाना इति द्वाभ्यां मधुवाता इतिऋचा ॥३६९॥
क्रमेणभिस्तु संयोज्य पश्चादर्घ्यं निवेदयेत् ।
अर्चयेद्गन्धपुष्पाद्यं वस्त्रेराभरणादिभिः ॥३७०॥
हव्यं पितृश्च हव्यान्नैः सुपक्वैः प्रयतात्मवान् ।
भोक्तेषु तेषु विप्रेषु दद्यात्पिण्डान्कुशोत्तरे ॥३७१॥
मध्वाज्यतिलमिश्रेण दद्यात्पिण्डा (?) न्सक्तुना ।
पूर्ववत्प्रेतपिण्डन्तु पितृपिण्डेष योजयेत् ॥३७२॥
आयातास्तु ततो विप्रान्दक्षिणाभिः प्रपूजयेत् ।
उदकुम्भास्ततो दत्वा नमस्कृत्वा विसर्जयेत् ॥३७३॥
अत ऊर्ध्वं प्रत्यहं वा प्रतिमासमथापिवा ।
यावत्सम्वत्सरं दद्याच्छ्राद्धमस्मै स्वशक्तितः ॥३७४॥

प्रत्यब्दं वत्सरादूर्ध्वं मातापित्रोर्मृतेऽहनि ।
पितृयज्ञविधानेन कुर्याच्छ्राद्धमतन्द्रितः ॥३७५॥
प्रत्यब्दं पार्वणं कुर्यान्मातापित्रोर्मृतेऽहनि ।
अन्यथा कुरुते यस्तु ब्रह्महत्यां सविन्दति ॥३७६॥
अकृत्वपार्वणं श्राद्धं मातापित्रोर्मृतेऽहनि ।
स चण्डालो भवेत्सद्यो रौरवं नरकं व्रजेत ॥३७७॥
तस्मात्पित्र्यादिके पुत्रः श्राद्धं कुर्वीत पार्वणम ।
अमायान्तु विशेषेण चौलोपनयनादिषु ॥३७८॥
त्रयोदशेऽन्हि सम्प्राप्ते चलि(चौलं)कुर्यात्तु वैष्णवः ।
स्नात्वा नद्यां तटाके वा विशिष्टैर्ब्राह्मणैः सह ॥३७९॥
जपित्वा वैष्णवान्सूक्तानस्नात्वा सन्तर्पयेत्ततः ।
नामभिः केशवाद्यैश्च मन्त्रैः सन्तर्पयेद्धरिम् ॥३८०॥
तर्पयेन्नामभिः स्वैं स्वैं नित्यमुक्तांश्चवैष्णवान् ।
ततः स्वमालयं गत्वा विधिवत्पूजयेद्धरिम ॥३८१॥
देवस्य पुरतो वन्हि प्रतिष्ठाप्य यथोक्तवत ।
इध्माधानादिकं कृत्वा पश्चाद्धोमं समाचरेत ॥३८२॥
पौरुषेण तु सूक्तेन पायसं मधुसंयुतम ।
आज्यं च जुहुयात्सम्यक्प्रत्यृचम्प्रणवान्वितम ॥३८३॥
तथैव मन्त्ररत्नेन जुहुयाच्छतसंख्यया ।
अन्यैश्च वैष्णवैर्मन्त्रैः शक्तया च जुहुयात्ततः ॥३८४॥
नामभि. केशवाद्यैश्च जुहुयात्सुसमाहितः ।
स्वैःस्वैश्च नामभिर्हुत्वा नित्यमुक्तांस्तथैवच ॥३८५॥

ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
पश्चात्सम्पूजयेद्विप्रान्केशवाद्यैश्चनामभिः ॥३८६॥
नित्यमुक्तान्त्समुद्दिश्यपूजयेद्ब्राह्मणाञ्छुभान ।
गन्धपुष्पैर्धूपदीपैर्वस्त्रैराभरणैः शुभैः ॥३८७॥
भोजयेत्पायसान्नेनशर्कराज्ययुतेन वै ।
विविधैरन्नपानाद्यैर्वासोऽलंकरणैः शुभैः ॥३८८॥
भोजयित्वा ततः पिण्डान्यथा शक्त्या विनिक्षिपेत् ।
प्रागग्रेषुच दर्भेषु उपवीतः समाहितः ॥३८९॥
यवैश्चमधुसंयुक्तं दद्यात्पिण्डान्पृथक् पृथक् ।
नामभिः केशवाद्यैश्च दद्यात्पिण्डान्कुशोत्तरे ॥३९०॥
तथा नित्याश्च मुक्ताश्च नामलिख्यैव(लिख्यै व)निक्षिपेत् ।
पिण्डानग्नौ विनिक्षिप्य विप्रानाचामयेत्ततः ॥३९१॥
आचान्तः पूजयेत्पश्चात्स्वशक्त्या दक्षिणां तथा ।
एवं नारायणबलिं यः कुर्याद्वैष्णवोत्तमः ॥३९२॥
पितरश्च समायान्ति तं विष्णोः परमम्पदम् ।
प्रायश्चित्तमिदंगुह्यं पापेषु च महत्स्वपि ॥३९३॥
मरणेषु च (?) ग्रायेषु कुर्यादेवं विधानतः ।
चाण्डालादुदकात्सर्वाद्वैद्युताद्ब्राह्मणादपि ॥३९४॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ।
उदकम्पिण्डदानं च प्रेतेभ्योऽधः प्रदीयते ॥३९४॥
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ।
एतेषां विद्धि दूर्वेण( पू ) मृतानांभूतघातिनाम् ॥३९५॥

एवं नारायणबलिं कृत्वा संस्कारमाचरेत् ।
पित्रादयो मृतायस्य भवेयुर्यद्यवैष्णवाः ॥३९६॥
इष्टिं च वैष्णवीकुर्यात्तेपाम्पापविशुद्धये ।
यः कुर्याद्वैष्णवीमिष्टिम्विधिना वैष्णवोत्तमः ॥३९७॥
वैष्णवत्वं प्रयात्यत्र (थ) कुलमेकोत्तरं शतम् ।
एकादश्यां शुक्लपक्षे समुपोष्य द्विजोत्तमः ॥३९८॥
धात्री चूर्णेन लिप्ताङ्गे नद्याधाणां(?) शुभैर्जलैः ।
नित्यमुक्तं समेनश्च देवेशन्तर्पयेद्धरिम् ॥३९९॥
गृहं गत्वा विधानेन पूजयेद्विष्णुमच्युतम् ।
गन्धपुष्पैर्धूपदीपैर्नैवेद्यैर्विविधैरपि ॥४००॥
अष्टोत्तरसहस्रन्तु मालतीकुसुमानि च ।
आदाय तन्मंत्ररत्नेन एकैकम्पूजयेत्क्रमात् ॥४०१॥
अभावे जातिपुष्पाणि कोमलैस्तुलसीदलैः ।
पद्मैर्वाशत पत्रैर्वा मन्त्रेणैव प्रपूजयेत् ॥४०२॥
जपेच्चदशसाहस्रं मन्त्ररत्नं समाहितः ।
रात्रौ जागरणं कुर्यात्पूजयेन्मधुसूदनम् ॥४०३॥
सति प्रभाते द्वादश्यां स्नात्वा नद्यां यथाविधि ।
एकैकमञ्जलिन्दद्यान्नित्यभक्तश्च वैष्णवान् ॥४०४॥
गृहं गत्वा हरेः पूजां प्रकुर्वीत यथोक्तवत् ।
सुहृद्यैर्विविधैर्भक्ष्यैर्नैवेद्यं विनिवेदयेत् ॥४०५॥
ततोऽग्निस्थापनं कृत्वा होमं कुर्याद्यथोक्तवत् ।
इध्माधानादिपूर्वेणजुहुयाद्वै समाहितः ॥४०६॥

तिलैश्च व्रीहिभिः शुद्धैः समिद्भिः पिप्पलोद्भवैः ।
तथैवाज्येन चरुणा - जुहुयात्कमलैरपि ॥४०७॥
प्रत्येकमष्टसाहस्रं होतव्यं तु द्वयेन वै ।
पश्चाद्वैष्णव सूक्तं तु होतव्यं पायसेन तु ॥४०८॥
आज्येनैवतुहोतव्यं (तथाहित) द्वयेनवै ।
पश्चात्तुवैष्णवःपश्चादष्टोत्तरशतत्रम ॥४०९॥
वैष्णव्याचैव गायत्र्या तथा मन्त्रद्वयेन च ।
नामभिः केशवाद्यैश्च तथा संकर्षणादिभिः ॥४१०॥
ततः स्विष्टकृतादीनि होमशेषं समाचरेत ।
सुपुष्पाणि ततोदद्याद्देवाय सुरभीणि वै ॥४११॥
प्रत्यृचं वैष्णवैः सूक्तै नामभिः केशवादिभिः ।
ततो विप्रान्समाहूय गन्धमाल्यादि भूषणैः ॥४१२॥
पूजयेत्पूर्वतया (वद्दे वं) केशवाद्यैश्चनामभिः ।
भोजयित्वा ततो विप्रान्दक्षिणाभिः प्रतोषयेत ॥४१३॥
एवमिष्टिम्प्रकुर्वीत वैष्णवीवैष्णवोत्तमः ।
पितुः पूर्वोक्तविधिना संस्कारं सम्यगाचरेत ॥४१४॥
वैष्णवेष्टिम्विधानेन कृत्वा वै द्विजसत्तमः ।
कुलमेकोत्तरशतम्पुनात्येव न संशयः ॥४१५॥
अकृत्वा वैष्णवीमिष्टिं पैतृमेधिककर्मणा ।
अवैष्णवान्यः संस्कुर्यात्सनरो रौरवम्व्रजेत ॥४१६॥
अवैष्णवान पितृन्पश्चात्कुर्यात्संस्कारकर्मणि ।
अकृत्वा वैष्णवीमिष्टिं रौरवं नरकं व्रजेत ॥४१७॥

तस्मादिष्टिं विधानेन कृत्वा वै वैष्णवो द्विजः ।
अवैष्णवानां कुर्वीत सर्वमप्यौर्ध्वदैहिकम् ॥४१८॥
एकस्मिन्दिवसे यत्र कर्तुमिष्टि न शक्यते ।
द्वाभ्यां तु चतुर्भिर्वा दिवसैश्च समापयेत् ॥४१९॥
तावन्न संग्रहेदग्निं यावदिष्टिः समाप्यते ।
एकादश्यां द्वादश्यां वा वैष्णवर्क्षे तथैव च ॥४२०॥
अमायां मन्दवारे वा एकादश्यां शुभेदिने ।
यस्मिन्कस्मिन्प्रकुर्वीत वैष्णवीमिष्टिमुत्तमाम् ॥४२१॥
यावत्समाप्यतेयज्ञस्तावद्वै दीक्षितो भवेत् ।
अधःशायी ब्रह्मचारी तथैव नियताशनः ॥४२२॥
सर्वत्रारम्भदिवसे उपवासो विधीयते ।
अलभ्यं यत्र यद्द्रव्यं तत्राज्यं जुहुयाद्बुधः ॥४२३॥
एवमिष्टिम्कुर्वीत वैष्णवी वैष्णवोत्तमः ।
क्रियते वैष्णवीष्टिस्तु यस्मिन्देशे द्विजोत्तमः ॥४२४॥
स देशो वैष्णवः प्रोक्तः सर्वबन्धविमोचितः ।
वैष्णवैः क्रियते यस्मिन्वैष्णवीष्टिर्द्विजोत्तमैः ॥४२५॥
तत्कुलं वैष्णवैः तस्य पावयति (?) नात्र संशयः ।
तस्मात्तु वैष्णवीमिष्टिं कुर्याद्वै वैष्णवोत्तमः ॥४२६॥
कुलस्य पावनार्थाय (थैच) देशस्याप्यभिवृद्धये ।
यद्देशे इज्यते सम्यग्वैष्णवी पापनाशिनी ॥४२७॥
दुर्भिक्षं पीडा नास्त्यत्र नास्ति रोगंद्विजं भयम् ।
यद्देशे इज्यते सम्यक् स्तूयते वैष्णवी शुभा ॥४२८॥

तेन तुष्टो भवेद्देवो हरिर्नारायणः सदा ।
इष्ट्वा च वैष्णवं यज्ञं कुलमेकोत्तरं शतम् ।
उद्धृत्य परमंस्थानं प्रयात्येव न संशयः ॥४२९॥

वशिष्ठ उवाच ।

अशौचानां विधिम्वक्ष्ये मर्वेपां मुनिसत्तम ? ।
त्रिरात्रं दशरात्रं च शावमाशौचमुच्यते ॥४३०॥
दशाहे समतिक्रान्ते त्रिरात्रंशावसूतकम् ।
तथैवानुपनीतेपुप्रेतेष्टाशौचमुच्यते ॥४३१॥
असंस्कृतासु (?) कन्यायामुह्यहमाशौचमुच्यते ।
ऊनद्विवार्षिकप्रेतं भूमौ च (?) निखनतुदुदत्र ॥४३२॥
अत ऊर्ध्वन्तु संस्कारो वन्हिना लौकिकेन वै ।
तूष्णीमेव च संस्कारं तूष्णीं दद्यात्तिलोदकान ॥४३३॥
केशवादीन्समुद्दिश्य ब्राह्मणान्भोजयेत्तदा ।
एकोद्दिष्टविधानेन श्राद्धं तद्धि विसर्जयेत् ॥४३४॥
एतत्तुल्यं तु सर्वेपामतिक्रान्तं तथैव च ।
अतिक्रान्तं समस्तं च त्रिरात्रेण समापयेत् ॥४३५॥
अतिक्रान्तं तु कर्तव्यो मातापित्रोर्द्विजन्मनाम् ।
उदकं पिण्डदानं च दशाहं सूतकम्भवेत् ॥४३६॥
अलाभे तस्य देहे तु तदास्थीन्येव दाहयेत् ।
अस्थ्यभावे तु संस्कुर्यात्पालाशसमिधैस्तनुम् ॥४३७॥
दाहयित्वा विधानेन पूर्ववत्सर्वमाचरेत् ।
दुहितुश्च श्वसुश्चैव स्वगृहे मरणं यदि ॥४३८॥

त्रिरात्रमाशुद्धिः प्रोक्ता पितरत्रैत्वहस्मृतम (?) ।
दशाहाद्वादशाहाच्चाशौचं मपिण्डानांमर्मम्मृतम ॥४३९॥
पादमेकोवककनानुपत्रा(?) शौचंविधीयते ।
गुरोम्तु शिष्यमम्बन्धादेहाहः मृतकी भवेन(?) ॥४४०॥
विकर्मणां च मर्वेषां न शौचं मृत सूतकम ।
आचार्य च गुरु शिष्य (?) निर्हत्यापि व्रीनं ॥४४१॥
वानप्रस्थब्रह्मचारीयतीनां वै न मृतकम ।
अन्तराजन्ममरणे शेषाभि होमे विशुद्धयति ॥४४२॥
मातर्यग्रे प्रमीतायां अशुद्धौ म्रियते पिता ।
पितुः शेषेणशुद्धिम्यान्मातुः कुर्यात्तुपक्षिणाम (?) ॥४४३॥
शावशौचे समुत्पन्ने मृत्याशौचम्भवेद्यदि ।
शावेनशुद्धयते मूतिर्नसूतिः शावशोधनी ॥४४४॥
अन्तर्दशाहे जननात्पश्चाच्चेन्मरणं भवेन ।
प्रेतमुद्दिश्यकर्त्तव्याः पिण्डादानादिकाः क्रियाः ॥४४५॥
शावशौचम्यमध्ये तु मृत्या शौचम्भवेद्यदि ।
पूर्वशेषेण शुद्धिःम्यात्मपिण्डानां न मंशयः ॥४४६॥
पित्रोम्तु दशरात्रं म्यान्मूतकंतुविधीयते ।
अम्पृशत्वं भवेन्मातुरंगम्पर्शनसम्भवान (?) ॥४४७॥
शावशौचम्यमध्ये तु मरणं च पुनर्भवेन ।
पूर्वम्यकुर्याच्छ्राद्धादि पश्चाद्द्वादशवासरान् ॥४४८॥
दशमेऽहनिसम्प्राप्ते मरणे जनने तथा ।
नाजर्याद्विदशश्राद्धं पिंडदानानिनिर्वपेन ॥४४९॥

पितुर्दशाहमध्ये तु मातुः स्यात्प्रसवोयदि ।
पिण्डोदकक्रियां कुर्याच्छ्राद्धं वाचंविवर्जयेत ॥४५०॥
पित्रोर्दशाहमध्ये तु भार्यायाः प्रसवो यदि ।
इतरेण च पुत्रेण कर्तव्याः स्वोदकक्रियाः ॥४५१॥
जननस्य च मध्ये तु जननं तु पुनर्भवेत ।
पूर्वस्य नाम कर्मादि कर्त्तव्यन्तुद्विजन्मनाम ॥४५२॥
गर्भस्रावे मासतुल्यानि सा शुद्धिस्तत्रकारणम ।
स्रावे मातु स्त्रिरात्रं स्यात्सपिण्डाशौचनंस्मृतम ॥४५३॥
याते (?) यानुर्यथामासं पित्रादिनादिनत्रयम ।
आचतुर्थाद्भवेच्छ्रावः यातः पञ्चमषष्ठयोः ॥४५४॥
ऊर्ध्वं दशम एवं स्यात्सर्वेषां सृतकम्भवेत ।
योषिते कालशेष स्यात्सर्वेषा तु त्र्यहंभवेत ॥४५५॥
यावद्ग्रामस्यमध्ये तु शवस्तिष्ठत्यसंस्कृतः ।
ग्रामस्यतावदाशौचं जनने न तु दुष्यति ॥४५६॥
असपिण्डं द्विजं प्रेतं विप्रोनिवृत्य बन्धुवत ।
विशुद्ध्यति त्रिरात्रेण तप्तकृच्छ्रेण वा तथा ॥४५७॥
विशिष्टं ज्ञान सम्पन्नं दहित्वा सौहृदंविना ।
दहित्वा न(च) लभेद्विप्रो महद्यज्ञ फलाधिकम ॥४५८॥
राजानं वा तथा वैश्यं शूद्रं वा ब्राह्मणाधमः ।
तत्रा (?) शौचकालेन तप्तकृच्छ्रेण शुद्ध्यति ॥४५९॥
राजकर्मणि राज्ञा च ऋत्विजां यज्ञकर्मणि ।
दीक्षितानां तापसांच यतीनां ब्रह्मचारिणाम् ॥४६०॥

तपश्चरणयुक्ताना मद्य. शौचं विधीयते।
विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके ॥४६१॥
परैरन्नम्प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः।
यज्ञान्ते तेषु विप्रं पुह्यंतरा मृतसूतके ॥४६२॥
अन्यगेहे तथा चान्तः सर्वं (नु) शुचय.स्मृताः।
मृताचेत्सूतिका नारी तथैवापि रजस्वला ॥४६३॥
गोमूत्रेण स्नापयित्वा वस्त्रेणान्येन वेष्टयेत।
कुम्भेन जलमादाय पंचत्वक्पल्लवैर्युतम् ॥४६४॥
पुण्याद्भिरभिमन्त्र्याथ तेःनैव स्नापयेद्द्विजः।
अन्यवस्त्रेण सम्वेष्ट्य दाहं कुर्वीत पूर्ववत ॥४६५॥
सूतके मृतके चैव सन्ध्या कर्म न सन्त्यजेत।
व्योम्नि च हृदये वापि मनसा संस्मरेद्धरिम ॥४६६॥
अन्येन कारयेद्धोमं पंचयज्ञान्तथैव च।
अजागावोमहिष्याद्याः ब्राह्मण्याद्याः प्रसूतिकाः ॥४६७॥
दशरात्रेण शुद्धिः स्यादितरन्तु विसर्जयेत।
शुद्धाभर्तु(? श्चतुर्थेऽन्हि स्नानेन स्त्री रजस्वला ॥४६८॥
दैव (अन्य) कर्मणि (नारी च)तृतीयेऽहनि शुद्ध्यति।
तथा विंशति रात्रेण सूतिका यज्ञकर्मणि ॥४६९॥
मृते भर्तरि यानारी सूतिका वा रजस्वला।
चितप्रसंग्रहेत्तावत्तस्यानंग (?) समोन्यये ॥४७०॥
अर्ध रात्रादर्धपूर्वा सूतके मृतके तथा।
ऊर्ध्वंचेत्तत्पराग्राह्या तथा रजसि सूतके ॥४७१॥

चण्डालस्पर्शनेमद्यः सवासा जलमाविशेत् ।
प्राणायामत्रयं कृत्वात्रिः पठेदघमर्षणम् ॥४७२॥
सावित्रन्तु जपेत्वत्र शतमष्टोत्तरं द्विजः ।
पञ्चगव्यन्तु सम्प्राश्य तु (ततः) स्नात्वा विशुद्धति ॥४७३॥
चण्डालपतितं चापि तथा युगमान्तरंत्यजेत् ।
तदर्वाकृत्सन्निकर्षात्तु सवासा जलमाविशेत् ॥४७४॥
अत्यन्तविषमे देशे युगद्वयमुदाहृतम ।
रजस्वलां सूतिकां च श्वानं काकंच गर्दभम ॥४७५॥
कुक्कुटं विड्वराहं च पूयपापण्डिनं तथा ।
बहिर्देवलकं स्पृष्ट्वा सवासा जलमाविशेत् ॥४७६॥
मद्यमांसे च विण्मूत्र चितिं तत्काष्ठमेव च ।
मानुषास्थियाश्रुतं (?) यत्किनवं प्रतिलोमजम ॥४७७॥
जलकेनं नीलवस्त्र करकाश्म (?) तथैव च ।
उच्छिष्टं मानुषं क्षीरं (ष्ठी) धीवनं शुक्लमेव च ॥४७८॥
छत्राकं च कलञ्जञ्च पलाण्डुं गृञ्जनन्तथा ।
तेषां स्पर्शनं कृत्वा यद्यत्स्पृशति मानवः ॥४७९॥
तस्यापि तत्स्पृष्टितश्च (?) स्नानमाहुर्मनीषिणः ।
उर्ध्वन्त्वाचमनं प्रोक्तं वारुणीभिश्च भाजनम् ॥४८०॥
अत ऊर्ध्वन्तु सावित्र्या जपेनैव विशुद्ध्यति ।
भोजने कर्म मध्ये वा(?)प्योत्वाखु स्पर्शं सम्भवेत् ॥४८२॥
स्नानेनैव विशुद्धिः स्यादन्यत्राचमनं चरेत् ।
उच्छिष्टेनापि चान्योन्यं स्पर्शनन्तु भवेद्यदि ॥४८३॥

सचैलन्तूभयोः स्नानं चरेत्(?) एकस्यैवेतरत्रतु ।
नाभेरधः शुनोह्येव स्पर्शनन्तु भवेद्यदि ॥४८४॥
अध (स्तान्) प्रक्षालनं प्रोक्त मूर्ध्वं स्नान मुदाहृतम् ।
पाखण्डिनं च पतितमुन्मत्तं शठहारिणम् ॥४८५॥
अवैष्णवं द्विजं स्पृष्ट्वा सवासा जलमाविशेत् ।
मैथुने प्रेतधूमे च वान्तेवाक्षरकर्मणि ॥४८६॥
उद्दिष्टं न तथा शुद्धयर्थे त्सद्यः स्नानं समाचरेत् ।
रजस्वलायाः यदि चेत्संसर्गे (?)स्वरवारय ॥४८७॥
तावत्तिष्ठेन्निराहारः स्नात्वा गव्यं पिबेत्तु सा ।
अन्योन्य स्पर्शने तासां ब्रह्म कूर्चं विशोधने ॥४८८॥
रजस्वलां सूतिकां वै यो मोहान्मैथुनञ्चरेत् ।
त्रिरात्रोपोषितो भूत्वा पंचगव्येन शुद्धयति ॥४८९॥
कर्मारिं तक्षकं व्याधं नापितं रजकन्तथा ।
अन्यान्ग्रामान्त्यजान्स्पृष्ट्वा सवासा जलमाविशेत् ॥४९०॥
सौवर्णरौप्य वासोऽश्मवारिजानां तथैव च ।
रज्जुशाकफलादीनां तथा विदलचर्मणाम् ॥४९१॥
यज्ञियानां च पात्राणां क्षालनाच्छुद्धिरिष्यते ।
तथैव तृणकाष्ठानां क्षालनाच्छुद्धिरिष्यते ॥४९२॥
भस्मना कांस्यलौहाद्याः ताम्रमाम्लेन शुद्धयति ।
दन्तदारुशिलाशृङ्गमयानां क्षालनंस्मृतम् ॥४९३॥
तथैव फलजातीनां गोपाले (?) घर्षणात् शुचिः ।
आविकं कौशिकं क्षौमं तथैव(?)कुत्तयादिकम् ॥४९४॥

श्रीफलारिष्टकयुतं गोमूत्रेणैव मार्जयेत् ।
आतपेनाग्निवपिशानाशोयित्वा(?) विशुद्ध्यति ॥४६५॥
भानात्सेकात शोपाद्वर्षात्तथैव च (?) ।
हाभौत्खाताच्च दहनात्तथार्कगोकर्मणाच्चिरात (?)॥४६६॥
नदीवेगेनशुद्धिःस्यात तटाकं जलपूरणात ।
वापीकूपह्नदानां च खननाज्जलसर्जनात ॥४६७॥
तृणगुल्मतरूणां च मार्गाणामर्करश्मिना ।
वायुना वापि शुद्धिः स्यात्सस्यानिहं वसंस्थितः (?) ॥४६८॥
रथ्याकर्द्दमतोयानि पक्वं ष्टकचितान्यपि ।
कार्पासतूलतन्तूनां शोषणाच्छुद्धिरिष्यते ॥४६९॥
सद्यः शुद्धिः पशूनां च तथैव मृगपक्षिणाम ।
बहूदकं तु शुद्धं स्यान्मलमूत्रावसेचनात ॥५०१॥
कारुहस्तः शुचिः पण्यं भैक्ष्यंयोषिन्मुखन्तथा ।
सौवर्णं राजतम्वापि चण्डालांगेपु च संस्थितः ॥५०२॥
बन्हिनाप्रदहित्वैव पुनराकारमाचरेत ।
सूतिकाद्यंग(?) संस्थिता क्षालनाच्छुद्धि रिष्यते ॥५०३॥
सौवर्णानि च पात्राणि तथा रौप्यमयानि च ।
चण्डालाद्यैस्तुभुक्तानां पुनराकारमाचरेत् ॥५०४॥
सूतिकाद्यैस्तुभुक्तानि खनित्वाग्नौ प्रतापयेत ।
शूद्राद्यैरपिभुक्तानां तापनं क्षालनन्तथा ॥५०५॥
शुनकोपहते पात्रे हैमे वा रजते तथा ।
गोमूत्र क्षालनम्प्रोक्तमितरत्र तु वारिणा ॥५०६॥

द्रव्यमात्रन्तु सर्वत्र क्षालनाच्छुद्धमुच्यते ।
मणिप्रवालमुक्तादि चण्डालाद्यैर्धृतम्भवेन ॥५०७॥
पञ्चरात्रन्तु द्रव्येषु निक्षिप्य क्षालनाच्छुचिः ।
सर्वत्र स्पर्शमात्रेण क्षालनं गव्यवारिभिः ॥५०८॥
शुक्तिशंखौ तु चण्डालैस्त्रिकालवृतंत्यजेन (?) ।
स्पर्शमात्रेणैतेषाम तत्क्षणात्क्षालनंम्मृतम ॥५०९॥
व्यावहारिक सूर्याणां सलेपानां विवर्जनम (?) ।
क्षालनं प्रोक्तकुशूलानां तथैव च (?) ॥५१०॥
भाजनानान्तु शैलानां पुराणानां विमर्जनम ।
इतरेषां तु सर्वत्र तत्क्षणात्क्षालनंम्मृतम ॥५११॥
कांस्यताम्रादिलोहानां भाजनानां कथम्भवेत ।
चण्डालैर्भुक्तमात्रे तु परित्यागो विधीयते ॥५१२॥
स्पर्शमात्रेषु चण्डालैः मत्पराचं (तत्क्षणाच्च) भुविक्षिपेन ।
दाहयित्वा ततो वन्हौ प्रोक्षयित्वा विशोधयेत् ॥५१३॥
स्पर्शमात्रेषु खननं त्र्यया (?) ।
शोधयित्वा जलैः क्ष्याल्यैः गोपालैर्घर्षयेत्ततः(?) ॥५१४॥
(?)रजकाक्तै श्वश्रुनकेरयमेव विधिस्मृतः ।
क्षत्रविट् शूद्रजातीनामुच्छिष्टस्पर्शनेमति ॥५१५॥
वि ( त्रि ) मासं तु विनिक्षिप्य पुनराकारमाचरेत् ।
स्पर्शमात्रे तु शुद्धं स्याद्वारिप्रक्षालनंस्मृतम् (?) ॥५१६॥
चिरकालोपभुक्तानां कांस्यानां त्याजयेद्बहिः ।
कांस्यानामायसानां च तत्क्षणत्क्षालनाच्छुचिः ॥५१७॥

स्पृष्टमन्त्यादिजातीनां (भाण्डानांच) यदाभवेत् (?) ।
भुक्त्वा (क्त्वा) (?)मंतद्विजातीयभाजनेषु प्रमादतः ॥५१७॥
त्र्यहं द्व्यहं च षण्मासं खनित्वाऽयः प्रदाहयेत ।
तत्क्षणात्क्षालनाद्यैस्तु गोबाह्यै घर्षणादिभिः ॥५१८॥
यत्र चैव तु लौहानामुपघातं भवेद्यदि ।
तत्र तत्रापि कुर्वीत खननं दहनादिकम् ॥५१९॥
अल्पानां चैव धान्यानांक्षालनन्तुविधीयते ।
बहूनां मार्जनं प्रोक्तं श्वस्वपाकादिदूषितैः ॥५२०॥
ग्रामान्त्यजैश्चचण्डालैः स्पष्ट(पुष्प)माल्यादिवर्जयेत ।
तथैवफलशाकादिगुणतिल(?) ( तै ) मधूनि च ॥५२१॥
केशकीटादिदुष्टानां रसानां वस्त्रशोधनम ।
अल्पन्तु वर्णत्याज्यंस्यात श्वचण्डालादिदूषितम ॥५२२॥
बहूनांम्मार्जनं प्रोक्तमातपेनैव शोषणम ।
चण्डालैरुपभुक्तन्तु तदा कांस्यं परित्यजेत ॥५२३॥
तैरेव स्पर्शमात्रे तु गवां सङ्क्रमणाच्छुचिः ।
वाप्यां(प्यां)कूपजलैतद्वत्परित्यागाद्विशुद्ध्यति ॥५२४॥
शन्ति मुठहास्सं तलंब्रहिर्विरेचयेत (?) ।
रजकैश्चर्मकाराद्यैश्चिरकालोपसेवितम् ॥५२५॥
कूप (अल्पे) परित्यजेद्ग्रामानितरत्र विशोधनम् ।
मासमात्रोपभुक्तन्तुयुटस्माह मुद्धरेत (?) ॥५२६॥
पक्षमात्रे ''' तदर्धन्तु तदर्धंतु तदर्धकम ।
दशकुम्भमितं तोयं स्पर्शमात्रेण समुद्धरेत ॥५२७॥

अल्पोदकानां कूपानां खननं तु विशोधनम ।
अन्त्यजैसेचि(वि)तं नद्याः स्नानं तदूरतस्त्यजेन ॥५२८॥
स्पृष्टमात्रं त्यजेत्तीर्थमन्त्यजरूपसेवितम ।
वर्जयेद्वावकं (यक) स्थानं दशकार्मुक मात्रतः ॥५२९॥
वापीतटाकादावल्पं स्पृष्टं यदि भवेत्त(ज्ज)लम ।
विण्मूत्रं क्षालने कुर्यान्नाचमेत जलं क्वचिन ॥५३०॥
चण्डालाद्यै रुपहरेतं विण्मूत्रा दौश्च मोमवंत (?) ।
गोचितृप्तिमात्रकं (?) शुद्धं प्रकृतिस्थं महीगतम ॥५३१॥
भस्मात्सर्पपाद्यैश्च चर्मणा शुद्धिरिष्यते ।
भस्मैकारुविनिक्षिप्य मृत्तिकां च त्रिभिर्दिनैः ॥५३२॥
पंचन्यकं पंचरात्रं विफलादि(?) त्रिभिर्दिनैः ।
क्षणं च हस्तं प्रक्षाल्य चर्मणां शुद्धिमाचरेन ॥५३३॥
नवानां चर्मणामेव शुद्धिरुक्ता मनीपिभिः ।
चर्मणां व्यवहार्याणा मुच्छिष्टादिप्रदूपिते ॥५३४॥
परित्यागो भवेत्तत्र नैव शुद्धि रुदाहृता ।
श्वपाकरजकोदक्या प्रविष्टं यदि चेद्गृहे ॥५३५॥
गृहं विलेपयेत्सर्वं गोमयेन च वारिणा ।
कुशोदकन्तु सम्प्रोक्ष्य मृद्भाण्डानां विशोधनम ॥५३६॥
चण्डाल श्वपच महीं ( दाहयित्वा ततःपरम् )
गोमयेनानुलिप्याथ(?) स्वस्ति वाचन माचरेत ॥५३७॥
यस्मिन्गृहेतु चण्डालश्चिरकालं भवेद्यदि ।
गृहदाहन्तु कुर्वीत पुनराकार माचरेन ॥५३८॥

अर्वाक्तु दशरात्रात्तु दाहयेन्तगृहं द्विजः ।
पूर्ववच्छोधनं कुर्याच्चण्डालोयदि संविशेत् ॥५३९॥
एक(रात्रं) एव द्विरात्रं वा चण्डालो यदिकामतः ।
निवसेद्यस्य गेहेतु गृहदाहं समाचरेत ॥५४०॥
चण्डालग्राम भूमिन्तु दाहयित्वा ततः परम् ।
गोभिः संवेशयेत्सम्यक्वर्षमात्रं निरञ्जनम ॥५४१॥
वालाहतं तथा वर्षं पश्चाच्छुद्धिवाप्नुयात ॥५४२॥

इति वशिष्ठस्मृतौ आशौच विधिवर्णनं नाम
षष्ठोऽध्यायः ॥

---

# अथ सप्तमोऽध्यायः

## विष्णुस्थापनविधिवर्णनम

ऋषय ऊचुः

भवतः श्रोतुमिच्छामो विष्णु संस्थापन क्रियाम् ।
य(क)स्मिन्काले च कर्त्तव्यं विधिना केन मत्तम ?॥१॥

श्रीवशिष्ठ उवाच

अथ संस्थापन विधिं वक्ष्यामि मुनिसत्तमाः ।
यत्कर्त्तव्या द्विजैस्तत्र तच्छृणुध्वमशेषतः ॥ २ ॥
शालग्रामस्य शिलया कर्तव्यो विग्रहोहरेः ।
पुण्यतीर्थे शुभेक्षेत्रे पुण्यपर्वे (वंत) तमस्तके ॥ ३ ॥

स्निग्धं रम्यं गृहीत्वाऽश्मा कारयेच्छुभविग्रहम् ।
सर्वावयवसम्पन्नं सर्वलक्षणराजितम् ॥ ४ ॥
श्री भूमि सहितं देवं कारयेच्छुभविग्रहम् ।
एकादश्यां शुक्लपक्षे द्वादश्यां श्रवणेऽपिवा ॥ ५ ॥
रोहिण्यां मंदवारे वा तथैव च दिने शुभे ।
कार्त्तिके मार्गशीर्षे वा नवमे(माघे) वा चोत्तरायणे ॥६॥
शुभेऽन्हि शुभलग्ने वा शुभग्रहनिरीक्षणे ।
प्रतिष्ठां कारयेद्विष्णोः यथोक्तविधिना द्विजः ॥ ७ ॥
ग्रहणे शून्यमासे च मूढेत्(?)शमजीवयोः ।
दुर्लग्ने दुर्मुहूर्त्ते च भूकम्पोल्कानिपातने ॥ ८ ॥
अशोवाध (?) न कुर्वीत प्रतिष्ठां कर्म सत्तमाः ।
आदौ शुभेऽन्हि कर्त्तव्यं मत्कुरार्पण(अ)कर्मंच(?) ॥ ९ ॥
ऋृत्विजो वरयेत्तत्र वैष्णवान ब्राह्मणाञ्छुभान ।
वेदवेदांगतत्वज्ञान सर्वशास्त्रविशारदान ॥१०॥
जितेन्द्रियान शुभाचारान्सत्वस्थान्सर्वलक्षणान् ।
मन्त्रतत्त्वार्थ विदुषो ब्राह्मणान्वरयेच्छुभान् ॥११॥
तादृग्गुणसमायुक्तमाचार्यं वरयेत्ततः ।
मन्त्रज्ञं मंत्रभक्तं च सर्वाचारं गुणान्वितम ॥१२॥
श्रुतिस्मृति पुराणार्थं विदुषं दम्भवर्ज्जितम ।
अर्थपञ्चकतत्वज्ञमग्निहोत्रयुतं शुचिम ॥१३॥
द्वयं निष्ठं द्वयार्थज्ञं प्रतिष्ठाकर्मनिष्ठितम ।
महाभागवतं चैवमाचार्यं वरयेत्सुधीः ॥१४॥

तापादि पञ्च संस्कारा महाभागवताः स्मृताः ।
चक्रादिहेतिभिस्तप्तं ताप इत्यभिधीयते ॥१५॥
संस्कारः प्रथमः प्रोक्तो द्वितीयः पुण्ड्धारणम् ।
त्रयोदशे द्वादशे वा पुण्ड्धारणमुच्यते ॥१६॥
ललाटादि शुभाङ्गेषु सच्छिद्राणि प्रमाणतः ।
नाममर्ः केपृऋृषि (?) छन्दोऽधिदैवतं ॥१७॥
सार्थज्ञानं सुसन्यासं मन्त्राध्ययनमुच्यते ।
पञ्चमस्तु हरेः पूजां पंचरात्रोक्तमार्गतः ॥१८॥
तदीयार्चनपर्यन्तं हरेराराधनं स्मृतम् ।
इत्येवमादि संस्कारो महाभागतः (स्मृतः) ॥१९॥
अन्येत्ववैष्णवाः प्रोक्ताहोतारस्ताया (?) दिभिर्द्विजाः ।
तथाह्यवैष्णवाज्ञेयाः प्राकृताः पापकारिणः ॥२०॥
वेदशास्त्रेषु (ष्व) निपुणास्तेवै निरयगामिनः ।
तस्मान्नावैष्णवान्विप्रान्नकर्मसु नियोजयेत ॥२१॥
महाभागवतं विप्रमाचार्यं वरयेत्सुधीः ।
महाभागवता एव नियोज्या ऋत्विजस्तथा ॥२२॥
शङ्खचक्रोदूर्ध्व पुण्ड्क्षिचित्रैः(?) श्चसहितैर्द्विजैः ।
तत्रयत्कर्म कुर्वीत तन्महाविधिवद्भवेत ॥२३॥
चक्रादिचिन्हैर्हीनेन स्थापितैर्यत्रकर्मणि ।
न सान्निध्यं हरिर्याति क्रियाकोटिशैतरपि ॥२४॥
अवैष्णवस्थापितानां प्रतिमानां च वन्दनां ।
यः करोति स मूढात्मा रौरवं नरकं व्रजेत् ॥२५॥

तस्मात्तु वैष्णवास्त्वेव नियोज्या यज्ञकर्मसु ।
शास्त्र युक्तेन विधिना यः कुर्यात्स्थापनंहरेः ॥२६॥
पुण्याहवाचनं कुर्याद्वैष्णवैर्वेदपारगैः ।
देवस्य प्रतिमां पश्चात्स्नापयेन्मन्त्रवारिभिः ॥२७॥
पञ्चामृतैः पञ्चगव्यैः स्नापयेत्तदनन्तरम ।
आनीय चतुरस्नेत्र (?) कलशात्मादयेच्छुभान ॥२८॥
पूरयित्वा शुभजलैः पंचरत्नावमिश्रितैः ।
कुशादूर्वाक्षतजलं चंदनं गौरसर्षपान । २६॥
हिरण्यं तुलसी तत्र कलशेषु विनिक्षिपेत ।
तेषु मन्दर्शनीमुद्रां दर्शयेन्मंत्रसंयुतः ॥३०॥
मन्त्रेणवाभिमन्त्र्याथ प्रत्येकं शतसंख्यया ।
चतुर्भिर्वैष्णवैः सूक्तैः कलशैरभिषेचयेत ॥३२॥
अतोऽन्यं कलशं गृह्य पवित्रोदकपूरितम ।
(मां) मंगल (ल्य) द्रव्य संयुक्तं तण्डुलोपरि निक्षिपेन ॥३३
मन्त्ररत्नेन वै कुर्यादष्टोत्तरशतं द्विजः ।
अभिषेकं प्रकुर्वीत शंखेन विमलेन तु ॥३४॥
शुभ्रवस्त्रैश्च सम्वेष्ट्य गीतवादित्रशोभनैः ।
अधिवासं प्रकुर्वीत प्रोषिते निर्मले जले ॥३५॥
अन्यासे(?) सैकते रम्ये दीर्घिकां कारयेच्छुभाम् ।
प्राकारममलं कृत्वाचतुर्द्वारसमन्वितम ॥३६॥
चतुर्भिस्तोरणैर्युक्तं पताकाध्वजशोभितम ।
तस्मिन्संवेशयेद्देवं सुवासितजले शुभे ॥३७॥

जपेदूर्ध्ववतां (?) सूक्तम्पवमान्यस्तथैव च ।
अर्चयेद्विधिवत्तस्मिन्गंधपुष्पादिभिस्ततः ॥३८॥
चन्द्रादीनर्चयेत्पश्चात्तोरणेषु यथाक्रमम् ।
कुमुदादीन्स्तथा दिक्षु पूजयेत्तदनन्तरम् ॥३९॥
शक्तयो विमलाद्याश्च पूजनीयाः यथार्ह्र(विधि) ।
अनन्तविहगेशादीनित्यान्मुक्ता(?) समर्चयेत् ॥४०॥
प्राकारे शंखचक्रादिहेतीनावाहयेत्ततः ।
शरावान्सस्यसम्पूर्णानष्टदिक्षु च विन्यसेत् ॥४१॥
तेषु दिक्पतयः पूज्याः सर्वेदेवाः समन्ततः ।
जपेच्च चतुरोवेदान् चतुर्द्वारि च वैष्णवाः ॥४२॥
तथैव वैष्णवान्सूक्तानर्य्यन्तत्र (?) विशेषतः ।
मण्डलद्वयं द्वादशार्णं षड्वर्न्हिश्च जपेत्सदा ॥४३॥
इतिहास पुराणाद्यैर्गीतवादित्रनर्त्तनैः ।
तत्र जागरणं कुर्यात्पुण्यस्तोत्रैर्मनोहरैः ॥४४॥
दीपकाभिरनेकाभिः कुर्य्या पुस्म्यंन्तत्र (?) सर्वं शुभम् ।
तथा रजन्यामुत्थाय (?) कुर्य्यालैपैर्मनोहरैः ॥४५॥
पात्रादुत्थाप्य देवेशं शुभेदेशे निवेशयेत् ।
उत्तिष्ठ ब्रह्मणस्पतेति जपेत्सूक्तं समाहितः ॥४६॥
पञ्चगव्यैःस्नापयित्वा तैलेनापि जपेत्ततः ।
माषमुद्गहरिद्रादिचूर्णैरुद्वर्त्तनम्भवेत् ॥४७॥
स्नापयेद्विधिवत्पश्चाद्रह्मा(?)(रक्ष्मा) शीतजलैः शुभैः ।
पश्चात्कलशमादाय पवित्रोदक पूरिते (तम्) ॥४८॥

उदुम्बरशमीबिल्वपलाशाश्वत्थपल्लवान ।
पद्मपत्रं च कौशेयं तुलसी मञ्जरीं क्षिपेत ॥४६॥
अभिमन्त्र्य जलं पश्चान्मन्त्ररत्नेन मात्रिकः ।
आचार्यः स्नापनं कुर्यात्पश्चात्तेनैव वारिणा ॥५०॥
जपन्वै वैष्णवान्सूक्तानभिषेकं समाचरेत ।
पश्चात्तुमूलमंत्रेण अष्टाविंशति संख्यया ॥५१॥
अभिषिच्य शुभैर्वस्त्रैर्वेष्टयेत्सुमनोहरैः ।
नीराजनं ततः कृत्वा पश्चादावाहनं चरेत ॥५२॥
अर्चयेयेद्गन्धपुष्पाद्यै धूपदीपनिवेदनैः ।
समन्ताच्च हरेः कृत्वा रथे रम्ये निवेशयेत ॥५३॥
तूर्यघोषैर्नृत्तगीतैश्छत्रैराभरणादिभिः ।
शानुनां (?) दिशुमेर्मन्त्रैः स्तोत्रपाठैर्मनोहरैः ॥५४॥
पुरम्प्रवेश्य देवेशं यानिवि (वी) थ्यां निवेशयेत ।
चतुर्द्वारसमायुक्तं चतुर्भिस्तोरणैर्युतम् ॥५५॥
वितानादि सुशोभाढ्यां वेदीं कुर्यान्मनोहराम् ।
पूर्ववत्सस्यसंयुक्तं शरावानधिकल्पयेत ॥५६॥
दीपि (?) स्थापरोदेषु पताकाः सुमनोहराः ।
धान्योपरि परिस्थ्याप्य व्याघ्रचर्म शुभाह्वयम ॥५७॥
तस्मिन्कौशेयवसने कुशानास्तीर्य कोमलान ।
सुरभीणि च पुष्पाणि विकीर्यासीत प्रपूजयेत ॥५८॥
देवं सुगन्धतुलसीदूर्वापुष्पाक्षतादिभिः ।
अष्टौ च पूर्णकलशान्दिक्षु सम्पूजयेत्ततः ॥५९॥

हिरण्मयं च रत्नानि पंचत्वक्यं (?) पंचह्नपात ।
गन्धपुष्पाक्षतान् दर्भान्कलशेषु विनिक्षिपेत ॥६०॥
महादिक्स्थि (?) कुंभेषु वासुदेवाय (?) स्तथा ।
विदिक्संस्थित कुंभेषु(?) नज्यानन्दपः क्रमात् ॥६१॥
पूजनीया यथोक्तं न गन्धपुष्पनिवेदनैः ।
देवस्य पुरतो मध्ये पूर्णकुम्भम्प्रपूजयेत ॥६२॥
तण्डुलोपरि संस्थाप्य पवित्रोदकपूरितम् ।
सौवर्णं दर्भरजतं मौक्तिकं तुलसीदलम् ॥६३॥
एलालवंगकंकोलं पत्रं (च) श्रीफलन्तथा ।
कुष्टं जाती फलं पुष्पं धात्रीरक्तोत्पलं तथा ॥६४॥
तिलां त्रयालदूर्वां (?) चन्दनं गुग्गुलुं तथा ।
तस्मिन्कुम्भे विनिक्षिप्य पूजयेच्च विधानतः ॥६५॥
तस्मिन्मूर्वा(?)हरिंवन्दे जलशायिनमव्ययम ।
अष्टाक्षरविधानेन जपेच्च कुसुमादिभिः ॥६६॥
चतुर्दिक्षुजपेत्सम्यक्चतुर्वेदीश्च ऋत्विजः ।
चत्वारो वैष्णवास्तत्र चतुर्मन्त्रास्तथा जपेत् (युः) ॥६७॥
व्यापकान्मंत्ररत्नंचतुर्मन्त्रा इति स्मृतः ।
पुराणं शान्तिपठनं श्रीगीतापठनन्तथा ॥६८॥
सहस्रनामपठनं कुर्यादत्र समाहितः ।
चतुर्दिक्षु तथाक्रम्यमान्यवेदिति(?) च कल्पयेत ॥६९॥
अग्निसंस्थापनं कृत्वा इध्माधानादि वेदकं ।
होमं कुर्यात्ततः पश्चात्सूक्तै र्विष्णुप्रकाशकैः ॥७०॥

पूर्वेद्युः पौरुषं सूक्तं जुहुयात्प्रत्यृचं द्विजः।
अतोदेवेति वै सूक्तो दक्षिणो तदनन्तरम ॥७१॥
प्रत्यग्विद्विष्णो(?) तृकमिति परोमात्रेतिचोत्तरे।
श्रीभूप्रकाशसूक्ताभ्याम्प्र (?) दिक्षु यथाक्रमम् ॥७२॥
चतुर्वेदाश्च होतव्या यथा शक्त्यनुसारतः।
एकैकमनुवाक्यं वा होमं कुर्यादतन्द्रितः ॥७३॥
हिरण्य दैवत्यं च (?) हरिर्दैवत्यमेव च।
नारायणानुवाकं च ब्राह्मणान्सत्यमेवच ॥७३॥
चतुर्दिक्षु च होतव्यं तत्तद्द्रव्यैर्यथोक्तवत।
पायसाज्यतिलान्व्रीहि समिद्भिश्च यथाक्रमम् ॥७४॥
प्रत्येकं सूक्तेन द्रव्यंवेतिश्च (?) सर्वशः।
मन्त्रैश्चतुर्भिर्होतव्यमाज्यदिक्षु यथाक्रमम् ॥७५॥
प्रत्येकमष्टसाहस्रं जुहुयादथ मन्त्रवित।
नामभिः केशवाद्यैश्चतथा सङ्कर्षणादिभिः ॥७६॥
तत्तद्द्रव्यैर्होतव्य (?) मित्यमुत्वान्सूमभिः।
होमं कृत्वा विधानेन रात्रौ जागरणम्भवेत् ॥७८॥
कृते चोपवसेत्सम्यक्तथा भार्याश्च(?) ऋत्विजः।
जपैर्होमैर्नृत्यगीतैः पुराणपठनादिभिः ॥७९॥
तां रात्रिं क्षपयेत्सम्यक्तथा भार्या(?) प्रपूजनैः।
तथा रजन्यांव्युष्टायां वृत्य(?)कृत्वा यथा विधि ॥८०॥
पूजां कुर्याद्विधानेन पूर्ववत्सु समाहितः।
पीठे निवेश्य (देवेशं) अभिषेकं समाचरेत् ॥८१॥

पूजितैः कलशैः पुण्यैः पावमानैश्च वैष्णवैः ।
ऋत्विजो स्नापयेद्देवं तूर्यघोषैर्मनोरमैः ॥८२॥
प्रधानकुम्भमादाय आचार्यः सुसमाहितः ।
वारिणा स्नापयेद्देवं स्वर्णेन रजतेन वा ॥८३॥
अष्टोत्तर सहस्रम्वाशतमष्टोत्तरन्तथा ।
स्नापयेन्मन्त्र रत्नेन आचार्यः प्रयतात्मवान् ॥८४॥
(धौ)धौतवस्त्रं शुभंवेष्ट्य(वेष्टयित्वा)ततोनद्यां(वे)निवेशयेत् ।
स्वर्णशलाकामादाय आचार्यो नियतेन्द्रियः ॥८५॥
नयनोन्मीलनं कुर्यान्मंत्ररत्नमनुस्मरन् ।
पौरुषेण च सूक्तेन ततः सम्मार्जनम्भवेत् ॥८६॥
वस्त्रैराभरणैर्दिव्यैरलङ्कृत्य मनोहरैः ।
नीराजनन्ततो दद्यान्यं ( ? ) व संयुतः ॥८७॥
छत्रंचचामरञ्चैव दर्पणञ्च समर्पयेत् ।
दर्शयेद् गांच कन्यांच दर्शयेदष्टमंगलां ॥८८॥
मुद्राश्चशंखचक्रादिनवधान्यास्तथैव च ।
सुवर्णं रजतं दूर्वां हरिद्रां मधुसर्पिषी ॥८९॥
अक्षताः सर्षपाश्चैव मङ्गलाः परिकीर्त्तिताः ।
शंखचक्रपताका च भेदेर्षण (?) मंगला ॥९०॥
वैनतेयं मत्स्ययुग्मं कुलं चाष्टौ प्रदर्शयेत् ।
शखं चक्रं गदां पद्मं मुशलं खड्गमेवच ॥९१॥
धनुश्च वनमाल्यश्च अष्टौमुद्राः प्रदर्शयेत् ।
यवगोधूममुद्गाश्च तिलमाषप्रियङ्गवः ॥९२॥

कुलित्थशालिशालूकाः नवधान्याः प्रकीर्तिताः ।
अथ होमम्प्रकुर्वीत पूर्ववद्वैष्णवैः शुभैः ॥६३॥
पादावुपस्पृश्य जुहुयादिदं विष्णु(?) रित्यृचा ।
मूर्धानमुपस्पृश्य जुहुया (?) दतोदेवेति वैऋचा ॥६४॥
सर्वाङ्गं समुपस्पृश्य सूक्तेन पुरुषेण वै ।
हुत्वा षोडशमन्त्रैश्च तत्र शेषं समापयेत् ॥६५॥
उदुत्यं चित्रमितिद्वाभ्यामुपस्थानजपं चरेत् ।
अथमंगलावादित्रै ( वै ) (?) र्देवमुपातनंनयेत ॥६६॥
मणिमुक्ताप्रवालादिसानुपीठे निधाय च ।
सुमुहूर्त्ते शुभेलग्ने देवं पीठे निवेशयेत् ॥६७॥
अतो देवा इति जपन्सम्यक्संस्थापयेद्धरिम् ।
परेव्योम्निस्थितंदेवं तस्मिन्नावाहयेद्धरिम् ॥६८॥
जप्त्वाऽथ मन्त्ररत्नं वै ध्यात्वा पुष्पाञ्जलिं जपेत् ।
यथोक्तविधिना विष्णुमर्चयेदच्युतं हरिम् ॥६६॥
पौरुषेण तु सूक्तेण मूलमन्त्रेण वा द्विजः ।
पूजयेद् गंधपुष्पाद्यैः पाद्यार्घ्याचमनादिभिः ॥१००॥
वस्त्रालङ्कारयुक्तेन मधुपर्कैण पूजयेत् ।
धूपं दीपं च नैवेद्यं ताम्बूलं च समर्पयेत् ॥१०१॥
जपेदष्टोत्तरशतं मन्त्रद्वयमनुत्तमम् ।
प्रसाधय सुसान्निध्यमिति संप्रार्थयेद्गुरुम् ॥१०२॥
ततः प्रदक्षिणं कृत्वानमस्कुर्यात्पुनः पुनः ।
आशिषो वाचनं कुर्याद्वेदमन्त्रैः शुभाव्दषैः (?) ॥१०३॥

भोजयित्वा ततोविप्रान्सहस्रं तु शतंक्षू च ।
दद्याद्वै दक्षिणां शक्त्या ऋत्विजः पूजयेत्ततः ॥१०४॥
गोभूहिरण्यवस्त्राद्यैराचार्यम्परितोषयेत् ।
महोत्सवं पञ्चदिनं कुर्याच्छक्त्यनुसारतः ॥१०५॥
एवं प्रतिष्ठां कुर्वीत विष्णो (श्चैव) विधानतः ।
तत्र देवः सुसान्निध्यं याति नारायणो हरिः ॥१०६॥
प्रतिष्ठासु च कर्त्तव्यो विधिरेष उदाहृतः ।
गृहार्चनञ्च कर्त्तव्यं विधिं वक्ष्यामि सत्तमाः ॥१०७॥
स्नापयेत्पञ्चगव्येन मन्त्रपूतजलेन च ।
मन्त्रेणावाहयेद्देवं परेव्योम्निस्थितं विभुम् ॥१०८॥
महाभागवतः स्पृष्ट्वा मन्त्ररत्नं जपेत्सुधीः ।
दद्यात्पुष्पाञ्जलिम्पश्चात्तेनैवशतसंख्यया ॥१०९॥
आज्यं तेनैव होतव्यमष्टोत्तरशतं ततः ।
उपचारैः समभ्यर्च्य नमस्कार्या च भक्तितः ॥
वैष्णवान्भोजयेत्पश्चाद्दक्षिणाभिः प्रतोषयेत् ॥११०॥

इति श्रीश्रीवशिष्ठस्मृतौविष्णुस्थापनविधिर्नाम
सप्तमोऽध्यायः समाप्तः

---

॥ श्रीगणेशाय नमः ॥

## अथ

# श्रीबृहद्योगियाज्ञवल्क्यस्मृतिः

## प्रथमोऽध्यायः

### तत्रादौ मन्त्रयोगनिर्णयवर्णनम्

मिथिलास्थं महात्मानं सर्वयोगीश्वरेश्वरम् ।
भगवन्तं याज्ञवल्क्यं मुनिसङ्घैः समावृतम् ॥ १ ॥
जनकाद्यैर्नृपवरैः शिष्यैश्चान्यैर्मुमुक्षुभिः ।
योगसिद्धैस्तथान्यैश्च संवृतं ब्रह्मवादिभिः ॥ २ ॥
सुखासीनं मुनिवरं ध्यानयोगपरायणम् ।
सर्वसंशयच्छेत्तारं ब्रह्मकल्पं महामुनिम् ॥ ३ ॥
तं पृच्छन्ति महात्मानमृषयः संशितव्रताः ।
संसारतारणार्थाय गुह्यं ब्रह्म सनातनम् ॥ ४ ॥
भगवन् सर्वयोगीश ब्रूहि नः संशयो महान् ।
यः सारः सर्ववेदानां वेदान्तानां तथैव च ॥ ५ ॥
सिद्धान्तानां च सर्वेषां स्मृतीनां च महामुने ।
चतुर्दशानां विद्यानां यस्तु सारः प्रकीर्तितः ॥ ६ ॥
आत्मज्ञानं परं यच्च यज्ज्ञात्वामृतमश्नुते ।
ओंकारं व्याहृतीश्चैव गायत्रीं तच्छिरस्तथा ॥ ७ ॥

प्राणायामं तथा ध्यानं संध्योपासनमेव च।
मार्जनाभ्युक्षणं स्नानं तथैवान्तर्जलं जपम् ॥ ८ ॥
गायत्र्याश्चैव माहात्म्यं जपयज्ञप्रयोजनम्।
उपस्थानं तथार्कस्य सारूप्यमपि चैव हि ॥ ९ ॥
तस्या(स्य)चान्तर्गतो ह्यात्मा कथं विज्ञायते तु सः।
त्वं हि जानासि तत्त्वेन स्वेन योगबलेन च ॥१०॥
यजूंष्यभ्यस्यमानेन पुरस्ताद्भास्कराद्व्ययम्।
साक्षाद्भगवता दृष्टस्तेन पृच्छामहे वयम् ॥११॥
आर्षं छन्दश्च मन्त्राणां दैवत्यं ब्राह्मणं तथा।
विनियोगं च मन्त्राणामोंकारादेश्च यद्विभो ॥१२॥
किमुक्तं भवतीत्येतज्ज्ञातेऽज्ञाते च किं भवेत्।
ब्राह्मण्यं च भवेत् केन किं वा नित्यमुपास्यते ॥१३॥
किं वा सत्यं भवेद्ब्रह्म संध्या येन उपास्यते।
कथं संमार्जनं कुर्यान्मन्त्रैर्वरुणदैवतैः ॥१४॥
अन्तर्जलं च कतमैः कतमैः प्राणसंयमम्।
सूर्यस्य चाप्युपस्थानं कुर्यान्मैन्त्रैः किमात्मकैः ॥१५॥
केनाक्षरेण मन्त्रेण धारणा धार्यते कथम्।
किं ध्यानं किं च वै ध्येयं किं लक्ष्यं किं स्वरूपकम् ॥१६॥
यच्चोपास्य विमुच्येत तत् परं ब्रूहि नो विभो।
होमकाले तथाग्नौ तु मध्ये किं परिचिन्तयेत् ॥१७॥
यस्य चैवाहुतिं दद्यात् किं ते ( तत् ) ब्रह्म किमात्मकम्।
तथान्नयज्ञकाले तु स्वदेहे चिन्तयेत् कथम् ॥१८॥

का विद्या का ह्यविद्या च किं वा निःश्रेयसं परम् ।
किमधीयीत वै विप्र एतत् सर्वं वदस्व नः ॥१६॥
एतच्छ्रुत्वा तु वचनं मुनीनां भावितात्मनाम् ।
तथा राजर्षीणां च स्वशिष्याणां तथैव च ॥२०॥
ब्राह्मणानां हितार्थाय सर्वयोगविदां वरः ।
आविष्कर्तुमनाः प्रश्नं विस्तरेण महामतिः ॥२१॥
भगवान् याज्ञवल्क्यस्तु प्रत्युवाच मुनींस्तदा ।
श्रूयतां संप्रवक्ष्यामि यत्न सारं ज्ञानमुत्तमम् ॥२२॥
वेदान्ताभिहितं यच्च स्मृतिसिद्धान्तयोरपि ।
तत् सर्वं संप्रवक्ष्यामि योगसारसमुच्चयम् ॥२३॥
येन यत् क्रियते कर्म नैत्यकं यद्द्विजातिभिः ।
ब्राह्मण्यं लभते येन ब्रह्मसायुज्यतां व्रजेत् ॥२४॥
ओंकारो व्याहृतयश्च गायत्री सशिरस्तथा ।
वैदिकं च तथा कर्म अब्लिङ्गं चाघमर्षणम् ॥२५॥
प्राणायामस्तथा संध्या मार्जनान्तर्जलं जपः ।
सर्वमेव हि कर्तव्यं ब्राह्मणैर्ह्यचिन्तकैः ॥२६॥
आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता ॥२७॥
अविदित्वा तु यः कुर्याद्याजनाध्ययनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पं फलं भवेत् ।
आपद्यते स्थाणुगर्तं स्वयं वाऽपि प्रमी(ली)यते ॥२८॥

२२४।

यातयामानि च्छन्दांसि भवन्त्यल्पफलान्यपि ।
अन्तर्जलादिके जप्ये इतरेषामजानताम् ॥२९॥
नाधिकारोस्ति मन्त्राणामेवं श्रुतिनिदर्शनम ।
अल्पमात्रं फलं तस्य होमादन्तर्जलाज्जपात् ॥३०॥
स्वाध्यायाद्याजनाच्चैव भवतीह न संशयः ।
यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम ॥३१॥
विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्मणी ।
एकैकस्या ऋचः सोऽपि वन्द्योह्यतिथिवद्भवेत ॥३२॥
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ।
पूर्वोक्तेन विधानेन ऋष्यादीन वेत्ति यो द्विजः ॥३३॥
अधिकारो भवेत्तस्य रहस्येषु च कर्मसु ।
मन्त्रं मन्त्रं प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु ॥३४॥
विज्ञाते परिपूर्णं तु स्वाध्यायफलमश्नुते ।
छन्दांस्ययातयामानि भवन्ति सफलान्यपि ॥३५॥
श्रेयश्च लभते सोऽपि धर्ममायुश्च विन्दति ।
दिव्यं वर्षसहस्रं तु स्वस्थानमृषिभिः सह ॥३६॥
संतिष्ठते तु तैः सार्धं तत्तुल्यो वेह जायते ।
फलं चैवापवादं च एवं बुद्ध्वा विधानतः ॥३७॥
ज्ञातव्यं हि प्रयत्नेन ब्राह्मणेन विशेषतः ।
येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ॥३८॥
मन्त्रेण तस्य तत् प्रोक्तमृषिभावस्तदार्षकम ।
छादनाच्छन्द उद्दिष्टमाकृतेर्वाससी यथा ॥३९॥

आत्मा संछादितो देवैर्मृत्युभीतैश्च वै पुरा ।
आदित्यैर्वसुभी रुद्रैस्तेन च्छन्दांसि तानि वै ॥४०॥
यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या ।
तदाकारं भवेत्तस्य दैवतं देवतोच्यते ॥४१॥
पुराकल्पे समुद्दिष्टा मन्त्राः कर्मार्थसिद्धये ।
अनेनेदं तु कर्तव्यं विनियोगः स उच्यते ॥४२॥
निरुक्तं यत्र मन्त्रस्य समुत्पत्तिः प्रयोजनम ।
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ॥४३॥
एतत् पञ्चविधं योगं जपकाले ह्यनुस्मरेत् ।
होमे चान्तर्जले योगे स्वाध्याये यजने तथा ॥४४॥

इति (श्री) बृहद्योगियाज्ञवल्क्ये (मन्त्रयोगनिर्णयो नाम) प्रथमोऽध्यायः ॥१॥

---

# अथ द्वितीयोऽध्यायः

## ओंकारनिर्णयवर्णनम

प्रणवाद्याः स्मृता मन्त्राश्चतुर्वर्गफलप्रदाः ।
तस्माच्च निःसृताः सर्वे प्रलीयन्ते च तत्र वै ॥१॥
मङ्गल्यः पावनो धन्यः सर्वकामप्रसाधनः ।
ओंकारः परमं ब्रह्म सर्वमन्त्रेषु नायकः ॥२॥
प्रजापतेर्मुखोत्पन्नास्तपः सिद्धस्य वै पुरा ।
तेनोपात्तमतस्तस्य ब्रह्मार्षं (ब्रह्माऽऽर्षं) च स्वयम्भुवः ॥३॥

गायत्री च भवेच्छन्द अग्निर्दैवतमुच्यते ।
आदौ सर्वत्र युञ्जीत विविधेष्वेव कर्मसु ॥४॥
विनियोगः समुद्दिष्टः श्वेतो वर्ण उदाहृतः ।
त्रिमात्रश्च प्रयोक्तव्यः कर्मारम्भेषु सर्वदा ॥५॥
तिस्रः सार्धास्तु कर्तव्या मन्त्रतत्त्वार्थचिन्तकैः ।
देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ॥६॥
तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् ।
अवाग्जं प्रणवास्यान्तं यस्तं वेद स वेदवित् ॥७॥
वक्रं तद्भवति ह्यादौ ओंकारं चतुरक्षरम् ।
ऋजुत्वं संप्रपद्येत पदं प्राप्य तु पञ्चमम् ॥८॥
ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥९॥
तस्मादोमित्युदाहृत्य यज्ञदानतप क्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥१०॥
उद्गीथाक्षरमेद्ब्रह्मविदो ब्रह्मणो योगम् ।
पाशुपताश्च वदन्ति हि साङ्ख्याश्चाध्यात्मतत्वज्ञाः ॥११॥
मात्रास्तिस्त्रो व्यक्ताऽव्यक्ता तथा परा सूक्ष्मा ।
अध्यात्मामधिभूतामथाधिदैवीं विजानीयात् ॥१२॥
सिद्धान्तानां तु सर्वेषां वेदवेदान्तयोस्तथा ।
अन्येषामपि शास्त्राणां निष्ठाकारमुच्यते ॥१३॥
प्रणवाद्याः स्मृता वेदाः प्रणवे पर्युपस्थिताः ।
वाङ्मयं प्रणवः सर्वं तस्मात् प्रणवमभ्यसेत् ॥१४॥

ओंकारः प्रणवस्तारस्त्र्यक्षरस्त्रिगुणः स्मृतः।
उद्गीथश्च तथादित्यो हंसो नारायणो विभुः ॥१५॥
सूर्यस्यान्तर्गतं सूक्ष्मं विष्णुं दिव्यं निरञ्जनम।
पर्यायैश्च तथा चान्यैः शास्त्रेभ्यः संप्रगीयते ॥१६॥
ओंकारसंज्ञं त्रिगुणं त्र्यक्षरं च त्रिदैवतम्।
त्रिब्रह्म त्रिरवस्थानं त्रैकाल्यं त्रिप्रतिष्ठितम ॥१७॥
त्रिप्रज्ञं च त्रिधामं च त्रिरवस्थं त्रिलिङ्गकम्।
त्रिधातुकं समुद्दिष्टं सर्वगं परमेश्वरम ॥१८॥
सत्वं रजस्तमश्चैव त्रिगुणस्तेन स स्मृतः।
अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम् ॥१९॥
ब्रह्मा विष्णुश्च रुद्रश्च त्रिदैवत्य उदाहृतः।
अग्निवायुरविभ्यश्च त्रिमात्र इति संज्ञितः ॥२०॥
ऋग्यजुश्च तथा साम त्रिब्रह्म इति संज्ञितः।
भूर्भुवः स्वस्त्र्यवस्थानं हृनकण्ठं तालुकेति च ॥२१॥
तुर्ये प्राणे तथाऽऽदित्ये त्रिषु चैव प्रतिष्ठितम्।
भूतं भव्यं भविष्यं च त्रैकाल्यं तेन चोच्यते ॥२२॥
अन्तःप्रज्ञो बहिःप्रज्ञो घनप्रज्ञ उदाहृतः।
गार्हपत्यो दक्षिणाग्निराहवनीयस्त्रिधामकम ॥२३॥
शान्तो घोरस्तथा मूढस्त्रिरवस्थ इति स्मृतः।
स्त्री पुं नपुंसकं चेति त्रिलिङ्ग इति स स्मृतः ॥२४॥
वातः पित्तं तथा श्लेष्मा त्रिधातुः समुदाहृतः।
त्रिप्रकारं विदित्वा तु ओंकार मुच्यते द्विजः ॥२५॥

एकैका तु भवेन्मात्रा त्रिगुणा सा तु वै पुनः ।
तासां सर्वं वाङ्मयं यदोतं प्रोतं व्यवस्थितम ॥२६॥
प्रथमा तस्य अकारो वाक् सत्त्वं भूहुताशनो विष्णुः ।
स्थूला जाग्रद्वृत्तिर्विज्ञेया योगतत्वज्ञैः ॥२७॥
ब्रह्मान्तरिक्षसंज्ञो मनोरजः सोमसंज्ञक उकारः ।
मात्रा स्वप्नविकल्पा (वि) सृष्टिसंज्ञा द्वितीया तु ॥२८॥
रौद्री मकारसंज्ञा प्राणाख्या तामसी तृतीया तु ।
संहरति जगत् समस्तं (सर्वं) सौषुम्णाख्या महानिद्रा ॥२९॥
आद्या परतरा सूक्ष्मा शान्ता गान्धर्वनिरवयवा ।
अनभिलक्ष्या सौम्या मकारसंज्ञा विज्ञानाकाशसंबद्धा ॥३०
प्रपञ्चो ब्रह्मणश्चोक्तः सार्धमात्रात्रयं बुधैः ।
अउमिति तिस्रो मात्रा मकारश्चार्धमात्रकः ॥३१॥
तिस्रो मात्रा लयं यान्ति अर्धमात्रे न संशयः ।
अर्धमात्रात्वमात्रे तु लयं याति निरामये ॥३२॥
अकारे पीड्यमाने तु उकारं प्रतिपद्यते ।
उकारे पीड्यमाने तु मकारं प्रतिपद्यते ॥३३॥
मकारे पीड्यमाने तु अर्धमात्रा तदा भवेत् ।
जिह्वायां पीड्यमानायां निरालम्बं तदा भवेत् ॥३४॥
एकमात्रं द्विमात्रं च त्रिमात्रं कृत्स्नमेव च ।
ह्रस्वदीर्घप्लुतं शान्तं शान्तेन मनसोद्धरेत् ॥३५॥
समाहितमना भूत्वा तत्वध्यानपरायणः ।
ओंकारं यस्त्वभिध्यायेद्ध्यान्नैक इति स्मृतः ॥३६॥

सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥३७॥
एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥३८॥
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥३९॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥४०॥
आद्यं यदक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥४१॥
यथा वै शङ्कुना पर्णं संवृता एव सर्वतः ।
एवं सर्वास्तु वै वाचः संतीर्णा प्रणवेन तु ॥४२॥
क्लेशकर्मविपाकैश्च वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ॥४३॥
वाच्यो यज्ञेश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।
वाचकेन तु विज्ञातो वाच्य एव प्रसीदति ॥४४॥
तदर्थं प्रणवं जप्यं ध्यातव्यं सततं बुधैः ।
ईश्वरः पुरुषाख्यस्तु तेनोपास्तुः (स्तः) प्रसीदति ॥४५॥
यथा हि गौर्वत्सकृतं निशम्य
हुंकृत्यवत्साभिमुखी प्रयाति ।

ब्रह्मापि तद्वत् प्रणवोपहूतं
वक्तारमागच्छति आशु वक्त्रे ॥४६॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्माणि निष्णातः परं ब्रह्माधिगच्छति ॥४७॥
अन्तःशरीरप्रभवमुदानप्रेरितं च यत्।
वागुच्चार्यं श्रोत्रवृत्ति शब्दब्रह्म तदुच्यते ॥४८॥
शब्दब्रह्मात् परं ब्रह्म तस्मिन् क्षीणे यदक्षरम्।
तदक्षरं सदा ध्यायेद्यदीच्छेद्योगमात्मनः ॥४९॥
अकारश्चाप्युकारश्च मकारो बिन्दुरेव च।
मात्रास्तद्विनियोगश्च प्रणवः पञ्चलक्षणः ॥५०॥
ओंकारः प्रणवे योज्यो ब्रह्मणि प्रणवस्तथा।
आनन्दं तत् परं ब्रह्म तत् प्रविश्यामृती भवेत् ॥५१॥
वेदादौ यः स्वरः प्रोक्तो वेदान्ते यः प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥५२॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ॥५३॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥५४॥
स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥५५॥
शब्दस्पर्शादिभिश्चैव रसरूपैरलक्षितः।
देवतायाः परस्यास्तु आलम्बः प्रणवः स्मृतः ॥५६॥

कश्चिदाराधनाकामो विष्णोर्भक्त्या करोति वै ।
तदाराधनसिद्ध्यर्थं प्रतिमां व्यञ्जिकां यथा ॥५७॥
धातुदार्वादिपाषाणैः कृत्वा भावं निवेशयेत् ।
भक्त्या श्रद्धादराभ्यां च तस्य विष्णुः प्रसीदति ॥५८॥
आर्यः प्रपूजितो यत्र प्रत्यक्षं च फलप्रदः ।
ओंकारेण तथा ह्यात्मा उपास्तः स प्रसीदति ॥५९॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते ॥६०॥
अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योंकारः स्मृतो नाम तेनाहूतः प्रसीदति ।
तस्मादोमिति पूर्वं तु कृत्वा युञ्जीत तत्परः ॥६१॥
ब्रह्मविदोऽनेकविधाः सततं येन प्रवर्तन्ते ।
गूढव्रतस्य हि सदा विशुद्धबुद्धेः स(सु) गूढचित्तस्य ।
प्रणवध्यानपरस्य च स(सु) गूढतपसो भयं नास्ति ॥६२॥
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ॥६३॥
प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥६४॥
आद्यास्तु व्याहृतीस्तिस्रो गायत्रीस्वशिरोय (यु) ताम् ।
ओंकारं विन्दते यस्तु स मुनिर्नेतरो जनः ॥६५॥
एक एव हि विज्ञेयः प्रणवो योगसाधनम् ।
गृहीतः सप्तसिद्धान्तरैरन्यैश्च ब्रह्मवादिभिः ॥६६॥

हिरण्यगर्भैः कपिलैरपान्तरतमैस्तथा ।
सनत्कुमारैर्ब्रह्मिष्ठैस्तथा पाशुपतैरपि ॥६७॥
पाञ्चरात्रैः सदोद्युक्तैः सिद्धान्तैरपि सप्तभिः ।
भेदैस्त्रिषष्टिभिर्भिन्नमेकैकं नवधा पुनः ॥६८॥
त्रिमात्रं चैव त्रिब्रह्म त्र्यक्षरं प्रणवं प्रभुम ।
हिरण्यगर्भा इच्छन्ति योगसाधननिश्चितम
( नमुत्तमम ) ॥६९॥
अग्निर्वायुस्तथादित्यस्तिस्रो मात्राः प्रकीर्तिताः ।
ऋग्यजुश्च तथा साम त्रिब्रह्मेति प्रकीर्तितम ॥७०॥
अकारश्चाप्युकारश्च मकारश्चाक्षरत्रयम ।
ओंकारः परमं धाम ओंकारः परमा गतिः ॥७१॥
ओंकारं विन्दते यस्तु तस्य जन्म न विद्यते ।
त्रिपदं च त्रिगुणं त्रिकारणमिति कापिलाः ॥७२॥
व्यक्तोऽव्यक्तस्तथाज्ञश्च त्रिपद इति स स्मृतः ।
ओंकारस्त्रिगुणं सर्वं व्यञ्जनं निर्गुणं विदुः ॥७३॥
त्रिमुखं च त्रिदैवत्यं त्रिप्रयोजनमेव च ।
अपान्तरतमैश्चैव ओंकारस्तु प्रकीर्तितः ॥७४॥
गार्हपत्यो दाक्षिणाग्निराहवनीयस्तृतीयकः ।
त्रिमुखः स तु विज्ञेयो ब्रह्मविष्णुमहेश्वराः ॥७५॥
एतत त्रिदैवतं ज्ञेयं धर्मश्चैवार्थ एव च ।
कामेन सहितो ह्येतो त्रयं प्रोक्तं प्रयोजनम ॥७६॥

भूर्भुवः स्वरिति चैव चतुर्विंशाक्षरा तथा ।
गायत्री चतुरो वेदा ओंकारः सर्वमेव तु ॥७७॥
ऋग्वेदे स्वरितोदात्त एकाक्षर उदाहृतः ।
त्रैस्वर्यं च तथोदात्तो यजुर्वेदे च दृश्यते ॥७८॥
दीर्घप्लुतः सामवेदे ओंकारस्तु न संशयः ।
संक्षिप्तोदात्तमेवाहुरेकाक्षर उदाहृतः ॥७९॥
अकारश्च उकारस्तु प्रविष्टो ह्येकदा यदा ।
अउवर्णसमायोगादोंकारः समपद्यत ॥८०॥
अनुस्वारो मकारस्तु ओंकारस्य शिरो यदा ।
प्रकृतिः साधनं कृत्वा व्यञ्जनादौ तु लुप्यते ॥८१॥
नपुंसकस्तथोंकारो वेदानां परिकीर्तितः ।
अपांतरतमो ज्ञेयो वेदसिद्धान्तयोरपि ॥८२॥
त्रिकालं च त्रिलिङ्गं च त्रिसंज्ञं च तथा विदुः ।
सनत्कुमारसिद्धान्ते ओंकारः समुदाहृतः ॥८३॥
भूतं भव्यं भविष्यं च कालत्रयमुदाहृतः ।
स्त्रीपुंनपुंसकश्चैव त्रिलिङ्ग इति स स्मृतः ॥८४॥
बहिःसंज्ञो मध्यसंज्ञ अन्तःसंज्ञ इति स्मृतः ।
उद्गीथमक्षरं ह्यं तदुद्गीथश्च उपास्यते ॥८५॥
ओमित्युद्गीयते ह्येष भूते भव्ये भविष्यति ।
त्रिस्थानं त्रिपदं चैव त्रिसंज्ञं च प्रकीर्तितम् ॥८६॥
ब्रह्मिष्ठानां भवेदेवं गुह्येपूपनिपत्सु च ।
हृत्कण्ठतालुकादीनि स्थानानि समुदाहरेत् ॥८७॥

जाग्रन् स्वप्नं सुषुप्तं च पदान्येतानि तस्य तु ।
बहिःसंज्ञस्तथान्तश्च घनप्रज्ञः स्वयं विभुः ॥८८॥
एतदक्षरमोंकारं भूतं भव्यं भविष्यति ।
त्रिप्रज्ञं त्रिपदं चैव सर्वव्यापि तथोच्यते ॥८९॥
बहिःप्रज्ञो विभुर्विश्व अन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्रोक्त एक एव त्रिधा भवेत् ॥९०॥
दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः ।
आकाशे तुर्यदप्राज्ञस्त्रिधा देहे व्यवस्थितः ॥९१॥
स्थूलो वैश्वानरो नित्यं तैजसोन्तः प्रकृतिभुक् ।
आनन्दभुक् तथा प्राज्ञ एक एव त्रिधा भवेन् ॥९२॥
सत्वाश्चैव प्रयत्नं न ब्रह्मा (ह्म) भवति मानवः ।
स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् ॥९३॥
आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ।
त्रिषु धामसु यद्भोज्यं भोक्ता यस्तु प्रकीर्तितः ॥९४॥
उभयं विन्दते यस्तु स भुञ्जानो न लिप्यते ।
प्रभवः सर्वभूतानां सतामिति विनिश्चयः ॥९५॥
प्रणवः सूयते सर्वं वेत्ता यः पुरुषः स्मृतः ।
त्र्यवस्थानं त्रिभोक्तारं त्रिभोज्यं च तथा परम् ॥९६॥
एवं पाशुपते विद्यात् सिद्धान्ते प्रणवं विभुम् ।
शान्तं घोरं तथा मूढं त्रिरवस्थानमेव तु ॥९७॥
शरीरमापः सोमश्च त्रिभोज्यमिति कीर्तितम् ।
प्राणोह्यग्निस्तथादित्यस्त्रिभोक्ता इति स स्मृतः ॥९८॥

ओंकारं समभिध्यायेद्हृदि कृत्वा तु धारणाम ।
ऋषिपुत्रो महातेजा वाग्विशुद्धो महेश्वरः ॥९९॥
त्रिरात्मा त्रिस्वभावश्च तथा त्रिव्यूह एव च ।
पाञ्चरात्रे स्मृतो ह्येष भगवद्वाचकः स्मृतः ॥१००॥
बलं वीर्यं तथा तेजस्त्रिरात्मा इति संज्ञितः ।
ज्ञानैश्वर्यं तथा शक्तिस्त्रिस्वभाव इति स्मृतः ॥१०१॥
सङ्कर्षणोथ प्रद्युम्नो (म्नः) अनिरुद्धस्तथैव च ।
त्रिव्यूह इति निर्दिष्ट ओंकारो विष्णुरव्ययः ॥१०२॥
भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा ।
व्यक्ताऽव्यक्तो वासुदेवः प्रभवः प्रलयस्तथा ।
वाधुलेरेकमात्रस्तु ओंकारः समुदाहृतः ॥१०३॥
यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेणाभिधास्ये ॥१०४॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन देहं स याति परमां गतिम् ॥१०५॥
एवं त्रिषष्टिभेदैस्तु सिद्धान्तेषु प्रगीयते ।
स्थूलभेदेन चोंकारश्चतुः षष्टि (ष्ठ) स्तु निष्कलः ॥१०६॥
विष्णुंनिरञ्जनं शान्तमानन्दं सर्वदेहिनाम् ।
अक्षरं तं विजानीयात् स्थूलं च क्षरसंज्ञितम् ॥१०७॥
न च स्थूलं न च ह्रस्वं न च दीर्घं न च प्लुतम् ।
न लोहितं न कृष्णं च सर्ववर्णविवर्जितम ॥१०८॥

इन्द्रियैरिन्द्रियार्थैश्च तत्वैश्च परिवर्जितम् ।
ध्रुवं च शाश्वतं नित्यमचलं लयवर्जितम ॥१०९॥
अक्षरं चाजरं चैवमनुत्पन्नमनाशि च ।
सर्वमात्राविनिर्मुक्तमानन्दं ब्रह्म निष्कलम ॥११०॥

अघोषमव्यञ्जनमस्वरं च
यत्कण्ठ्य (ण्ठ) तालव्यमनासिकं च ।
अरेफजातस्वरमोष्ठवर्जितं
तदक्षरं स्वरति स्वयं भवम ॥१११॥
ओंकारं विपुलमचिन्त्यमप्रमेयं
सूक्ष्माकारं ध्रुवमचलं शिवं पुराणम ।
तद्विष्णोः पद (पदं) मुखपङ्कजप्रसूतं
देहान्तः स्थंमनसि च यत् स्थितिं करोति ॥११२॥

दशनामानि नैरुक्ता ओंकारस्य प्रचक्षते ।
अन्वर्थं कानि तानीह वेदितव्यानि धीमता ॥११३॥
ओंकारं प्रणवं चैव सर्वव्यापिनमेव च ।
अनन्तं च तथा तारं शुक्लं वैद्युतमेव च ॥११४॥
हंसं तुर्यं परं ब्रह्म इति नामानि जानत ।
निष्कलस्य तु सर्वज्ञः पर्यायेण हि कीर्तितः ॥११५॥
उच्चार्यमाणः सर्वत्र आपादतलमस्तकम ।
उन्नामयेच्छरीरं तु ओंकारस्तेन चोच्यते ॥११६॥
ऋग्यजुः सामाथर्वाणि देवताश्चाक्षरत्रयम् ।
शरीरं वाङ्मनश्चैव प्राणनात् प्रणवः स्मृतः ॥११७॥

शरीरं चैव विश्वं च विद्यास्थानानि सर्वशः ।
व्याप्य संतिष्ठते यस्मात् सर्वव्यापी ततः स्मृतः ॥११८॥
अनन्तं नयते स्थानं तस्य चान्तो न लभ्यते ।
ऋषिदेवमनुष्येषु अनन्तस्तेन कीर्तितः ॥११९॥
सर्वदुःखसमुत्थानाद्भवग्राहार्णवाकुलात् ।
चिन्तितस्तारयेद्यस्मात्तेन तारो निगद्यते ॥१२०॥
वर्णेन च भवेच्छुक्लः शुद्धं च नयते पदम् ।
त्रिविधं शोषयेत् पापं तेन शुक्ल इति स्मृतः ॥१२१॥
आविष्करोति स यतेर्ज्योतीरूपं भ्रुवो (र)न्तरे ।
विद्योतते तमो भित्त्वा वैद्युतस्तेन कीर्तितः ॥१२२॥
हृदि ध्यानं सदा यस्मादादित्योर्द्धीथमेव च ।
भित्वा शरीरं नयति तस्माद्धंस इति स्मृतः ॥१२३॥
जाग्रत् स्वप्नं च सुप्तं च तुर्यं चैव चतुर्थकम् ।
ज्ञातस्तु त्रायते यस्मात् तुर्यस्तेन निगद्यते ॥१२४॥
वाङ्मयस्य तु सर्वस्य ब्रह्मणस्त्रिविधस्य च ।
मुखमेतत् समुद्दिष्टं शब्दब्रह्ममयं विभुः ॥१२५॥
परं ब्रह्म नयत्येव परब्रह्म इति स्मृतः ।
एवं नैरुक्तकैरुक्तमृषिभिश्च तथा परैः ॥१२६॥
बाष्कलैरेकमात्रस्तु ओंकारः समुदाहृतः ।
रुचकायन आचार्यो द्विमात्रं चेच्छते सदा ॥१२७॥
द्विमात्रश्चार्धमात्रस्तु नारदस्य मतेन तु ।
मौद्गलस्य त्रिमात्रस्तु ओंकारो नात्र संशयः ॥१२८॥

वशिष्ठस्य मतेनैव मात्राचात्र चतस्त्रिका (?)
त्रिमात्रो मनुना चोक्तस्तथान्यैर्ऋषिसत्तमैः ॥१२९॥
पाराशरैश्चतुर्मात्रस्तथा स्वध्यात्मचिन्तकैः ।
ह्रस्वं दीर्घं प्लुतं शान्तं चतुर्धा संप्रकीर्तितम ॥१३०॥
भवेत् कर्मवशादेवमन्यथा तु त्रिरक्षरम
भगवान याज्ञवल्क्यस्तु अमात्रं चेच्छते सदा ॥१३१॥
यः शब्दमय ओंकार उच्चार्यः स्थूल एव सः ।
अमात्रश्चाप्यनुच्चार्य परोंकारः स उच्यते ॥१३२॥
तिस्रः साधास्तथा मात्राः स गृह्णाति यथाक्रमम ।
परं ब्रह्म तमेवाहुश्चात्मानं ब्रह्मचिन्तकाः ॥१३३॥
यत् पूर्वं तु समुद्दिष्टमोंकाराग्रे व्यवस्थितम ।
अक्षरैश्च पदैश्चैव अतीतं पञ्चमं पदम ॥१३४॥
यं (यत्) प्राप्य विन (नि) वर्तन्ते ओंकारस्य पथि स्थिताः ।
मनसात्र समाधाय शरीरं लिङ्गमानवम ॥१३५॥
संकल्पं व्यवसायं च अभिमानाख्यसंज्ञकम ।
चेतनाधिष्ठितं सूक्ष्मं तथा सूक्ष्मैः सहैव तु ॥१३६॥
ओंकारपद्मनालेन हृद उद्धृत्य योजयेत् ।
परमे व्योम्न्यनन्ताख्ये सर्वसङ्कल्पवर्जिते ॥१३७॥
तस्मिंस्तावन्निरोद्धव्यं मनश्चोकारमेव च ।
यावन्निर्मलतां याति एष योग उदाहृतः ॥१३८॥
मनो युञ्ज्यात्तथोंकारे ओंकारं प्रणवे तथा ।
प्रणवं ब्रह्मणि स्थाप्य न किञ्चिदपि चिन्तयेत् ॥१३९॥

प्रणवो विमलः शुद्धो निःशब्दो व्योमसंज्ञकः ।
तस्मादुत्पद्यते प्राणः पुनस्तत्रैव लीयते ॥१४०॥
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ।
दुःखे भयाभिघातार्थे सर्वथा प्रणवं स्मरेत् ॥१४१॥
प्रणवो ह्यपरं ब्रह्मप्रणवश्च परः स्मृतः ।
प्रणवो ह्यादि सर्गस्य अन्तो मध्यस्तथैव च ॥१४२॥
एवं हि प्रणवं ज्ञात्वा विशन्ति ब्रह्म निष्कलम् ।
अपूर्वोऽनन्नारोऽबाह्योऽनपरः प्रणवोऽव्ययः १४३॥
प्रणवो हीश्वरो देवो हृदि सर्वस्य धिष्ठितः ।
सर्वव्यापिनमोंकारं मत्वा धीरो न सीदति ॥१४४॥
अमात्रं च त्रिमात्रं च अद्वैतं ब्रह्म तत् परम् ।
स्थूलं चाप्यतिसूक्ष्मं च सर्वतः किमपि स्थितम् ॥१४५॥
ओंकारं विन्दते यस्तु स भवेद्वेदविद्विजः ।
यथा पत्रं फलं पुष्पं शङ्कुनैकेन धार्यते ॥१४६॥
तथा जगदिदं सर्वमोंकारेणैव धार्यते ।
जप्येन दहते पापं प्राणायामैस्तथा मलम् ॥१४७॥
ध्यानेन जन्म निर्घातं धारणाभिश्च मुच्यते ।
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ॥१४८॥
स्त्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीयते ।
प्रोक्षणे पोषणे चैव प्रतिष्ठाने प्रतिग्रहे ॥१४९॥
आश्रावणे वषट्कारे प्रत्याश्रावे जपेऽपि च ।
सामसु ब्रह्ममुख्येषु ऋग्यजुस्तोत्रशास्त्रयोः ॥१५०॥

सर्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते ।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति च ॥१५१॥
सर्वमन्त्राधिराजेन ओंकारेण न संशयः ।
यदूनं चातिरिक्तं च यच्छिद्रं यदयाज्ञिकम् ॥१५२॥
यदमेध्यमशुद्धं वा यातयामं च यद्भवेत् ।
ओंकारेण प्रयुक्तेन सर्व चाविफ (क) लं भवेत् ॥१५३॥
अनूनं नातिरिक्तं च अच्छिद्रं याज्ञिकं तथा ।
मेध्यं शुद्धायातयामं पवित्रं मङ्गलं तथा ॥१५४॥
सर्वमङ्गलमाङ्गल्यं सर्वब्रह्ममयं विभुम् ।
पावनं मोक्षदं पुण्यं सर्वदेवमयं विभुम् ॥१५५॥
विदित्वा मुच्यते क्षिप्रं जन्मसंसारबन्धनात् ।
मुक्तो न जायते भूयो ब्रह्मभूतः सनातनः ॥१५६॥
एतत् संक्षेपतः प्रोक्तमोंकारगुणवर्णनम् ।
विस्तरेण न शक्यन्ते वक्तुं वर्षशतैरपि ॥१५७॥
योगाचार्येण संचिन्त्य याज्ञवल्क्येन धीमता ।
ओंकारनिर्णयो ह्येष प्रोक्तः शिष्यहितैषिणा ॥
श्लोकानां द्वे शते प्रोक्ते निर्णयः समुदाहृतः ॥१५८॥

इति ( श्री ) बृहद्योगियाज्ञवल्क्ये
ओंकारनिर्णयो(नाम)द्वितीयोऽध्यायः ।

---

# अथ तृतीयोऽध्यायः

## व्याहृतिनिर्णयवर्णनम

अतः परं प्रवक्ष्यामि व्याहृतीनां च निर्णयम ।
सप्त व्याहृतयः प्रोक्ताः पुराकल्पे स्वयंभुवा ॥ १ ॥
तान्येव सप्त छन्दांसि लोकाः सप्त प्रकीर्तिताः ।
त्रिधा चतुर्धा विज्ञेया( ) पंचधा सप्तधा पुनः ॥ २ ॥
भूर्भुवःस्वरिति ज्ञेया अव्यस्ताम्ना: प्रकीर्तिताः ।
पञ्च व्याहृतयः प्रोक्ताः सामगाना च सामसु ॥ ३ ॥
पुरुषं च तथा सत्यं भूर्भुव.स्वस्तथैव च ।
विद्याप्रकरणापाये यजमानस्तु वै सदा ॥ ४ ॥
सप्त व्याहृतयः प्रोक्ताः प्राणायामेषु नित्यशः ।
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ॥ ५ ॥
भूराद्याश्चैव सत्यान्ता महाव्याहृतयस्तु वै ।
लोकाख्यैतास्तु सप्तैते उपर्युपरि संस्थिताः ॥ ६ ॥
चतुर्दशविधं सर्ग दृष्टनेदं व्याहृतं स्वयम ।
सप्त लोका भविष्यन्ति तस्माद्व्याहृतयः स्मृतः(ताः) ॥७
अव्याहृतमिदं ह्यासीत सदेवासुरमानुषम ।
संसत्यं व्याहृतं एव प्रजापतिरिति श्रुतिः ॥ ८ ॥
भूर्भुवःस्वस्तथा एव स्वयमेव स्वयंभुवा ।
व्याहृता ज्ञानदेहेन तेन व्याहृतय. स्मृताः ॥ ९ ॥

एतास्तु व्याहृतीः सप्त यः स्मरेत् प्राणसंयमे ।
उपासितं भवेत्तस्य विश्वं भुवनसप्तकम् ॥१०॥
सर्वेषु चैव लोकेषु कामचारश्च जायते ।
एषा लोकवती ज्ञेया तनुराद्या प्रजापतेः ॥११॥
सप्तान्ता देवदेवस्य विष्णोरमिततेजसः ।
व्याहृतीनां च सर्वासामृषिश्चैव प्रजापतिः ॥१२॥
सप्त च्छन्दांसि यान्यासां तानि सम्यक् प्रकीर्तयेत् ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥१३॥
त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै ।
अग्निर्वायुस्तथादित्यो बृहस्पत्याप एव च ॥१४॥
इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ।
अनादिष्टेषु सर्वेषु प्रायश्चित्तेषु सर्वशः ॥१५॥
प्राणायामप्रयोगे च विनियोग उदाहृतः ।
भवन्ति भूयो भूतानि उपभोगक्षये पुनः ॥१६॥
कल्पान्ते ह्युपभोगाय भुवस्तेन प्रकीर्तितम् ।
शीतोष्णवृष्टितेजांसि जायन्त्येतानि वै ततः ॥१७॥
आलयः सुकृतीनां च स्वर्लोकः समुदाहृतः ।
अधरोत्तरेभ्यो लोकेभ्यो महांश्च परिमाणतः ॥१८॥
हृद्यं सर्वलोकानां महस्तेन निगद्यते ।
कल्पदाहे प्रलीनास्तु प्राणिनस्तु पुनः पुनः ॥१९॥
जायन्ते तु पुनः सर्गे जनस्तेन उदाहृतः ।
सनकाद्यास्तपः सिद्धा ये चान्ये ब्रह्मणः सुताः ॥२०॥

अधिकारनिवृत्ताश्च तिष्ठन्त्यस्मिंस्ततस्तपः ।
सत्यं तु सप्तमो लोको ब्रह्मणः सदनं हि तत् ॥२१॥

सर्वेषां चैव देवानां मूर्ध्नि संतिष्ठते सदा ।
ज्ञानकर्मस्वनुष्ठानात्तथा सत्यस्य भाषणात् ॥२२॥

प्राप्यते चोपभोगार्थं प्राप्य न च्यवते पुनः ।
सत्यं तु सप्तमो लोकस्तस्मादूर्ध्वं न विद्यते ॥२३॥

आसप्तमात्तु पातालादूर्ध्वमेतदुदाहृतम ।
अधस्ताद्राजतं ह्यण्डमूर्ध्वमर्धं हिरण्मयम ॥२४॥

प्रधानादेव संभूतं ब्रह्मनीडं हिरण्मयम ।
भूराद्यैः सप्तभिर्व्याप्तं सत्यान्तैः पुरुषसंमितैः ॥२५॥

अर्द्धार्द्धं छिद्रितं ह्यण्डं सप्तप्रकृतिलौकिकम ।
अनन्ताकाशमध्यस्थं जीवभास्करभासितम ॥२६॥

अजस्य नाभावुद्भूतं यस्मिन विश्वं प्रतिष्ठितम ।
महदादि विशेषान्तमव्यक्ते गच्छते लयम ॥२७॥

अपुनर्मरणायैव ब्रह्मणः सदने स्थिताः ।
अधिकारं विना चैव ब्रह्मणः सदृशाश्च ते ॥२८॥

अव्यक्ते वै दिनस्यान्ते मुच्यन्ते ब्रह्मणा सह ।
विशन्ति परमं धाम पुरुषं भास्करप्रभम् ॥२९॥

व्याहृतीर्व्याहरंश्चैव प्राणंयदि विमुच्यते ।
विलयं याति च व्यक्तमव्यक्तं पुरुषे क्षणात् ॥३०॥

एष संक्षेपतश्चोक्तः सप्तव्याहृतिनिर्णयः ।
यं ज्ञात्वा मुच्यते विद्वान भवग्राहाकुलार्णवात ॥३१॥
निर्णयो व्याहृतीनां तु श्लोका द्वित्रिंशकस्तथा ॥३२॥

इति (श्री) बृहद्योगियाज्ञवल्क्ये व्याहृतिनिर्णयो नाम
तृतीयोऽध्यायः ।

---

# अथ चतुर्थोऽध्यायः

## गायत्रीनिर्णयवर्णनम

अतः परं प्रवक्ष्यामि गायत्र्या निर्णयं शुभम ।
यं ज्ञात्वा याति वै विप्रः सायुज्यं ब्रह्मणा सह ॥१॥
आर्षं छन्दश्च दैवत्यं विनियोगश्च ब्राह्मणम ।
शिरश्चाक्षरदैवत्यमावाहनविसर्जनम ॥२॥
ध्यानं जपप्रयोगश्च येषु कर्मसु यादृशम ।
ज्ञातव्यं ब्राह्मणैर्यत्वाद्ब्राह्मण्यं येन वै भवेत ॥३॥
सविता देवता ह्यस्या मुखमग्निस्तदित्यृचः ।
विश्वामित्रऋषिश्छन्दो गायत्री तु विधीयते ॥४॥
विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः ।
विनियोग उपनये प्राणायामे तथैव च ॥५॥
गायत्री वा इदं सर्वं ब्रह्माण्डं ब्राह्मणानि तु ।
वेदोपनिषच्छाखासु ब्राह्मणानि विधानतः ॥६॥

पुराणधर्मशास्त्राणि गायत्र्याः पावनानि तु ।
कीर्तितानि त्वनेकानि गायत्र्याः पावनानि च ॥७॥
षोडशाक्षरकं ब्रह्म गायत्र्यास्तच्छिरः स्मृतम् ।
ओमापो ज्योतिरित्येष मन्त्रो यः परिकीर्त्यते ॥८॥
तस्य प्रजापतिश्चर्षिर्यजुश्छन्दो विवर्जि (र्णि) तम् ।
ब्रह्माग्निवायुसूर्याश्च दैवत्यं समुदाहृतम् ॥९॥
प्राणस्यायमने चैव विनियोग उदाहृतः ।
गायत्र्याः शिरसा सार्धमेवं श्रुतिनिदर्शनम् ॥१०॥
तपसा सुसमुद्धृत्य आदिसर्गे स्वयंभुवः ।
ओंकारपूर्वा गायत्री निर्जगाम ततो मुखात् ॥११॥
अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भुर्भुवः स्वरितीति च ॥१२॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोस्याः सावित्र्याः परमेष्ठीप्रजापतिः ॥१३॥
यथाग्निर्वै देवतानामृतूनां कुसुमाकरः ।
ब्राह्मणो द्विपदानां च गावश्चैव चतुष्पदं (दाम्) ॥१४॥
तेजस्वीनां सहस्रांशुरिन्द्रियाणां यथा मनः ।
मेरुः शिखरिणां श्रेष्ठो गायत्री छन्दसां तथा ॥१५॥
यथा मधु च पुष्पेभ्यो घृतान्मण्डं रसात् पयः ।
एवं हि सर्ववेदानां गायत्री सारमुच्यते ॥१६॥
गायत्री प्रकृतिर्ज्ञेया ओंकारः पुरुषः स्मृतः ।
ताभ्यामुभाभ्यां संयोगात् जगत् सर्वं प्रवर्तते ॥१७॥

संवत्सरतनुर्ह्येषा अरणीति निगद्यते ।
चतुर्विंशत्यात्मिकैषा तत्वन (व) त्यपि सा स्मृता ॥१८॥
प्रणवः सर्ववेदानां गायत्री छन्दसामिह ।
अक्षराणि च यान्यस्याः स्मृतान्यङ्गानि तानि तु ॥१९॥
चतुर्विंशति तत्वानि ओंकारः पञ्चविंशकः ।
चतुर्विंशाक्षरा देवी त्रिपदाष्टाक्षरं पदम् ॥२०॥
गेयकाले सामगानां यकारेभ्या. प्रजायते ।
चतुर्विंशः स विज्ञेयो अलक्ष्यः शान्तिमस्तुवः
(चान्तिमस्तु स.) ॥२१॥
केचिदिच्छन्ति निष्क्रान्तं यकारान्ते प्रतिष्ठितम् ।
अन्तिमो यो भवेद्वर्णो व्यञ्जनं चार्धमात्रिकम् ॥२२॥
तत्तात्तुनि निविष्टं तु तुर्याख्यं सोमरूपकम् ।
चतुर्विंशतिसंख्येयमक्षरं ब्रह्म निष्कलम् ॥२३॥
तेनैवारभ्यते देवी तेनैवेषा समाप्यते ।
सार्धमात्रिकरूपेण ओंकारान्ते व्यवस्थितम् ॥२४॥
प्रधानः स तु विज्ञेयस्तत्परः पुरुषः स्मृतः ॥२५॥
ओंकारः पूर्वमुच्चार्यो भूर्भुवः स्वस्ततः परम् ।
गायत्री प्रणवश्चान्ते जपे ह्येवमुदाहृतः ॥२६॥
श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलङ्कारैश्च भूषिता ॥२७॥
आदित्यमण्डलान्तस्था ब्रह्मलोकगताथवा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥२८॥

आवाह्य यजुषा तेन तेजोसीति विधानतः ।
एतद्यजुः पुरा दृष्टं देवैर्दर्शनकाङ्क्षिभिः ॥२६॥
तत्रावाह्य जपित्वा तु नमस्कृत्य विसर्जयेत् ।
प्रणवं भूर्भुव स्वश्च अङ्गानि हृदयादयः ॥३०॥
त्रिरावर्त्य ततः पश्चादार्षं छन्दश्च दैवतम् ।
विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु वै ॥३१॥
सर्वावयवसंपूर्णा ध्याता सिद्धिकरी भवेत् ।
षड्जश्च ऋषभश्चैव धैवतश्च तृतीयकः ॥३२॥
त्रिभिः स्वरैर्यदा गीता त्रैस्वर्येति ततः स्मृता ।
भूर्लोकश्चान्तरिक्षं च स्वर्लोकश्च तृतीयकः ॥३३॥
पदैस्त्रिभिर्यदा त्या (व्या) प्ता त्रिपदेति ततः स्मृता ।
सविता देवता यस्मात् सावित्री तेन चोच्यते ॥३४॥
गायनं (न्तं) त्रायते यस्मात् गायत्रीति ततः स्मृत.(ता) ।
श्येनो भूत्वाऽऽहरत सोमं त्रिदिवात् स्वेन तेजसा ॥३५॥
छन्दसां पोषणात् तस्मात गायत्री वा ततः स्मृता ।
वेदेषु पठ्यते चान्या जप्यकालेऽन्यथा पुनः ॥३६॥
प्राणायामे तथा ध्याने होमकालेषु चान्यथा ।
निग्रहे चापि शत्रूणामन्यथा परिपठ्यते ॥३७॥
ओंकारं व्याहृतीस्तिस्त्रः प्रथमं संप्रयोजयेत् ।
ओंकाराद्या त्रिरावर्त्या वेदस्यारम्भणे तथा ॥८८॥
प्रणवाद्या तु विज्ञेया जप्ये व्याहृतिभिः सह ।
ताभिस्तु सप्तभिः सार्धं सप्तोंकारसमन्विताम् ॥३६॥

शिरसा सहितां देवीं प्राणयामे प्रयोजयेत।
प्रणवव्याहृतिभिः सार्धं स्वाहान्तां होमकर्मणि ॥४०॥
प्रतिलोमा प्रयोक्तव्या फट्कारान्ताऽऽभिचारिके।
एवं यस्तु विजानाति गायत्रीं ब्राह्मणस्तु सः ॥४१॥
अन्यथा शूद्रधर्मा स्याद्वेदानामपि पारगः।
तस्मात् सर्वप्रयत्नेन ज्ञातव्या ब्राह्मणेन सा ॥४२॥
व्याहृत्योंकारसहिता सशिराश्च यथार्थतः।
सशिराश्चैव गायत्री यैर्विप्रैरवधारिता ॥४३॥
ते जन्मबन्धनिर्मुक्ताः परं ब्रह्म विशन्ति वै।
षोडशाक्षरकं ब्रह्म गायत्री सशिरास्तथा ॥४४॥
सकृदावर्तयेद्यस्तु सर्वपापैः प्रमुच्यते।
सोंकारं चतुरावर्त्या विज्ञेया सा शताक्षरा ॥४५॥
शताक्षरा(रां) समावर्त्य चतुर्वेदफलं लभेत्।
ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ॥४६॥
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्।
योधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ॥४७॥
स ब्रह्म परमभ्येति वायुभूतः स्वमूर्तिमान्।
एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् ॥४८॥
सन्ध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते।
सहस्रकृत्वस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः ॥४९॥
महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते।
समावृत्या पुनर्देहं दशभिः प्राप्यते दिवम् ॥५०॥

विशावृत्त्या तु सा देवी नयते हीश्वरालयम् ।
अष्टोत्तरशतं जप्त्वा तरते जन्मसागरम् ॥५२॥
तीर्णो भूयो न पश्येत जन्ममृत्युं सुदारुणम् ।
गायत्रीं जपते यस्तु सोमसद्मासने तु सः ॥५२॥
पादार्धं पादमर्धं वा समस्तामृचमेव वा ।
सर्वेषां भवपापानां संकरे समुपस्थिते ॥५३॥
दशसाहस्त्रिकोऽभ्यासो गायत्र्याः शोधनं परम् ।
रुद्रकूष्माण्डजप्यैश्च जप्यैः सौरार्णकैस्तथा ॥५४॥
ऋषिभिर्विरजाजाप्यैर्गायत्री च विशिष्यते ।
ब्रह्महत्यां सुरापानं सुवर्णस्तेयमेव वा ॥५५॥
गुरुदारागमं चैव जप्येनैव पुनाति सा ।
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ॥५६॥
तत्र तत्र तिलैर्होमो गायत्र्या जपनं तथा ।
वायुभक्षो दिवा तिष्ठेन् रात्रिं नीत्वाप्सु सूर्यदृक् ॥५७॥
जप्त्वा सहस्रं गायत्र्याः शुध्येद् ब्रह्मवधादृते ।
शतेन गायत्र्याः स्नायात् शतमन्तर्जले जपेत् ॥५८॥
अपः शतेन पीत्वा तु सर्वपापैः प्रमुच्यते ।
सायं प्रातस्तु यः संध्यां समभ्यस्यां सेवते द्विजः ॥५९॥
जपन् वै पावनीं देवीं सावित्रीं लोकमातरम् ।
स तया पावितो देव्या ब्राह्मणो धूतकिल्बिषः ॥६०॥
न सीदेत् प्रतिगृह्णानः पृथिवीं च ससागराम् ।
गोघ्नः पितृघ्नो मातृघ्नो भ्रूणहा गुरुतल्पगः ॥६१॥

ब्रह्महा हेमहारी च यस्तु विप्रः सुरां पिबेत् ।
गायत्र्याः शतसाहस्रे जपे भवति वै शुचिः ॥६२॥
अक्षराणि च दैवत्यं संप्रवक्ष्याम्यत.परम् ।
आग्नेयं प्रथमं ज्ञेयं वायव्यं च द्वितीयकम् ॥६३॥
तृतीयं सूर्यदैवत्यं चतुर्थं वैद्युतं स्मृतम् ।
पञ्चमं यमदैवत्यं वारुणं षष्ठमुच्यते ॥६४॥
बार्हस्पत्यं सप्तमं च पार्जन्यमष्टमं विदुः ।
ऐन्द्रं तु नवमं ज्ञेयं गांधर्वं दशमं स्मृतम् ॥६५॥
पौष्णमेकादशं ज्ञेयं द्वादशं मैत्रवारुणम् ।
त्वाष्ट्रं त्रयोदशं ज्ञेयं वासवं च चतुर्दशम् ॥६६॥
मारुतं पञ्चदशकं सौम्यं षोडशकं स्मृतम् ।
सप्तदशं त्वाङ्गिरसं वैश्वदेवमतःपरम् ॥६७॥
आश्विनं चैकोनविंशं प्राजापत्यं तु विंशकम् ।
सर्वदेवमयं ज्ञेयमेकविंशकमक्षरम् ॥६८॥
रौद्रं द्वाविंशकं प्रोक्तं त्रयोविंशं तु ब्राह्मणम् ।
वैष्णवं तु चतुर्विंशमेता अक्षरदेवताः ॥६९॥
जप्यकालेषु संचिन्त्य विष्णुसायुज्यतां व्रजेत् ।
एतस्यां ज्ञातमात्रायां वाङ्मयं विदितं भवेत् ॥७०॥
उपासितं भवेत् सर्वं विश्वं भुवनसप्तकम् ।
अज्ञात्वा चैव गायत्रीं ब्राह्मण्यात् परिहीयते ॥७१॥
अपवादेन संयुक्तो भवेच्छ्रुतिनिदर्शनात् ।
येषां द्विजानां सावित्री नानूच्येत् यथाविधि ॥७२॥

तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेन।
एतया चापि संयुक्तः काले च क्रियया स्वया ॥७३॥
विप्रक्षत्रियविड्योनिर्गृह्याणां पतिसाधुपु। (?)
ओंकारो व्याहृतीः सप्त सावित्री प्राणसंयमः ॥७४॥
संध्या न वन्दिता येन ब्राह्मण्यं तस्य वै कुतः॥७५॥
सावित्रीं यो न जानाति वृथा तस्य परिश्रमः।
गायत्रीमात्रसंतुष्टो वरं विप्रः सुयन्त्रितः ॥७६॥
नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी।
सारभूतास्तु वेदानां गुह्योपनिषदः स्मृताः॥७७॥
ताभ्यः सारं तु गायत्री गायत्र्या व्याहृतित्रयम्।
व्याहृतिभ्यस्तथोंकारस्त्रिवृद्ब्रह्म स उच्यते॥७८॥
त्रिवृद्ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।
मधुवन संभृतं ह्येतद्विप्रासो विष्णुना स्वयम॥७९॥
गायत्रीं चैव वेदांश्च तुलया समतोलयन्।
एकतश्चतुरो वेदान् गायत्रीमेकतः समा ( म )॥८०॥
एषा हि त्रिपदा देवी सर्वब्रह्ममयी शुभा।
तपसा महता दृष्टा विश्वामित्रेण धीमता॥८१॥
संवत्सरं वा षण्मासान यो जपेद्विधिवद्द्विजः।
सोऽचिरात्सर्वकामांश्च प्राप्नुयान्नात्र संशयः॥८२॥
गायत्रीनिर्णयश्लोकाः सप्ततिर्नव एव च।
इति श्रीबृहद्योगियाज्ञवल्क्ये गायत्रीनिर्णयो (नाम)
चतुर्थोऽध्यायः॥

# अथ पञ्चमोऽध्यायः

## ओंकार गायत्रीन्यासवर्णनम

न्यासं तु संप्रवक्ष्यामि ओंकारादि यथायथम ।
येन विन्यस्तमात्रेण ब्रह्मीभवति ब्राह्मणः ॥१॥
अकारं विन्यसेन्नाभ्यां सत्त्वरूपं निरञ्जनम ।
उकारं हृदये तद्वद्राजसं तद्गुणं स्मृतम ॥२॥
मकारं मूर्ध्नि विन्यस्य तमोमात्रं तृतीयकम ।
ब्रह्मरूपं तदात्मानं ध्यायेद्विगतकल्मषम ॥३॥
कुर्याद्व्याहृतिभिर्न्यासं वक्ष्यमाणक्रमेण तु ।
पूर्वमेव तु याः प्रोक्ता भूराद्यास्ते समासतः ॥४॥
भूर्लोकं पादयोर्मध्ये भुवर्लोकं तु जानुनोः ।
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा ॥५॥
जनलोकं कण्ठदेशे मुखबिम्बे तपस्तथा ।
भ्रुवोर्ल्ललाटसंधौ तु सत्यलोकं प्रतिष्ठितम ।
हिरण्मये परे कोशे ध्येयः परमनिष्कलः ॥६॥
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।
गायत्रीं विन्यसेत पश्चाच्छरीरे चात्मनो बुधः ॥७॥
चतुर्विंशतिस्थानेषु पादो (द) मूर्धान्तमस्तकम् ।
पादाङ्गुष्ठे तथा गुल्फे जङ्घयोर्जानुनोस्तथा ॥८॥

ऊरुभ्यां गुह्यवृषणे कटौ नाभ्यां तथैव च ।
जठरे स्तने च हृदये कण्ठे वक्त्रे च तालुनि ॥९॥
श्रोत्रे चक्षुर्भ्रुवोर्मध्ये ललाटे पूर्वके मुखे ।
याम्यपश्चिमके चैव उत्तरे च यथाक्रमम ॥१०॥
अन्तिमं मूर्ध्नि विन्यस्य परब्रह्म स उच्यते ।
गुह्ये चक्षुपि वक्त्रे च समीके (?) हृदये तथा ॥११॥
पद्भ्यां नाभ्यां ललाटे तु नवमं मूर्ध्नि विन्यसेत ।
इदं न्यासचतुष्कं तु सकृन्न्यस्यति यो द्विजः ॥१२॥
सर्वपापविनिर्मुक्तो ब्रह्मसायुज्यमृच्छति ।

इति श्रीबृहद्योगियाज्ञवल्क्ये ओंकारगायत्रीन्यासो (नाम) पञ्चमोऽध्यायः ॥

---

## अथ षष्ठोऽध्यायः

### संध्योपासन निर्णयवर्णनम्

अतः परं प्रवक्ष्यामि संध्योपासननिर्णयम् ।
अहोरात्रकृतान पापान् यामुपास्य विमुच्यते ॥१॥
संध्या येन न विज्ञाता संध्या येनानुपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥२॥
नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥३॥

सर्वावस्थोऽपि यो विप्रः संध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत सोऽन्यजन्मगतोऽपि सन् ॥४॥
ओंकारो व्याहृतीः सप्त गायत्री सशिरास्तथा ।
आपोहिष्ठा ऋचस्तिस्त्रः सूक्तं चैवाघमर्षणम् ॥५॥
आदित्यरक्षणार्थं तु सायंप्रातर्दिने दिने ।
सृष्टं स्वयंभुवा पूर्वं ब्राह्मणानां मुखे स्थितम् ॥६॥
सातत्यं कर्म विप्राणामहोरात्राघसो (घनो) दनम् ।
पापं तु जायते तस्मादनार्तस्तन्न चोत्सृजेत् ॥७॥
अनार्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसंमितः ।
प्रायश्चित्तीभवेद्विप्रो लोके भवति निन्दितः ॥८॥
यावन्तोऽस्यां पृथिव्यां तु विकर्मस्था द्विजातयः ।
तेषां तु पावनार्थाय संध्या सृष्टा स्वयंभुवा ॥९॥
या संध्या सा तु गायत्री त्रिधा भूत्वा प्रतिष्ठिता ।
संध्या ह्युपासिता येन तेन विष्णुरुपासितः ॥१०॥
ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् ।
संध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ तु सा समा ॥११॥
त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्रद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने ॥१२॥
अहन्यहनि ते सर्वे सूर्यमिच्छन्ति खादितुम् ।
अथ सूर्यस्य तेषां च युद्धमासीत् सुदारुणम् ॥१३॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
संध्येति (संध्यां तु) समुपासीनाः प्रक्षिपन्ति महज्जलम् ॥१४॥

ओंकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥१५॥
एतद्विदित्वा यो विप्र उपास्ते संशितव्रतः ।
दीर्घमायुः स विन्देत सर्वपापैश्च मुच्यते ॥१६॥
पूर्वा संध्या तु गायत्री सावित्री मध्यमा स्मृता ।
या भवेत् पश्चिमा संध्या सा विज्ञेया सरस्वती ॥१७॥
रक्ता भवति गायत्री सावित्री श्वेतवर्णिका ।
कृष्णा सरस्वती ज्ञेया संध्यास्तिस्र उदाहृताः ॥१८॥
त्रयाणां चैव देवानां संगमस्तूभयोर्भवेत् ।
मध्यमायां च संध्यायां सर्वदेवसमागमः ॥१९॥
संधिः सर्वसुराणां च तेन संध्या उदाहृता ।
गरीयसी हि भूतानां तस्मात्यैत्री(त्रैती) तनुर्हि सा ॥२०॥
संधिते तु परे सूक्ष्मे निर्गुणे गुणबोधिनी ।
प्रधानपुरुषातीते सा संध्या संधिरुच्यते ॥२१॥
अनूदकी तु या संध्या लेपस्नेहविवर्जिता ।
संधिनी सर्वभूतानां शोधिनी भवनाशिनी ॥२२॥
हृद्याकाशगता सूक्ष्मा आदित्यरश्मिरेखया ।
सोमसूर्याग्निसंस्कृत्या अण्डं भित्त्वा विनिर्गता ॥२३॥
बद्धमेतं सुषुम्णायां दीर्घघण्टानिनादवत् ।
ईश्वरं मनसा ध्यायेदेषा संध्या अनूदकी ॥२४॥
संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ ।
संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ॥२५॥

उभे संध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः ।
तिसृष्वपि च संध्यासु स्नातव्यं ब्रह्मवादिना ॥२६॥
कालदोषादसामर्थ्यान्नशक्नोति यदा ह्यसौ ।
तदाऽऽज्ञातो ऋषिभ्यस्तु मन्त्रैर्दृष्टैस्तु मार्जनम् ॥२७॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणः ।
एतैश्चतुर्भिर्मन्त्रैस्तु मन्त्रस्नानमुदाहृतम ॥२८॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
अघमर्षणसूक्तेन अश्वमेधावभृत्समम ॥२९॥
अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत् ।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं स्मृतम् ॥३०॥
एतच्छ्रुत्वा तु वचनं याज्ञवल्क्यस्य धीमतः ।
ऋषयः संयतात्मानः पृच्छन्ति स्नाननिर्णयम ॥३१॥

इति श्रीबृहद्योगियाज्ञवल्क्ये संध्यानिर्णयो (नाम)
षष्ठोऽध्यायः ॥६॥

# सप्तमोऽध्यायः

## स्नानविधिवर्णनम

स्नानमब्दैवतैर्मन्त्रैर्यन्त्वयोक्तं पुराऽनघ।
तदाचक्ष्व विशेषेण स्नानस्य तु विधिं प्रभो॥ १॥
तांस्तु प्रोवाच प्रीतात्मा याज्ञवल्क्यो महामुनिः।
शृणुध्वं वक्ष्यते स्नानं सर्वपापहरं शुभम ॥ २॥
मृद्गोमयतिलान दर्भान पुष्पाणि सुरभीणि च।
आहरेत स्नानकाले तु स्नानार्थी प्रयतः शुचिः॥ ३॥
गत्वोदकान्तं विधिवत् स्थापयेत तत्र पृथक् क्षितौ।
त्रिधा कृत्वा मृदं तां तु गोमयं च विचक्षणः॥ ४॥
उत्तमाधममध्यानामङ्गानां क्षालनं च तैः।
भागैः पृथक् पृथक् कुर्यात् क्षालने मृद्संकरः॥ ५॥
प्रभूते विद्यमाने तु उदके सुमनोहरे।
नाल्पोदके द्विजः स्नायान्नदींश्चो(चो)त्सृज्य कृत्रिमे॥६॥
मृद्भिरद्भिश्च चरणौ प्रक्षाल्याचम्य वै शुचिः।
उरुं हीति ऋचा तोयमुपस्थाय प्रदक्षिणम्॥ ७॥
आवर्तयेत्तदुदकं ये ते शतमिति ह्यृचा।
सुमित्रिया इत्यञ्जलिमुद्धरेद्दैवतं स्मरन ॥ ८॥
दुर्मित्रिया इति द्वि(द्वे)ष्यं ध्यायंश्चापः प्रसेचयेत।
मृद्भिरद्भिश्च गात्राणि क्रमशस्त्ववनेजयेत्॥ ९॥

एकया च शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
कटिबस्त्यूरुजङ्घं च चरणौ च त्रिभिस्त्रिभिः ॥१०॥
प्रक्षाल्य हस्तौ चाचम्य नमस्कृत्य जलं ततः ।
यत्किंचिदिति मन्त्रेण नमस्येत प्रयताञ्जलिः ॥११॥
यत्र स्थाने च यत्तीर्थं नदी पुण्यतमा च या ।
तां ध्यायन् मनसाऽऽवाह्य अन्यत्रेष्टं विचिन्तयेत् ॥१२
गङ्गादिपुण्यतीर्थानि कृत्रिमादिषु संस्मरेत ।
उदुत्यमिति प्रविशेज्जलं तु प्राङ्मुखं शुचिः ॥१३॥
येन देवाः पवित्रेति कुर्यादालम्भनं त्रिभिः ।
महाव्याहृतिभिः पश्चादाचम्य प्रयतोऽपि सन ॥१४॥
आलभेद्वै मृदाङ्गानि इदं विष्णुरिति त्र्यृचा ।
भास्कराभिमुखो मज्जेदापो अस्मानिति त्र्यृचा ॥१५॥
ततो निघृष्य गात्राणि निमज्योन्मज्य वै शनैः ।
गोमयेन तु यः स्नायादापादतलमस्तकम् ॥१६॥
स स्नातः सर्वतीर्थेषु पूतः संवत्सरं भवेत ।
आचम्य गोमयेनातो मानस्तोक्या समालभेत ॥१७॥
ततोऽभिषिञ्चेन्मन्त्रैस्तु वारुणैश्च यथाक्रमम् ।
इमं मे वरुणेत्यृग्भ्यां त्वन्न मत्वन्न इत्यपि ॥१८॥
इदमापउदुत्तममित्येतन्मुञ्चन्त्ववभृथेति च ।
अभिषिच्य तथाऽऽत्मानं निमज्याचम्य वै पुनः ॥१९॥
दर्भैश्च पावयेन्मन्त्रैरब्लिङ्गैः पावनैः शुभैः ।
आपोहिष्ठेति तिसृभिरिदमापो हविष्मतीः ॥२०॥

देवीराप इति द्वाभ्यामापो देवा इति त्र्यृचा ।
द्रुपदादिव इत्यृचा शन्नोदेवीरपां रसम् ॥२१॥
आपो देवीति नवभिः पावमानीभिरेव च ।
पुनन्तु मायि (पि) नर इति पावमानीः प्रयोजयेत् ॥२२॥
चित्पतिर्मेति च शनैः पाव्यात्मानं समाहितः ।
हिरण्यवर्णा इति च पावमान्यस्तथाऽपराः ॥२३॥
तरत्समाः शुद्धवत्यः पवित्राणि च शक्तितः ।
वारुणीश्च ऋचः सूक्तं शक्तितश्च प्रयोजयेत् ॥२४॥
जलमध्यस्थितो विप्रः शुद्धभावो हरिं स्मरेत् ।
ओंकारेण व्याहृतिभिर्गायत्र्या च समाहितः ॥२५॥
आदावन्ते च कुर्वीत अभिषेके यथाक्रमम् ।
अपां मध्ये स्थितस्यैवं मार्जनं तु विधीयते ॥२६॥
अन्तर्जले जपेन्मग्नस्त्रिः कृत्वस्त्वघमर्षणम् ।
द्रुपदां वा त्रिरभ्यस्येदायं गौरिति वा जपेत् ॥२७॥
हंसः शुचिषदिति च त्रिरावर्त्य जपेदथ ।
अन्यानि चैव सूक्तानि स्मार्तदृष्टान्यनुस्मरेत् ॥२८॥
सव्याहृतिं सप्रणवां गायत्रीं त्रिर्जपेदथ ।
आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥२९॥
विष्णोरायतनं ह्यापः स एवाप्य(प्यो) निरुच्यते ।
तस्यैव सूनवस्त्वेतास्तस्मात्तं ह्यप्सु संस्मरेत् ॥३०॥
नरादापः प्रसूता वै तेन नारा इति स्मृताः ।
ता एवास्यायनं ह्यापस्तस्मान्नारायणः स्मृतः ॥३१॥

यं (यो) हि व्रतानां वेदानां यमस्य नियमस्य च ।
भोक्तारं यज्ञतपसां ध्यायिनां ध्येयमेव च ॥३२॥
ध्यायेन्नारायणं देवं नित्यं स्नानादिकर्मसु ।
प्रायश्चित्त्यपि सर्वस्माद्दुष्कृतान् मुच्यते पुमान् ॥३३॥
प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥३४॥
तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः ।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥३५॥
पादेन पाणिना वापि यष्ट्या वस्त्रेण वोदकम् ।
न हन्यान्नैव रुन्धीत न च प्रक्षोभयेद्द्विजः ॥३६॥
न कुर्यात् कस्यचित् पीडां मनोवाक्कायकर्मभिः ।
आचरन्नाऽभिषेकं च कर्माण्यन्यानि नाचरेत् ॥३७॥
स्नात्वैवं वाससी धौते अक्लिष्टे परिधाय च ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥३८॥
अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासा येन वै भवेत् ॥३९॥
यावद्देवान् ऋषींश्चैव पितॄंश्चापि न तर्पयेत् ।
तावन्नपीडयेद्वस्त्रं येन स्नातो न चोदके ॥४०॥
निष्पीडयति यः पूर्वं स्नानवस्त्रं तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवाः महर्षिभिः ॥४१॥
न क्लिन्नवासाः स्थलगो जपादीन्याचरेद्बुधः ।
वस्त्रनिष्पीडनं प्रेताः परिचार्य पिबन्ति हि ॥४२॥

व्रतादृते नार्द्रवासा नैकवासाः समाचरेत् ।
न जीर्णेन न नीलेन परिक्लिष्टं न वा जपेत् ॥४३॥

वस्त्रनिष्पीडनं तोयं स्नातस्योच्छिष्टभागिनः ।
भागधेयं श्रुतिः प्राहः तस्मान्निष्पीडयेत् स्थले ॥४४॥
पूर्वं निष्पीडनं केचित् प्राग्देवपितृतर्पणात् ।
स्नानवस्त्रस्य नेच्छन्ति तस्मात् पूर्वं न पीडयेत् ॥४५॥

अन्नप्रकरवत्तस्य अपसव्येन पीडयेत् ।
पीडयित्वा ततः पश्चाज्जपं कुर्यात् सुविस्तरम् ॥४६॥

उदके चोदकस्थस्तु स्थलस्थः स्थलके शुचिः ।
पादौ स्थाप्योभयत्रैव आचम्योभयतः शुचिः ॥४७॥

यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥४८॥
आचान्तः पुनराचामेन्मन्त्रवत् स्नानभोजने ।
द्रुपदां वा त्रिरावर्त्य तथाचैवाघमर्षणम् ॥४९॥

गायत्रीं वा त्रिरावर्त्य महाव्याहृतिभिस्तथा ।
सोपांशु प्रणवेनापि आपः पीता अघापहाः ॥५०॥
आचम्य पाठ्य चात्मानं निरायाम्य (त्रिरायम्य)
शनैरसून् ।
अथोपतिष्ठेदादित्यमूर्ध्वं पुष्पान्वितं जलम् ॥५१॥

प्रक्षिप्योद्वयमुदुत्यं चित्रं तच्चक्षुरित्यपि ।
हंसः शुचिषदेतानि शुभानि पावनानि च ॥५२॥

एतज्जपेदूर्ध्वबाहुः सूर्यमीक्षन समाहितः ।
गायत्र्या तु यथाशक्ति चोपस्थाय दिवाकरम ॥५३॥
विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य तु ।
शिवसंकल्पेन तथा मण्डलब्राह्मणेन तु ॥५४॥
दिवा कीर्त्यैस्तथान्यैश्च सौरैर्मन्त्रैश्चशक्तितः ।
जपयज्ञोऽपि कर्तव्यः सर्ववेदप्रणीतकैः ॥५५॥
पवित्रैर्विविधैश्चान्यैर्गुह्योपनिषदा तथा ।
अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये ॥५६॥
प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु दर्भपाणिः स्यात प्राङ्मुखस्तु कृताञ्जलिः ॥५७॥
स्वाध्यायं च यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ।
आदावारभ्य वेदं तु स्नात्वोपर्युपरिक्रमात ॥५८॥
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः ।
आकेशादानखाग्राच्च परं संतप्यते तपः ॥५९॥
यस्तु सम्यक् द्विजोऽधीते स्वाध्यायं शक्तितोन्वहम् ।
ऋचं यजुर्वा साम वा गाथां ह्याामथापि वा ॥६०॥
ततः संतर्पयेद्देवानृषीन् पितृगणांस्तथा ।
संवत्सरं सावयवं देवीरप्सरसस्तथा ॥६१॥
ब्रह्माणं तर्पयेत पूर्वं विष्णुं रुद्रं प्रजापतिम् ।
तथा देवानुगान नागान सागरानपि पर्वतान ॥६२॥
सरितः सरसीश्चैव यक्षान रक्षांसि मानुषान् ।
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ॥६३॥

वनस्पतीनोषधींश्च भूतग्रामं चतुर्विधम ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम ॥६४॥
प्रचेतसं वशिष्ठं च भृगुं नारदमेव च ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥६५॥
कपिलश्चासुरिश्चैव वोढु पञ्चशिखस्तथा ।
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्तिताः ॥६६॥
ब्रह्माद्यानुपवीती तु देवतीर्थेन तर्पयेत ।
निवीती कायतीर्थेन मनुष्यान सनकादिकान् ॥६७॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥६८॥
आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान शुचीन् ।
प्रागग्रेषु सुरान सर्वान दक्षिणाग्रेषु वै पितृन ॥६९॥
नासनस्तु (आसीनस्तु) स्वधाकारैर्गोत्रेण तु समाहितः ।
दक्षिणे पितृतीर्थेन पितृणा तृप्तिमावहन् ॥७०॥
सव्यं जानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान पितृगणांस्तथा ॥७१॥
मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः ।
प्राचीनावीत्युदकं च प्रसिञ्चेद्वै तिलान्वितम ॥७२॥
यद्युद्धृतं निषिञ्चेत्तु तिलान संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥७३॥
दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि ।
दक्षिणेनैव गृह्णीयात पितृतीर्थसमीपतः ॥७४॥

पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे ।
ब्राह्मं दैवं तथा पैत्रं प्राजापत्यं तु सौमिकम् ॥७५॥
अङ्गुष्ठमूले ब्राह्मं तु दैवं ह्यङ्गुलमूर्धनि ।
प्राजापत्यं तु मूले स्यात् मध्ये सौम्यं प्रतिष्ठितम् ॥७६॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्तितम् ।
तिलानामप्यभावे तु सुवर्णं रजतान्वितम् ॥७७॥
तदभावे निषिञ्चेत्तु दर्भमंत्रेण वाग्यतः ।
कव्यवाडनलः सोमो यमश्चैवार्यमा तथा ॥७८॥
अग्निष्वात्तान् सोमपाश्च तथा बर्हिषदः पितॄन् ।
यदि स्याज्जीवत्पितृक एतान् दिव्यान् पितॄंस्तथा ॥७९॥
येभ्यो वापि पिता दद्यात् कामतस्तांस्तु तर्पयेत् ।
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ॥८०॥
वसून् रुद्रांस्तथादित्यान् नमस्कारस्वधान्वितान् ।
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ॥८१॥
आचार्यांश्च पितॄंश्चैव पितृप्रभृतिनामतः ।
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्धनम् ॥८२॥
उदीरतामङ्गिरस आयं त्वित्यूर्जमित्यपि ।
पितृभ्यश्चापि ये चेह मधुवाता इति त्र्यृचम् ॥८३॥
पितॄन् ध्यायन् प्रसिञ्चेद्वै जपन् मन्त्रान् यथाक्रमम् ।
तृप्यध्वमिति च त्रिर्वै दद्याच्च सलिलाञ्जलिम् ॥८४॥
नमो व इति जप्त्वा वै ततो मातामहान् सखीन् ।
तर्पयेदानृशंस्यार्थं धर्मं परममास्थितः ॥८५॥

मातृर्मातृष्वसृ. श्वश्रूर्मातुलानि (नीं) पितृष्वसृः ।
दुहितृं(तृ)श्च स्वसृं(सृ)श्चैव ज्ञात्यृन्विचिन्त्यबान्धवान ८६
नामतस्तु स्वधाकारैस्तर्पयेदनुपूर्वशः ।
सवर्णेभ्यो जलं देयं नासवर्णे कथंचन ॥८७॥
पूर्वजांश्च पितृंस्तर्प्य ततोन्येषां प्रदीयते ।
नास्तिक्यभावाद्यश्चापि न तर्पयति वै पितृन् ॥८८॥
पिबन्ति देहनिःस्त्रावं पितरोऽस्य जलार्थिनः ।
तस्मात् स्नानं प्रशंसन्ति श्रद्धयाऽश्रद्धयापि वा ॥८९॥
विदित्वैव सदा स्नायात् विधिनानेन नित्यशः ।
कुर्यादहरहः श्राद्धमन्नाद्यं नोदकेन वा ॥९०॥
तृप्त्यर्थं वै पितृणां तु आत्मनः श्रेय इच्छता ।
यदेव तर्पयेदद्भिः पितृन स्नात्वा द्विजोत्तमः ॥९१॥
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ।
निष्पीड्य स्नानवस्त्रं तु आचम्य प्रयतः शुचिः ॥९२॥
सुराणामर्चनं कुर्याद्ब्रह्मादिनाममत्सरः ।
ब्राह्मवैष्णवरौद्रैश्च सावित्रैर्मैत्रवारुणैः ॥९३॥
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वान देवान समाहितः ।
ध्यात्वा प्रणवपूर्वं तु दैवतं तु समाहितः ॥९४॥
नमस्कारेण पुष्पाणि विन्यसेच्च पृथक् पृथक् ।
आवाहनादिकं कर्म यन्न प्रोक्तं मया त्विह ॥९५॥
तत् सर्वं प्रणवेनैव कर्तव्यं चक्रपाणिनः ॥९६॥

दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥९७॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः।
तस्मान् पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥९८॥
विष्णुं वा भास्करं वापि सर्वदैव समर्चयेत्।
सावित्र्यै च हविर्दद्यात् यथाशक्ति समाहितः ॥९९॥
ततोवलोकयेदर्कं हंसः शुचिषदित्यृचा।
स याति ब्रह्मसदनं स्नात्वेक्षेद्योनया रविम् ॥१००॥
अदृश्रमस्येति मन्त्रैरुपस्थाय दिवाकरम्।
संवर्चसेति पाणिभ्यां तोयेनाविमृजेन्मुखम् ॥१०१॥
स्वयंभूरित्युपस्थाय सूर्यस्येति प्रदक्षिणा।
समावृत्य नमस्कुर्याद्दिशो दिग्देवता अपि।
ब्रह्मणेग्नये पृथिव्यै औषधिभ्यस्तथैव च ॥१०२॥
वाचि (चे च) वाचस्पतये विष्णवे महते तथा।
एताभ्यो देवताभ्यश्च नमस्कारादि वै जलम् ॥१०३॥
दत्त्वा नमस्येत् क्रमशस्त्वन्ते वै सर्वकर्मणाम्।
नमोऽद्भ्यो नमोऽपांपतये वरुणाय नमो नमः ॥१०४॥
इत्युक्त्वापो नमस्कृत्यावनौ देवांश्च नामतः।
इदमापः प्रवहता(त) धाम्नो धाम्नस्तथैव च ॥१०५॥
एवं संपूज्य देवेशं क्षणं ध्यात्वा निरञ्जनम्।
विमोचनार्थं तीर्थस्य आप्यायस्वेति वै जपेत् ॥१०६॥

देवा गातुविद इति कृत्वा जप्यनिवेदनम् ।
प्रक्षाल्य तीर्थदेशं तु गत्वा स्वं कर्म आचरेत् ॥१०७॥
उपस्थानादिर्यस्तासां मन्त्रवान् कीर्तितो विधिः ।
निवेदनान्तं तत्र स्नानमित्याहुर्ब्रह्मवादिनः ॥१०८॥
परकीयनिपानेषु यदि स्नायात् कदाचन ।
सप्त पिण्डान् समुद्धृत्य ततः स्नानं समाचरेत् ॥१०९॥
अनुद्धृत्य तु यः स्नायात् परकीयजलाशये ।
वृथा भवति तत्र स्नानं कर्तुः पापेन लिप्यते ॥११०॥
स्रवन्त्यादिष्वथाचम्य सोपानत्को ह्यसंस्पृशन् ।
आगतः सोदपात्रस्तु यत्नेन शुचिरेव सः ॥१११॥
तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे ।
ततः कर्माणि कुर्वीत नित्यं वै यानि कानि चित् ॥११२॥
पात्रादिरहितं तोयमुद्धृतं सव्यपाणिना ।
न तेनाभ्युक्षणं कुर्याद्वस्त्रनिष्पीडनेन च ॥११३॥
सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्तितम् ।
तदलाभे मृदं पात्रं स्रवते यन्न धारितम् ॥११४॥
स्नात्वैवं सर्वभूतानि तर्पयेद्योन्वहं द्विजः ।
स गच्छति परं स्थानं तेजोमूर्तिरनामयम् ॥११५॥
स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् ।
तस्मात् स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्धनम् ॥११६॥
प्रातरुत्थाय यो विप्रः संध्यास्नायी सदा भवेत् ।
सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥११७॥

उपस्युषसि यत् स्नानं संध्यास्वनुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥११८॥
त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥११९॥
वृथा उष्णोदकस्नानं वृथा जप्यमवैदिकम् ।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥१२०॥
अस्नात्वा नाचरेत् कर्म जपहोमादि किंचन ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥१२१॥
क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां गच्छन्त्युत्तमान्यधमैः सह ॥१२२॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥१२३॥
तस्मात् प्रातः प्रशंसन्ति स्नानमेव हि नित्यशः ।
कालमालम्ब्य कर्तव्यं मध्यमे सवने तथा ॥१२४॥
सवनत्रयं तु यः कुर्यात् स्नानमेव हि नित्यशः ।
स गच्छति परं स्थानं ब्रह्मणः सदनं द्विजः ॥१२५॥
मनः प्रसादजननं रूपसौभाग्यवर्धनम् ।
शोकदुःखप्रहन्तृ स्नानमोजःप्रह्लादनं तथा ॥१२६॥
स्नानहोमजपातिथ्यं नाचरेच्छक्तिमांस्तु यः ।
वृथा हि जीवितं तस्य परलोकात् स हीयते ॥१२७॥
स्नानं दानं जपो ध्यानं पितृदेवार्चनं तथा ।
पावनानि मनुष्याणां दुष्कृतस्येह कर्मणः ॥१२८॥

जपस्येह विधिं वक्ष्ये यथा काय विधानतः ।
ये पाकयज्ञाश्चन्वारो विधियज्ञसमन्विताः ॥
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम ॥१२९॥
जप्येनैव हि संसिध्येत ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥१३०॥
न च क्रमन्न विहसन्न पार्श्वमवलोकयन ।
ना(नो)पाश्रितो न जल्पंश्च न प्रावृत्य शिरस्तथा ॥१३१॥
न पदा पदमाक्रम्य न चैव हि यथा करे(रौ) ।
न चासमाहितमना न च संश्रावयन जपेत ॥१३२॥
प्रच्छन्नानि च दानानि ज्ञानं च निरहङ्कृतम ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम ॥१३३॥
मानसः शान्तिकजप उपांशुः पौष्टिकः स्मृतः ।
सशब्दश्चाभिचारश्च जपस्तु त्रिविधः स्मृतः ॥१३४॥
तिष्ठंश्चेद्वीक्ष्यमाणोऽर्कमासीनः प्राङ्मुखो जपेत ।
प्रागग्रेषु कुशेष्वेवमासीनश्चासने शुभे ॥
नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयतः ॥१३५॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥१३६॥
स्फाटिकेन्द्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः ।
अक्षमाला तु कर्तव्या प्रशस्ता ह्युत्तरोत्तरा ॥१३७॥
कोट्या स्यात्तु भवेद्वृद्धिरनन्ता चात्र संज्ञया ।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठा परा परा ॥१३८॥

अभावादक्षमालाया: कुशग्रन्थाऽथ पाणिना ।
जप एव हि कर्त्तव्य एकाग्रमनसा तथा ॥१३९॥
ध्यायेच्च मनसा मन्त्रं जिह्वौष्ठौ न विचालयेत् ।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥१४०॥
यक्षराक्षसभूतानि सिद्धविद्याधरोरगाः ।
हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत् ॥१४१॥
जलान्ते वाग्न्यगारे वा जपेद्देवालये तथा ।
पुण्यतीर्थे गवां गोष्ठे सिद्धक्षेत्रेऽथवा गृहे ॥१४२॥
गृहे ह्येकगुणं प्रोक्तं नद्यां तु द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यगारे दशाधिकम् ।
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च संनिधौ ।
सहस्रं शतकोटीनामनन्तं विष्णुसंनिधौ ॥१४३॥
शाकयावकभैक्ष्याणि पयोमूलफलानि च ।
विसश्रृङ्गाटशालूक ( कं ) हविष्यान्नानि यानि तु ।
दधि सर्पिस्तथा ह्यापः प्रशस्ता ह्युत्तरोत्तरम् ॥१४४॥
चरवो ह्युपवासश्च भैक्ष्यं नक्तमयाचितम् ।
एतान्येव व्रतान्याहुः शस्तानि जपकर्मणि ॥१४५॥
जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेष्वेवावशक्तं तु यद्यागच्छेद्द्विजोत्तमः ।
अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत् ॥१४६॥
स्त्रीशूद्रपतितांश्चैव पाषण्डिनं रजस्वलाम्॥
जपकाले न भाषेत व्रतहोमादिकेषु च ॥१४७॥

यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥१४८॥
तूष्णीमासीत तु जपंश्चाण्डालपतितादिकान् ।
दृष्ट्वा तीर्थमुपस्पृश्य भाष्य स्नात्वा पुनर्जपन् ॥१४९॥
आचम्य प्रयतो भूत्वा जपेदशुचिदर्शने ।
सौरान मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ॥१५०॥
रौद्रपित्र्यासुरान मन्त्रान राक्षसानाभिचारिकान् ।
व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत् ॥१५१॥
एतान् व्याहृत्य रौद्रादीनस्पृष्ट्वाऽशं जलं द्विजः ।
ऊर्ध्वं यत् कुरुते कर्म तद्भवत्ययथायथम् ॥१५२॥
स्पर्शनाद्भिर्दूपिनाभिरुद्ध ताभिश्च मानवः ।
स्नानमाचरनुष्णाभिर्न विशुद्ध्यति कर्हिचित् ॥१५३॥
अग्राह्यास्त्वग्रिमा ह्यापो नद्याः प्रथमवेगगाः ।
प्रक्षोभिताश्च केनापि याश्च तीर्था द्विनिः स्मृताः ॥१५४॥
अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात् पापान्मुच्यते स्नानमाचरन ॥१५५॥
प्रकर्तुमसमर्थश्चेत जुहोतियजतिक्रियाः ।
स्नानध्यानजपैर्होमैरात्मानं शोधयेद्बुधः ॥१५६॥
यदैव कुरुते स्नानं विशुद्धेनान्तरात्मना ।
तेनैव सर्वमाप्नोति विधिं यज्ञक्रियाफलम् ॥१५७॥
ब्रह्मक्षत्रविशां चैव मन्त्रवत स्नानमिष्यते ।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥१५८॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दमः शमार्जवं दानं सर्वेषां धर्मसाधनम् ।
गृहीत्वा यमधनुर्वै नियमज्याततं दृढम् ।
संदधीत दमशरं स्वर्गलक्ष्ये प्रयत्नतः ॥१५९॥
यस्येदमायुधं नास्ति स्वर्गसाधनमुत्तमम् ।
अपि जन्मसहस्रेण न साधयति तत् परम् ॥१६०॥
एष वोऽभिहितः कृत्स्नः स्नानस्य परमो विधिः ।
गुणाश्च तस्याऽऽचरतो दोषाश्चैवानिषेवणात् ॥१६१॥
असामर्थ्याच्छरीरस्य कालशक्त्यपेक्षया ।
मन्त्रस्नानादिकान् सप्त केचिदिच्छन्ति सूरयः ॥१६२॥
मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥१६३॥
आपोहिष्ठेति वै मन्त्रं मृदालम्भश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥१६४॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणं चावगाहस्तु मानसं विष्णुचिन्तनम् ॥१६५॥
शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु ।
कालदोषादसामर्थ्यात् सर्वं तुल्यफलं स्मृतम् ॥१६६॥
मानसं प्रणवस्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः ॥१६७॥
योऽसौ विस्तरशः प्रोक्तः स्नानस्य विधिरुत्तमः ।
अशक्तस्तु न कुर्याद्वै तत्रायं विधिरुच्यते ॥१६८॥

स्नानमन्तर्जले चैव मार्जनाचमने तथा ।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥१६६॥
अघमर्पणसूक्तेन त्रिरावृत्तेन नित्यशः ।
अन्यांश्च वारुणान मन्त्रान कामतः संप्रयोजयेत् ॥१७०॥
यथाकालं यथादेशं ज्ञात्वा ज्ञात्वा विचक्षणः ।
स्नानाचरणमित्येतत समुद्दिष्टं महात्मभिः ।
वारुणानथवा मन्त्रान कामतः संप्रयोजयेत ॥१७१॥
अघमर्पणसूक्तस्य ऋषिश्चैवाघमर्पणः ।
अनुष्टुप् च भवेच्छन्दो भाववृत्तं च दैवतम ॥१७२॥
अश्वमेघावभृथके विनियोगस्तु कल्पितः ।
सर्वपापापनोदार्थं स्मृतिकारैरुदाहृतम ॥१७३॥
ननु भूताण्डपिण्डस्य स्थित्युत्पत्तिलयं तथा ।
सूक्तेऽस्मिन व्याहृतं सर्वमेतन्मन्त्रार्थमस्य वै ॥१७४॥
हत्वा लोकानपीमांस्त्रींस्त्रिः पठेदघमर्पणम ।
यथाश्वमेधावभृथमेवं तन्मनुरब्रवीत् ॥१७५॥
अहं तु परमेत्युक्तस्त्रिरह्नो ह्युपपन्नयः । (?)
मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्पणम ॥१७६॥
यथाश्वमेधः क्रतुराट् सर्वपापप्रणोदनः ।
तथाऽघमर्पणं सूक्तं सर्वपापप्रणोदनम् ॥१७७॥
सिंधुद्वीपो भवेदार्पं गायत्री छन्द एव हि ।
आपस्तु दैवतं प्रोक्तं विनियोगस्तु मार्जने ॥१७८॥

सर्वत्र मार्जनं कर्म अब्लिङ्गानामुदाहृतम् ।
कोकिलो राजपुत्रश्च द्रुपदामार्षमुच्यते ॥१७९॥
अनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम ।
सौत्रामण्यवभृथके स्नाने तद्विनियोजनम ॥१८०॥
द्रुपदा नाम सावित्री यजुर्वेदे प्रतिष्ठिता ।
अन्तर्जले त्रिरावर्त्य ब्रह्महत्यां व्यपोहति ॥१८१॥
आपः पुण्याः समादाय त्रिः पठेद्द्रुपदामृचम् ।
तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥१८२॥
एवं ज्ञात्वा तु मन्त्राणां विनियोगं द्विजोत्तमाः ।
संध्यां यद्वदुपासीत तथा सर्वं निबोधत ॥१८३॥
ऐशान्यभिमुखो भूत्वा शुचिः प्रयतमानसः ।
आचान्तः पुनराचामेदृतमित्यभिमन्त्र्य च ॥१८४॥
आन्तरं शुध्यति ह्येवमन्नपानमलीकृतम ।
त्रिरावर्त्य तु सावित्रीं प्रणवं व्याहृतीस्तथा ॥१८५॥
मार्जनं च तथा कृत्वा आपोहिष्ठेति मार्जयेत् ।
सार्धामृचं तु प्रक्षिप्य ऊर्ध्वं साद्धामधः क्षिपेत् ॥१८६॥
अधोभागविसृष्टाभिः कलुषं याति संक्षयम् ।
सर्वतीर्थाभिषेकश्च ऊर्ध्वं संमार्जनाद्भवेत ॥१८७॥
अघमर्षणसूक्तेन मार्जनं कारयेत्ततः ।
शन्न आपश्च द्रुपदां कामतः संप्रयोजयेत् ॥१८८॥
ओंकारपूर्वां गायत्री अब्लिङ्गान्यघमर्षणम ।
ज्ञातव्यं ब्रह्म चैतद्धि पुरा दृष्टं स्वयंभुवा ॥१८९॥

एवं समार्जनं कृत्वा बाह्यशुद्ध्यर्थमात्मनः।
अथाभ्यन्तरशुद्ध्यर्थं प्राणायामान समाचरेत् ॥१६०॥

इति श्रीबृहद्योगियाज्ञवल्क्ये स्नानतर्पणसंध्योपासन-
जपादिविधि (निर्णयो नाम) सप्तमोऽध्यायः ॥७॥

---

# अथ अष्टमोऽध्यायः

## प्राणायामवर्णनम्

अत ऊर्द्ध्वं प्रवक्ष्यामि प्राणायामस्य लक्षणम्।
प्रत्याहारं तथा ध्यानं यथावदनुपूर्वशः।
उच्यमानं निबोधध्वं संक्षेपेण द्विजोत्तमाः ॥१॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥२॥

गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम्।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥३॥
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च।
प्रत्योंकारसमायुक्तं तत्सवितुर्वरेणियम् ॥४॥
ओमापो ज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत् ॥५॥

एष मन्त्रप्रयोगस्त्रिः प्राणायामे निबोधत।
त्रिरावर्तनयोगात्तु प्राणायामस्तु शब्दितः ॥ ६ ॥

त्रिविधं केचिदिच्छन्ति तथा च नवधा परे।
मृदुमध्याधिमात्रत्वादेकैकं त्रिविधं भवेत् ॥ ७ ॥
ओंकारं व्याहृतीः सप्त गायत्री सशिरास्तथा।
प्राणायामोऽयं मनुना वेदेषु कथितः पुरा ॥ ८ ॥
पूरकः कुम्भकश्चैव रेचकस्तदनन्तरम्।
प्राणायामस्त्रिधा ज्ञेयः कनीयोमध्यमोत्तमः ॥ ९ ॥
पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः।
( कन्यसमध्यममुख्या इति त्रयं प्रोच्यते तज्ज्ञैः )॥१०॥
( द्वादशमात्रः प्रथमो मध्यम उक्तस्तथातद्द्विगुणः। )
( उत्तम उक्तस्त्रिगुणः मात्राभेदाः प्रकीर्तितास्तज्ज्ञैः ॥११॥
अङ्गुलिमोक्षत्रितयं जान्वोः परिमार्जनमथापि।
तत् कालत्रयमपि तज्ज्ञा मात्रासंज्ञां प्रशंसन्ति ॥१२॥
गोदोहमन्नपाको वा इषुक्षेपो ह्यथापि वा।
घण्टायाः स्वनितं वाऽपि ह्यतिमात्रा उदाहृताः ॥१३॥
देशकालानुसारेण सेव्यमानः शनैर्यदा।
स्वेदकंपादि जनयेदतिमात्रस्तदा भवेत् ॥१४॥
निरोधकाले प्राणस्य मात्राः संकल्पयेत् कथम्।
तस्मात् स्मृतिप्रतिष्ठं तत् कल्पयित्वा तु योगिभिः ॥१५
आदिप्रयत्नं प्रथमं द्वितीयं यत्र चेतसि।
तृतीयं तु समुद्दिष्टमुद्वयं तमसस्परि ॥१६॥
पूर्वोक्तस्य तु मन्त्रस्य यथासंख्यं प्रकीर्तयेत्।
मात्रायोगा यथोक्तांस्तु कृता एव भवन्ति च ॥१७॥

एतन्मात्राप्रयोगेण प्राणायामत्रयस्य च ।
ग्रहणं धारणोत्सर्गं यथासंख्येन कारयेत् ॥१८॥

बाह्यस्थित नासपुटेन वायु-
माकृष्य तेनैव शनैः समन्तात् ।
नाडीश्च सर्वाः प्रतिपूरयेत्तु
स पूरको नाम मरुन्निरोधः ॥१९॥

न रेचको नैव च पूरकोऽयं
नासाग्रचारी स्थित एव वायुः ।
सुनिश्चितं धार्य यथाक्रमेण
कुम्भाख्यमेतत प्रवदन्ति तज्ज्ञाः ॥२०॥

निष्क्राम्य नासाविवरादशेषं
प्राणं बहिः शून्यमिवानिलेन ।
निरुच्छ्रवसंस्तिष्ठति चोद्ध (रुद्ध)वायुः
स रेचको नाम महानिरोधः ॥२१॥

नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ।
कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः ॥२२॥
नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम ।
चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत ॥२३॥
कुम्भकेन हृदि स्थाने ध्यायेच्च कमलासनम ।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम ॥२४॥
रेचकेनेश्वरं ध्यायेल्ललाटस्थं त्रिलोचनम् ।
शुद्धस्फटिकसंकाशं निर्मलं पापनाशनम ॥२५॥

यदा निरोधसंयोगाद्दैवतात्रयचिन्तन त् ।
अग्न वायोरपां योगादात्मा शुद्धयेत वै त्रिभिः ॥२६॥
निरोधाज्जायते वायुर्वायोरग्निश्च जायते ।
अग्नेरापोभिजायन्ते ततोऽन्तः शुद्धयते त्रिभिः ॥२७॥
सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥२८॥
प्राणायामा ब्राह्मणेन त्रयोऽपि विधिवत् कृताः ।
व्याहृतिप्रणवैः सार्द्ध (र्धं) विज्ञेयं परमं तपः ॥२६॥
दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥३०॥
अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्धयर्थं प्राणायामान् षडाचरेत् ॥३१॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम् ।
प्रत्याहारेण संसर्गान ध्यानेनानीश्वरान गुणान् ॥३२॥
यथा पर्वतधातूनां दोषान् दहति पावकः ।
एवमन्तर्गतं चैनः प्राणायामेन दह्यते ॥३३॥
विरजं चतुर्गुणं कृत्वा नियतात्मा जितेन्द्रियः ।
प्राणायामैश्चतुर्भिस्तु मुच्यते ह्युपपातकात् ॥३४॥
मन्त्रैर्होमैर्मार्जनाभ्युक्षणैश्च प्राणायामैर्योगसिद्धिं जयन्ति ।
निर्धूतपापा विरजा विशुद्धा
योगाग्निना दग्धबीजा व्रजन्ति ॥३५॥

प्राणायामशतं कार्यं सर्वपापप्रणाशनम् ।
उपपातकजातीनामनादिष्टस्य चैव हि ॥३६॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
त्रिकालसंध्याकरणात् प्राणायामैर्व्यपोहति ॥३७॥
ब्रह्महा च सुरापश्च अगम्यागमने रतः ।
सुवर्णस्तेयि चौरश्च गोघ्नो विस्रम्भघातकः ॥३८॥
शरणागतघाती च कूटसाक्षी ह्यकार्यकृत् ।
एवमादिष्वथान्येषु पापेष्वभिरताश्चिरम् ॥३९॥
प्राणायामशतं कुर्युः सूर्यस्योदयनं प्रति ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥४०॥
सूर्यस्योदयनं प्राप्य निर्मला गतकिल्विषाः ।
भवन्ति भास्कराकारा विधूमा इव पावकाः ॥४१॥
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।
श्वपाकेष्वपि भुञ्जानो ध्यायी नैव तु लिप्यते ॥४२॥
पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोऽन्तिकं ।
रेचनेन तृतीयेन प्राप्नुयादैश्वरं पदम् ॥४३॥
न प्राणेनाप्यपानेन वेगाद्वायुं समुत्सृजेत् ।
येन सक्तून् करस्थांश्च प्राणा(ण) योगेन चालयेत् ॥४४॥
शनैर्नासापुटैर्वायुमुत्सृजेन्न च वेगतः ।
न कम्पयेच्छरीरं तु स योगी परमो मतः ॥४५॥
प्राणस्यायमनं कृत्वा आचमेत प्रयतोऽपि सन् ।
आन्तरं स्विद्यते यस्मात्तस्मादाचमनं स्मृतम् ॥४६॥

एवं त्रिविधमुद्दिष्टं प्राणायामस्य लक्षणम् ।
स्मृतिदृष्टं भवेदेतत सिद्धान्ते त्वेतदन्यथा ॥४७॥
मात्राप्रमाणयोगेन प्राणापाननिरोधनात् ।
ओंकारेणैव कर्तव्यः प्राणायामो यथोदितः ॥४८॥
मात्रायोगप्रमाणेन प्रणवं परिचिन्तयेत् ।
मृदुमध्योत्तमत्वाच्च त्रिविधः सोऽपि कथ्यते ॥४९॥
एवं तु त्रिविधं कृत्वा प्राणायामं विधानतः ।
प्रत्याहारं ततः पश्चाच्चिन्तयेत्तन्निबोधत ॥५०॥
वायुर्बाह्यो यथा देहे गृहीतस्तत्र (तः स तु) कोष्ठगः ।
शनैः शनैर्निरोद्धव्यः प्रत्याहारः स उच्यते ॥५१॥
इन्द्रियाणां तु सर्वेषां या वृत्तिस्तु प्रकीर्तिता ।
मनसा प्रतिहर्तव्या प्रत्याहारस्ततः स्मृतः ॥५२॥
सर्वाङ्गाणि यथा कूर्मो दृष्ट्वा संकोचयेत क्षणात् ।
तथेन्द्रियाणीन्द्रियार्थान तानि प्रत्याहरेद्बुधः ॥५३॥
संकल्पोऽध्यवसायश्च अभिमानस्तथैव च ।
तथैव वायवः सूक्ष्मा निरोद्धव्याः प्रयत्नतः ॥५४॥
अतीतानागतेभ्यश्च कामेभ्यस्तु पुनः पुनः ।
एकत्र धारयेत्तस्तु सोऽमृतत्वाय कल्पते ॥५५॥
शतत्रयं तु श्लोकानामष्टात्रिंशाधिकं तथा ।
स्नानस्य निर्णयः प्रोक्तः शिष्याणां हितकाम्यया ॥५६॥

इति श्रीबृहद्योगियाज्ञवल्क्ये प्राणायामप्रत्याहारनिर्णयो
( नाम ) अष्टमोऽध्यायः ॥

# अथ नवमोऽध्यायः

## ध्यानविधिवर्णनम

ध्यानस्य तु विधिं वक्ष्ये शृण्वन्तु ऋषयः सदा ।
एभ्यस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ॥ १ ॥
ध्यानं कृत्वा चतुर्थं तु न भूयो जन्म चाप्नुयात ।
ततः सम्यक् प्रवक्ष्यामि प्राणायामचतुर्थकम ॥ २ ॥
बाह्यस्तु विषयाक्षेपचित्तविक्षेपवर्जितः ।
मानसे विमले शान्ते स्थिरं विष्णुं हृदि क्षिपेत ॥ ३ ॥
तद्ध्यानं तत्तु वै योगो मोक्षमार्गप्रसाधकम ।
ओं भूर्भुवः स्वर्महर्जनस्तपः सत्यमित्येवं ब्रह्मवैदिकम् ॥४॥
एतदुच्चार्य वै विप्रः परे धाम्नि नियोजयेत ।
हृत्पद्मश्चैव वायुश्च जीवेशः समुदाहृतः ॥ ५ ॥
एषां ह्यन्तःशरीरस्थं ओंकारेणोपलक्ष्यते ।
ओंकारं पद्मनालेन उद्धृत्योपरि योजयेत ॥ ६ ॥
आ(अ)प्राणाच्छून्यभूतं तु चेतोज्ञं जीवसंज्ञकम ।
जप(जाय)ते तु यतस्तस्मात पुनस्तत्र निवेशयेत ॥ ७ ॥
घण्टाशब्दवदोंकारमुपासीत समाहितः ।
पुरुषं निर्मलं शुद्धं पश्यत्यत्र न संशयः ॥ ८ ॥
कुण्डलाकृतिसंस्थानं प्रसुप्तोरगसंनिभम ।
तन्मध्ये संस्थितो ह्यात्मा धामात्मा विन्दुलक्षणः ॥ ९ ॥

वक्रं तु भवति ह्यादौ ओंकारं चतुरक्षरम् ।
ऋजुत्वं संप्रपद्यं त पदं प्राप्य तु पञ्चमम् ॥१०॥
मध्यमस्तु भवेद्बिन्दुर्मूर्धन्येवावतिष्ठते ।
तत्र वाचो निवर्तन्ते सर्वे वर्णास्तथैव च ॥११॥
तस्मात् सर्वे प्रसूयन्ते वर्णास्तत्र विशन्ति च ।
वर्णात्मा हीनवर्णस्तु सर्ववर्णेषु जीवनम् ॥१२॥
न घोषं नैव चाघोषं दन्तौष्ठ्यं नैव तालुजम् ।
न मूर्धन्यं च चान्तःस्थं न स्वरं व्यञ्जनं न च ॥१३॥
न कव्यं(ण्ठ्यं) नैव चोष्माणं न वर्गं न विसर्गिणम् ।
जिह्वामूलमुपध्मानमनुस्वारं न चैव हि ॥१४॥
हृद्याकाशनिविष्टस्तु सोऽक्षरत्वं निगच्छति ।
अक्षराणि त्रिषष्टिर्वै स्थानयोगाद्भवन्ति हि ॥१५॥
एतत्तु परमं ध्येयं व्योममध्ये व्यवस्थितम् ।
व्योम्नश्चोपरि मध्यस्थमनन्ताकाशमव्ययम् ॥१६॥
यस्याकाशमयं कोष्ठमनन्तं परमालयम् ।
संयोगश्चेतनोऽस्माकं प्रकाशश्चाग्निसूर्ययोः ॥१७॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१८॥
अन्तरेऽस्मिन्निमे लोका अन्तर्विश्वमिदं जगत् ।
अग्रं च मूलकं ब्रह्म सर्वेषां चान्तरस्थितम् ॥१९॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥२०॥

तस्मादंशं विनिष्क्रान्तं जीवभूतं सनातनम् ।
ब्रह्मणः परमं ब्रह्म ज्योतिषां ज्योतिरुत्तमम् ॥२१॥
हृदये सर्वभूताना जीवभूतः स तिष्ठति ।
स एव भगवान विष्णुर्वेदान्तैरुपगीयते ॥२२॥
ईश्वरं पुरुषाख्यं तु सत्यधर्माणमव्ययम ।
भर्गाख्यं विष्णुसंज्ञा तु यं ज्ञात्वाऽमृतमश्नुते ॥२३॥
हृद्व्योम्नि तपते ह्येष बाह्ये सूर्यस्य चान्तरे ।
अग्नौ ह्यधमके ह्येष ज्योतिश्चित्रतरङ्गवत ॥२४॥
हृद्याकाशे तु यो जीव साधकैरुपगीयते ।
स एवाऽऽदित्यरूपेण वहिस्तम (नभ)सि राजते ॥२५॥
तस्य चान्तर्गतं धाम सूक्ष्मं प्राकाश्यमेव च ।
स चात्मा सर्वभूताना चेतोमात्रस्वरूपकः ॥२६॥
एकधा यो विजानाति ज्ञात्वा चैनमुपासते ।
स परं विद्यते व्योम ब्रह्माणं समुपाश्नुते (?) ॥२७॥
ज्ञानकर्मसमायोगात परम प्रोनि पूरुषम् ।
पृथग्भावे न सिध्येत उभे तस्मात समाश्रयेत ॥२८॥
ज्ञानं प्रधानं न तु कर्महीनं ।
कर्म प्रधानं न तु बुद्धिहीनम् ॥
तस्माद्द्वयोरेव भवेत सिद्धि ।
न ह्येकपक्षो विहगः प्रयाति ॥२६॥
गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
निःसृतं कर्मचरितं पुनस्तस्यैव भेषजम् ॥२०॥

एवं सति शरीरस्थः सर्पिवत् (र्वत्) परमेश्वरः ।
विनाचोपासनाद्देव न करोति हितं नृप ॥३१॥
कर्माणि ह्यविनाशीनि बीजवत् प्रभवन्ति च ।
तानि योगाग्निदग्धानि न प्ररोहन्ति वै पुनः ॥३२॥
एतस्मात् कारणाद्ध्यानं धारणां प्राणसंयमम् ।
कुर्याद्यत्नेन योगज्ञः कर्मसंन्यासचिन्तनम् ॥३३॥
परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कामक्लेशभयाच्चैव कर्म नेच्छन्त्यपण्डिताः ॥३४॥
यमैश्च नियमैश्चैव आसनैः प्राणसंयमैः ।
प्रत्याहारेण ध्यानेन धारणाभिः समाधिना ॥३५॥
अष्टाङ्गेन तु योगेन उपास्यात्मा विमुच्यते ।
अणिमादि तथैश्वर्यं प्रत्यक्षं जायते ध्रुवम् ॥३६॥
प्रणवव्याहृतिभ्यां च सावित्र्या त्रितयेन च ।
उपास्यं त्रितयं ब्रह्म आत्मा ह्यत्र प्रतिष्ठितः ॥३७॥
विद्या जपश्च चिन्ता च एतद्धि त्रितयं स्मृतम् ।
एतेन त्रितयेनाथ उपास्यात्मा विमुच्यते ॥३८॥
प्रणवाद्या भवेद्विद्या प्राणायामस्तपः स्मृतम् ।
ध्यानं च धारणा चैव चिन्ता ह्येषा उदाहृता ॥३९॥
सावित्र्याश्चैव माहात्म्यं ज्ञात्वा चैव यथार्थतः ।
तस्यां यदुक्तं चोपास्य ब्रह्मभूयाय कल्पते ॥४०॥
तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः ।
उदाहृते तु तच्छब्दे यच्छब्द उदितो भवेत् ॥४१॥

देयस्य सवितुर्यश्च भर्गमन्तर्गतं विभुम ।
ब्रह्मवादिन एवाहुर्वरेण्यं तच्च धीमहि ॥४२॥
चिन्तयामो वयं भर्ग धियो यो नः प्रचोदयात ।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥४३॥
बुद्धे र्बोधयिता यस्तु चिदात्मा पुरुषो विराट् ।
सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम ॥४४॥
हिरण्यवर्णं पुरुषं ध्यायेम विष्णुसंज्ञकम ।
भेति भासयते लोकान् रेतिरञ्जयते प्रजाः ॥४५॥
गइत्यागच्छतेऽजस्त्रं भरगा (णा) द्भर्ग उच्यते ।
अग्नीषोमात्मकं बिभ्रद्धै श्वरूपेण कर्मणा ॥४६॥
जगदाधानसिद्ध्यर्थं सूर्यात्मा जगतोऽपि च ।
शश्वत्प्रसूयणात् सूर्यः पावनात पवनः स्मृतः ॥४७॥
आप्यायनात्तु वरुणः श्रेष्ठत्वादिन्द्र एव सः ।
भौमान्तरिक्षं दिव्यं च आ (अ) प आहू
रविन्धनम ॥४८॥
एता गभस्तिभिः पीता दीप्यन्ते रविमण्डले ।
एतैः पर्यायशब्दैस्तु एक एव सदोच्यते ॥४९॥
भ्राजते च यदा भर्गः पुरुषत्वाच्च पूरुषः ।
सर्वात्मा सर्वभावस्तु आत्मा तेन निगद्यते ॥५०॥
तत्सवितुर्वरेण्यं च चेतनात्मा महेश्वरः ।
आ (अ) पः संक्षिप्य सवितुस्ततः सर्गः प्रवर्तितः ॥५१॥

सर्वेषामेव भूतानामापोज्योतिरिहोच्यते ।
भ्रस्ज पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ ॥५२॥
भ्राजते दीप्यते यस्माज्जगदन्ते हरत्यपि ।
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ॥५३॥
भ्राजते स्वेन रूपेण तस्माद्भर्ग इति स्मृतः ।
दीव्यते क्रीडते यस्माद्द्योतते रोचते दिवि ॥५४॥
तस्माद्देव इति प्रोक्तस्तूयते सर्वदैवतैः ।
सविता सर्वभूतानां सर्वभावान् प्रसूयते ॥५५॥
सवनात् पावनाच्चैव सविता तेन चोच्यते ।
वरेण्यं वरणीयं च जन्मसंसारभीरुभिः ॥५६॥
आदित्यान्तर्गतं भर्गः सेव्यते वै मुमुक्षुभिः ।
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ॥५७॥
ध्यानेन पुरुषो यस्तु द्रष्टव्यः सूर्यमण्डले ।
मन्त्रोर्थमपि वेदादौ स्थापयत्येवमेव हि ॥५८॥
हिरण्मयेन पात्रेण सत्यस्याऽपिहितं मुखम् ।
तत्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥५९॥
योऽसावादित्ये पुरुषः सोऽसावहम् ।
कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥६०॥
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ।
भर्गस्तु पुरुषो ह्यात्मा ईश्वराख्यः शुचिस्तथा ॥६१॥
हिरण्यगर्भो विष्णुश्च शुक्लश्चैव ह्यलिङ्गकः ।
ईशिता सर्वभूतानां कर्मदोषाशयैरपि ॥६२॥

न परामृश्यते यस्माद्विशेषादीश्वरः स्मृतः ।
शोधनाच्छुद्धनाच्चैव अक्लिन्नत्वाच्छुचि स्मृतः ॥६३॥
हिरण्मयस्य गर्भोऽभूत् हिरण्यस्य च गर्भजः ।
तस्माद्धिरण्यगर्भेति पुराणे विनिगद्यते ॥६४॥
हैरण्यमण्डं संदीप्तं तपोज्ञानात्तु वै पुरा ।
एकं द्वादशधा गर्भमदितिर्विष्णमजीजनत् ॥६५॥
तस्योल्वा (ल्व) ह्यस्थितो मेरुरुद्गरान् सप्त सिन्धवः ।
पर्वताश्च जरायूस्तथा नद्यो धमनिसंज्ञिकाः ॥६६॥
दिवश्च पृथवी चैव कपाले द्वे व्यवस्थिते ।
मध्येऽन्तरिक्षमभवत् त्रैलोक्यस्यैष संभवः ॥६७॥
एते ह्यण्डकपाले द्वे अपां मध्ये निवेशिते ।
एकोऽधस्तात् समभवत् द्वितीयं नन्दनं वनम ॥६८॥
तन्मध्याद्यः शिशुर्जातो मातण्डः सवितेति सः ।
सर्वाणि चास्य भूतानि ह्युपासन्ते समन्ततः ॥६९॥
एतस्य ब्रह्मणान्यत्तं स्तूयते स(सा) वलो (लौ) किकम ।
रौद्र (द्रं) तेजः स्वकीयं च अग्नीषोमौ तथैव च ॥७०॥
द्वादशानां तु यत्तेजस्तदेकस्य निवेशितम ।
पौरुषं चैव यद्धाम परमं ह्यत्र तिष्ठति ॥७१॥
अमृतं चैव मृत्युश्च प्राकृतं वैकृतं तथा ।
द्विधा गर्भो भवत्येष हिताय जगतोऽस्य च ॥७२॥
वेदाश्चैवात्र चत्वारस्तपन्ते मण्डले स्थिताः ।
ऋग्यजुः साममूर्तिस्तु रश्मयस्तस्य शब्दिताः ॥७३॥

रसानि यानि मेध्यानि रश्मिभिः संप्रकर्षति ।
दिव्या शिवतमा ह्यापः सौम्यास्ताः संभवन्ति हि ॥७४॥
अक्षेत्रेभ्यश्च एतेभ्यो ह्यमेध्याद् गृह्यते रसः (?)
अथर्वाङ्गिरसेभ्यश्च संभवेद्ध कृतं जगत् ॥७५॥
अश्माशनिरवश्याया नागकूष्माण्डराक्षसाः ।
स्तेनास्तेन हि जीवन्ति सौम्येन सुरमानवाः ॥७६॥
अन्नदः सर्वभूतानां भूर्भुवःस्वर्निवासिनाम् ।
दृ [वृ) ष्टिप्रकाशे (शा) वश्यायनीहाराशनिमारुतैः ॥७७॥
तामसान यक्षभूतानि नागकूष्माण्डनैर्ऋतान् ।
तदन्नेन बिभर्त्येकोऽमृतवृष्ट्या चराचरान् ॥७८॥
एष धाता विधाता च ब्रह्मा विष्णुर्महेश्वरः ।
धनदः पावकः कालो वरुणेन्द्रानिलाः शशी ॥७९॥
मित्रो धाता भगस्त्वष्टा पूषार्यमांशुरेव च ।
पर्यायनामभिश्चैष एक एव निगद्यते ॥८०॥
विशनात् सवभूतानां विष्णुरित्यभिधीयते ।
पश्यते सर्वभूतानां कर्म एष शुभाऽशुभम् ॥८१॥
छिन्दते पूर्वदेहस्थं विपाकं वै शुभाऽशुभम ।
तस्माद्धाता विधाता च कीर्त्यते वेदचिन्तकैः ॥८२॥
बृहत्वाद् बृंहणत्वाच्च सामऋग्यजुषां तथा ।
त्रयाणां धारणाच्चैव ब्रह्मा तेन निगद्यते ॥८३॥
रोदनाद्रावणाद्रागाद्रंहणाद्रुद्र उच्यते ।
महानीशश्च भूतानां महेश्वर इति स्मृतः ॥८४॥

सहस्रकरपन्मूर्तिर्दृश्यते सर्वतो यतः।
सर्वस्यैवोपरिष्टस्य पूरणात् पुरुषः स्मृतः ॥८५॥
अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥८६॥
सविता श्रियः प्रसविता धनदस्तेन चोच्यते।
वायुः कर्म च कालौ च शुद्धेः कर्तृणि देहिनाम् ॥८७॥
पावयेद्रश्मिभिः सर्वं पावकस्तेन चोच्यते।
सूर्य आत्मा तु जगतः प्राणाख्यो हृदि संस्थितः ॥८८॥
सर्वात्मा कथ्यते तज्ज्ञैर्जीवभूतः सनातनः।
द्वितीयेन तु रूपेण साक्षिवत्तिष्ठते तु सः ॥८९॥
आदानात् सर्वभूतानामादित्य इति कीर्तितः।
आर्यः स्वाम्यस्य जगतो ह्यर्यमा तेन चोच्यते ॥९०॥
संरक्षिता च भूतानां सविता तेन स स्मृतः।
भगसंज्ञा धनस्योक्ता स ददाति ततो भगः ॥९१॥
विश्वेषां कर्मणां कर्त्ता विश्वकर्मा ततः स्मृतः।
करैर्भासयते विश्वं भास्करस्तेन चोच्यते ॥९२॥
पुष्णाति हि जगत् सर्वं पूषा तेन निगद्यते।
अंशुभिर्व्याप्यते विश्वमंशुस्तेन उदाहृतः ॥९३॥
निमेषादि क्षणः कालस्तस्मादुत्पद्यते यदा (तः)।
कालकर्ता ततो ज्ञेयः कालाख्यो विष्णुरव्ययः ॥९४॥
सहस्रच्छिद्रसंकीर्णे आपो रेतोमया घटे।
हिरण्मयेन्तरे तिष्ठन रविस्तेन निगद्यते ॥९५॥

इडासुषुम्णे द्वे नाड्यौ रश्मिसंज्ञे व्यवस्थिते ।
पाचिकाप्यायिके ह्येते अग्निषोमात्के स्मृते ॥९६॥
एतौ तु पार्श्वगौ ज्ञेयौ पंथानौ ह्यग्निहोत्रिणाम् ।
देवपित्रात्मकौ ह्येतौ शाश्वतौ जगतः समौ ॥९७॥
तयोर्मध्ये अमा ह्येषा यत्र संतिष्ठते शशी ।
कलावशिष्टो भूयोऽपि वृद्धिं गच्छति भास्करात् ॥९८॥
तत्र तत् परमं धाम उद्धेरिव निःसृतम ।
यस्मिंल्लवणवद्योगी विशत्येवैकतां गतः ॥९९॥
सा सूर्ये चैव हृदये परे ब्रह्मणि संस्थिता ।
तया गच्छन्ति विद्वांसो ब्रह्मब्रह्मविदो जनाः ॥१००॥
श्रद्धायुक्ता ये ह्युपासन्ते अरण्ये
शांता विद्वांसो ब्रह्मचर्यं चरन्ति ।
ते सूर्यस्य द्वारेण विरजाः प्रयान्ति
यत्रासौ तिष्ठति पुरुषोऽव्ययात्मा ॥१०१॥
हन्त्यज्ञानं ततो हंस अश्रान्तपरिवर्तनात् ।
एवं पर्यायशब्दैस्तु एक एव निगद्यते ॥१०२॥
ऋग्यजुः साममूर्तिस्तु बिम्बं यस्य त्रयीमयम् ।
ऋग्भिस्तु तपते प्रातर्मध्याह्ने यजुर्भिस्तथा ॥१०३॥
सामभिश्चापराह्णे वै अथर्वाङ्गिरसो निशि ।
ऋचोऽस्य मण्डलं ह्येतत् सामान्यर्चीपि यानि तु ॥१०४॥
यजुः शुक्ला च गुह्या च तनुः सूक्ष्मा च मण्डले ।
यश्च मण्डलमध्यस्थो यं च वेत्थ हुताशने ॥१०५॥

पुरुषं मण्डलान्तस्थं दीप्तिमन्तं हिरण्मयम् ।
ज्वालासहस्रसंकीर्णमग्निरूपं समन्ततः ॥१०६॥
स सूर्ये ज्योतिरित्युक्तं बहिस्तेजो विनिर्गतम ।
पुरुषान्तर्गतं सूक्ष्मं शुक्लाच्छुक्लतरं हि तत ॥१०७॥
भूर्भुवः स्वरिति यः सूर्ये ज्योतिरितीति च ।
अग्निर्हो (हो) त्रतनुर्ह्येष पुरुषाकृतिमण्डले ॥१०८॥
ओमापो ज्योतिरित्येतद्यजुश्चात्र प्रतिष्ठितम ।
अष्टपादं शुभं हंस (सं) त्रिमात्रमजमव्ययम ॥१०९॥
त्रिरात्मानं तैजसं च सर्वं पश्येत्तमव्ययम ।
तस्य तद्धृदयावस्थं ज्योतिः सूर्यः स उच्यते ॥११०॥
शुक्लं तत पुरुषं ज्ञेयमलिङ्गं ज्योतिरूपकम ।
सत्यधर्माण (णं) भर्गं तु ईश्वरं विष्णुसंज्ञकम ॥१११॥
तस्मिन प्रतिष्ठितं सर्वं त्रयस्त्रिशद्गुणं हि तत ।
अग्निमध्यगतं चैव अग्नौ ज्योतिरुदाहृतम ॥११२॥
अग्नावग्निः स एवोक्तस्तस्य चैवात्र हूयते ।
अग्निहोत्रं च सम्प्राप्तं चिन्तयेच्चैकमानसम् ॥११३॥
लेलिह्यमानं संदीप्तं निर्धूमं पावकः (कं) सदा ।
ज्योतिश्चित्रतरं ह्येतत्तद्ग्राह्यं वह्निसंज्ञकम ॥११४॥
तदाऽस्य मध्यगं ध्यायेत पुरुषं चाप्यलिङ्गकम ।
स सत्यज्योतिर्ब्रह्मा च आदित्यश्च निगद्यते ॥११५॥
ब्रह्मभूतं हि संचिन्त्य जुहुयात् सुसमाहितः ।
अवमृज्य ततो हस्तावद्भिरामणिबन्धनात् ॥११६॥

दीर्घं प्रणवमुच्चार्य चित्तं तत्र निवेश्य च।
यजुषा मनसा चैव जुहुयाद्विधिवद् बुधः ॥११७॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥११८॥
ज्योतिषां ज्योतिरित्याहुः सत्यं सत्येषु चैव हि।
ब्रह्मणः परमं ब्रह्म आदित्यादित्य एव हि ॥११९॥
एवं यः कुरुते विप्रः अग्निहोत्रमतन्द्रितः।
शासितं ज्ञानकर्मभ्यामभिसंध्य फलेन च ॥१२०॥
स दग्धकिल्बिषो भूत्वा वैश्वानरसमप्रभः।
विशते पुरुषं दिव्यं शुक्लीभूत्वा ह्यलिङ्गकम् ॥१२१॥
अणिमाद्यैस्तु संयुक्तस्तेनैव सह मोदते।
न च्यवते न व्यथते पुनर्वा जायते न च ॥१२२॥
एवंविधं चिन्तयेत्तु आत्मयज्ञं ह्युपस्थिते।
जीवं वैश्वानरं ध्यायेद्धृदये पद्मसंपुटे ॥१२३॥
उदरे गार्हपत्योऽग्निः पृष्ठदेशे तु दक्षिणः।
आस्ये आहवनीयोऽग्निस्त्रिधा ह्येवं निवेशयेत् ॥१२४॥
शून्योऽग्निः सत्यसंज्ञस्तु मूर्धन्येवाश्रितः सदा।
यः पञ्चाग्नीनिमान् वेद आहिताग्निः स उच्यते ॥१२५॥
केशबर्हि (:) समाच्छन्नमुरोवेद्यां प्रतिष्ठितम्।
चेतोत्माधाममात्रं तु निर्भासं चात्मभासकम् ॥१२६॥
एतद्धि सोममध्यस्थममृतं ज्योतिरूपकम्।
हृदिस्थः सर्वभूतानां चेतनः श्रूयते ह्यसौ ॥१२७॥

पञ्चमण्डलमध्यस्थो द्रष्टव्यो योगचक्षुषा ।
रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ॥१२८॥
तेजोमध्ये स्थितः सत्यः सत्यमध्ये स्थितोऽच्युतः ।
अग्निमध्ये रविस्थानं रविमध्ये च चन्द्रमाः ॥१२९॥
तस्यमध्येकुसं (?) विद्यात्ततः सृष्टिः प्रजायते ।
सूर्यं भित्त्वा यथा चन्द्रश्चन्द्रमाश्च तथामृतम् ॥१३०॥
तत्रस्थं च शुभं वर्णं तद्दृष्ट्वाप्यमृती भवेत् ।
अन्नं प्राणो मनश्चैव विज्ञानानन्द एव च ॥१३१॥
प्राणो व्यानो ह्यपानश्च समानोदान एव च ।
शब्दः स्पर्शस्तदा रूपं रसो गन्धश्च पञ्चमम् ॥१३२॥
पञ्चमध्यगतः षष्ठो भुङ्क्ते देहगतान् गुणान् ॥१३३॥
शब्दादीनां च पञ्चानामुपलब्धिस्तु या स्थिता ।
चेतसा यस्तु गृह्णाति वुद्ध्यवस्थितमीश्वरम् ॥१३४॥
पुरुपाख्यः स विज्ञेयो भो भावः स उच्यते ।
अव्यक्तेन च रूपेण वैश्वानरमुखेन च ॥१३५॥
अन्नं रसमयं कृत्स्नं प्रकृत्याऽऽपादितं च यत् ।
सर्वं प्रत्युपभोगार्थं वर्तते परमात्मनः ॥१३६॥
त्रिविधान्नं त्रिधा भोक्ता वेदितव्यं प्रयत्नतः ।
शरीरमापः सोमश्च त्रिविधं ह्यन्नमुच्यते ॥१३७॥
प्राणस्त्वग्निस्तथाऽऽदित्यस्त्रिभोक्ता एवमेव तत् ।
अमृतं कल्पयित्वा च यदन्नं समुपागतम् ॥१३८॥

प्राणाग्निहोत्रविधिना भोज्यं तद्वदघापहम्।
महाव्याहृतिभिश्चैवमभिमन्त्र्य पुनस्ततः ॥१३९॥
उच्छिष्टमिष्टोपहतमित्यनेनाभिमन्त्रयेत्।
आपोशानं (न) क्रियापूर्वं जुहुयाद्वायवे हविः ॥१४०॥
प्राणो व्यानस्तथाऽपानः समानोदान एव च
ओंकारपूर्वाः स्वाहान्ताः पञ्च दद्यात्तथाऽऽहुतीः ॥१४१॥
वाग्यतः शेषमश्नीयाद्भुक्त्वाऽचम्य पुनः पुनः।
प्राणोग्निविश्व इत्याभ्यां प्रत्याहारं विचिन्तयेत् ॥१४२॥
ओं प्राणोग्निपरात्मानं पञ्चवायुभिरावृतः।
स ईशः सर्वजगतः प्राणः प्रीणाति विश्वभृत् ॥१४३॥
विश्वोग्नि वैश्वानर विश्वरूप
त्वं विश्वमाधारयसि याजमानः।
विश्वं च पीत्वाहुतयश्च यत्र
प्रादेशमात्रः पुरुषः स्मृतस्तु सः ॥१४४॥
एषा विश्वभृतीनां तनुर्विष्णोः सनातनी।
अन्नरूपेण विज्ञेया ययेदं धार्यते जगत् ॥१४५॥
अन्नकामेन संसृष्टं ब्रह्मणा चाखिलं जगत्।
तस्मादन्नात् परं तत्त्वं न भूतं न भविष्यति ॥१४६॥
अन्नार्थी पवते वायुरन्नार्थी ज्वलतेऽनलः।
अन्नार्थी चाप्ययं सूर्यो रसान् गृह्णाति रश्मिभिः १४७॥
यथा हि क्षुधिता बाला मातरं पर्युपासते।
एवं सर्वाणि भूतानि आत्मयज्ञ (न्यन्न) मुपासते ॥१४८॥

योह्यविद्वान् समश्नाति अन्नं मोहसमन्वितः।
भस्मनीव हुतं हव्यं तद्वदन्नममन्त्रकम ॥१४९॥
एवं ज्ञात्वा तु यो विप्रो विधिनान्नं समश्नुते।
आत्मानं च तथान्नं च दातारं चैव तारयेत ॥१५०॥
तर्पितं च भवेत्तेन विश्वं भुवनसप्तकम।
दैव्ये पित्र्ये च यद्दत्तं तदक्षय्यं भवत्यपि ॥१५१॥
एवं हि सर्वभावस्थं विदित्वा परमेश्वरम।
काष्ठादौ हि तृणान्ते च पाषाणान्तर्गतेऽपि च। ॥१५२॥
ब्रह्मादिस्तम्बपर्यन्तमेवं व्याप्य स तिष्ठति।
पाषाणमणि धातूनां तेजोरूपेण संस्थितः ॥१५३॥
वृक्षोषधितृणानां च रसरूपेण तिष्ठति।
तन्मात्रभूतो भूतानां विश्वरूपेण संस्थितः ॥१५४॥
एवं वेत्ति य आत्मानमेकधा संप्रतिष्ठितम।
ज्ञात्वा चोपासते सम्यक् सोऽमृतत्वाय कल्पते ॥१५५॥
आदित्ये हृदये चैवमग्नौ व्योम्नि तथा परे।
एक एव भवेदात्मा पञ्चधाऽवस्थितस्तु सः ॥१५६॥
आदित्ये चैव हृदये चैकीभूतं विचिन्तयेत।
सर्वोपनिषदां चैव उपास्यैषा उदाहृता ॥१५७॥
आदित्यो ब्रह्म इत्येतन्मित्राद्युपनिषत्सु च।
छान्दोग्ये बृहदारण्ये तैत्तिरीये तथैव च ॥१५८॥
एतदेव मनुप्रोक्तं देवानां चोपजीवनम।
पार्श्वे बाह्ये तथा पृष्ठे चौरस्य परिकल्पिता ॥१५९॥

अन्तरिक्षमधश्चैव पुत्राश्चास्य मरीचयः ।
ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥१६०॥
कल्पभाष्यपुराणानि उपवेदास्तथैव च ।
गुह्योपनिपदश्चैव सुपुष्पाणि ( पुष्फुसाः )
परिकीर्तिताः ॥१६१॥
ऋचो यजूंपि सामानि मधून्येतानि कुर्वते ।
तद्वेदैः संभृतं दिव्यं रसं तदमृतं मधु ॥१६२॥
वसवश्च तथा रुद्रा मरुतोङ्गिरसादयः ।
पूर्वादिदिग्विभागेन स्वकीयैः सवनैः स्थिताः ॥१६३॥
मुखमेकं समालोक्य रथनीडे स्थिता विभोः ।
तृप्तिं समधिगच्छन्ति नाश्नन्ति न पिबन्ति च ॥१६४॥
नीडमध्यगतं सूर्यं न च पश्यन्ति चक्षुपा ॥१६५॥
अर्चींपि केवलान्येव उच्चरन्ति मुहुर्मुहुः ।
संर (ल) क्षयन्ति कुहरे नीडान्तःस्थं घटोपमम् ॥१६६॥
हृद्याकाशगतो यो हि पद्मसंपुटमध्यगः ।
अनन्ता रश्मयस्तस्य दीपवद्यो स्थितो हृदि ॥१६७॥
सिताऽसिताः कद्रुनीलाः कपिलाः पीतलोहिताः ।
ऊर्ध्वमेकःस्थितस्तेषां यो भित्वा सूर्यमण्डलम् ॥१६८॥
ब्रह्मलोकमतिक्रम्य ते यान्ति परमां गतिम् ।
यदस्य स्याद्रश्मिशतमूर्ध्वमेव (क ?) मवस्थितः ॥१६९॥
तेन देवनिकायानां स्वधामानि प्रपद्यते
ये चैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः ॥१७०॥

इह कर्मप्रभोगाय तै संसरति सोऽवशः ।
एतद्यो न विजानाति मार्गद्वितयमात्मनः ॥१७१॥
दंदशूकः पतङ्गो वा भवेत कीटोऽथवा क्रिमिः ।
अलाबुतन्तुसदृशं शिराजालं तु संततम् ॥१७२॥
सपद्मसंपुटं चित्रं छिद्रितं कर्णिकोज्वलम ।
तस्य मध्यगतो ह्यात्मा रश्मिभिः परिवारितः ॥१७३॥
प्रदीपतापप्रकाश्यै (शै) रवाप्नोति न चान्तरम ।
अङ्गुष्ठपरिमाणं च ज्वलते स्वेन तेजसा ॥१७४॥
प्रादेशमात्रं तपते वितस्तिं च प्रकाशते ।
तत्प्रदेशस्थितो ह्यात्मा चेतनः सर्वतो विभुः ॥१७५॥
तत्त्वानि तत्र वै देवं तिष्ठन्त्यत्र समन्ततः ।
आप्यायन्ते च तेनैव दर्शनान्नात्र संशयः ॥१७६॥
न च पश्यन्ति पुरुषं ह्यन्तस्थं परमं विभुम् ।
तं चिन्तयेत् समाधिस्थो यं ज्ञात्वा विप्रमुच्यते ॥१७७॥
मुक्तो न जायते भूयः प्राप्य विष्णोः परं पदम् ।
ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम ॥१७८॥
श्वपाकेश्वपि भुञ्जानो ध्यायी नैव तु लिप्यते ।
ध्यानमेव परं ब्रह्म ध्यानमेव परं तपः ॥१७९॥
ध्यानमेव परं शौचं तद्धाम (द्ध्यानं) परमं स्मृतम ।
सर्वपापप्रसक्तोऽपि ध्यायेन्निमिषमच्युतम् ॥१८०॥
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः ।
ध्यानमेव प्रवक्ष्यामि करणैः क्रियते यथा ॥१८१॥

बुद्ध्यहंकारमनसां विषयानिन्द्रियाण्यपि ।
एकस्थाननिरोधेन ध्यानमित्यभिधीयते ॥१८२॥
इन्द्रियाणीन्द्रियार्थांश्च बुद्धावेव निवेशयेत् ।
मनो बुद्धिरहंकारो भूतानि प्रकृतावपि ॥१८३॥
प्रधानं पुरुषे योज्यं स न्यासः परिकीर्तितः ।
इन्द्रियेभ्यः परे ह्यर्था अर्थेभ्यः परमं मनः ॥१८४॥
मनसश्च परा बुद्धिर्बुद्धे रात्मा महान् परः ।
महत. परमव्यक्तमव्यक्तात् पुरुषः परः ॥१८५॥
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति. ।
एशान्यभिमुखो भूत्वा उपविश्यासने शुभे ॥१८६॥
नात्युच्छ्रिते नातिनीचे चैलाजिनकुशोत्तरे ।
ततोपविश्य सुमु (सु) खं गुरुं चादौ नमस्य च ॥१८७॥
पद्मासनं च बध्वा वै दीर्घं प्रणवमुच्चरेत् ।
ऊरुस्थोत्तानचरणः सव्ये न्यस्येतरं करम् ॥१८८॥
उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा ।
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तान्न संस्पृशेत् ॥१८९॥
तालुस्थाऽचलजिह्वश्च संवृतास्यः सुनिश्चलः ।
संनियम्येन्द्रियग्रामं पाषाण इव निश्चलः ॥१९०॥
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ।
ततो ध्येय. स्थितो योऽसौ हृदये दीपवत् प्रभुः ॥१९१॥
धारयेत्तत्र चात्मानं धारणं धारयेद्बुधः ।
मोहजालमपास्याथ पुरुषो दृश्यते हि यः ॥१९२॥

सहस्रकरपन्नेत्रः सूर्यवर्चाः सहस्रधा।
द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः ॥१६३॥
हिता नाम हि ता नाड्यस्तासां मध्ये शशिप्रभम ।
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ॥१६४॥
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ।
अन्तर्धानं स्मृतिः कान्तिर्दृष्टिश्रोत्रज्ञता परा ॥१६५॥
निजं कायं समुत्सृज्य परकायप्रवेशनम ।
अर्थानां छन्दतः सृष्टिर्योगसिद्धं स्तु लक्षणम ॥१६६॥
सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ।
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥१६७॥
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनुत्तमा ।
ध्यानप्रकरणं ह्येतत् षडशीत्यधिकं शतम ॥१६८॥
इति श्रीबृहद्योगियाज्ञवल्क्ये अध्यात्मनिर्णयो नाम
नवमोऽध्याय. ॥९॥

# अथ दशमोऽध्यायः

## सूर्योपस्थानवर्णनम

माजनं प्राणसंरोधो ध्यानं च समुदाहृतम ।
उपस्थानं प्रवक्ष्यामि सूर्यस्य क्रियते यथा ॥१॥
स्नामब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
सूर्यस्या चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥२॥
उदुत्यं चित्रमित्याभ्यां प्रक्षिपेदुदकाञ्जलिः ।
गायत्र्यास्तु जपं कृत्वा पूर्वमेव यथाविधि ॥३॥
उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत् ।
वक्ष्यमाणः प्रयत्नेन सूर्यस्य विपयाद्बुधः ॥४॥
उदुत्यं चित्रं देवानामुद्वयं तमसः परि ।
तच्चक्षुर्देव इति च जपं कुर्यात्तु वै ऋचा ॥५॥
उदगादित्ययं मन्त्र आकृष्णेनेति वै ऋचा ।
इष्टं मनः प्रयुञ्जीत भक्त्या तानि जपेत सदा ॥६॥
एतैर्मन्त्रैः प्रयुञ्जीत शक्त्याऽन्यानि जपेत् सदा ।
दश त्रिंशत् शतं वापि गायत्र्याः परिवर्त्तयेत् ॥७॥
अहोरात्रं कृतं ह्येनस्तत सर्वं विप्रणश्यति ।
पूर्वां संध्यां जपंस्तिष्ठेन्नैशमेनो व्यपोहति ॥८॥
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ।
जपिनां होमिनां चैव ध्यायिनां तीर्थसेविनाम् ॥९॥

न पर्युषन्ति पापानि ये च स्नाताः शिरोव्रतैः ।
नास्ति गङ्गासमं तीर्थं न देवः केशवात् परः ॥१०॥
गायत्र्यास्तु परं जप्यं न भूतं न भविष्यति ।
सहस्रपरमां देवी शतमध्यां दशावराम ॥११॥
गायत्रीं च जपन् विप्रो न स पापेन लिप्यते ।
पूर्वां संध्यां जपंस्तिष्ठेन् सावित्रीमर्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात ॥१२॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम ॥१३॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥१४॥
जपेनैव हि संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥१५॥
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥१६॥
गायत्रीजप्यनिरता ब्राह्मणा ब्रह्मचिन्तकाः ।
सूर्योपस्थाननिरतास्तस्य सायुज्यभागिनः ॥१७॥
एवंविधास्तु ये संध्यामुपतिष्ठन्ति ते द्विजाः ।
नोदकस्य तु विक्षेपात् संध्या भवति सिद्धिदा ॥१८॥
ओंकारस्य तु गायत्र्या व्याहृतीनां शिरस्यपि ।
प्राणायामस्य संध्याया आत्मज्ञानस्य चैव हि ॥१९॥

मार्जनस्य च जप्यस्य ब्रह्मणः परिचिन्तनात् ।
चतुर्णां चैव वेदानां साङ्गानां पारगो भवेत् ॥२०॥
स भवेत् सर्वविद्यानां पारगो नात्र संशयः ॥ ४ ॥

इति श्रीबृहद्योगियाज्ञवल्क्ये सूर्योपस्थाननिर्णयो नाम
दशमोऽध्यायः ॥१०॥

---

# अथ एकादशोऽध्यायः

## योगधर्मवर्णनम्

सर्वधर्मान् परित्यज्य योगधर्मं समाचरेत् ।
सर्वे धर्माः सदोषास्तु पुनरुत्पत्तिकारकाः ॥ १ ॥
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ २ ॥
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ३ ॥
आत्मज्ञानं हि यो वेत्ति स सर्वज्ञः स सर्वकृत् ।
एवं ज्ञात्वा प्रयत्नेन योगयुक्तः सदा भवेत् ॥ ४ ॥
अकृतान्येव यज्ञाश्च दानानि च तपांसि च ।
तेषां फलं तु संयोज्य लोकान् सोमानव(नु?)क्रमात् ॥५॥
भुक्त्वा गच्छति तत्स्थानं यद् गत्वा न निवर्तते ।
पुरुषो भुनक्ति भोगाननौपम्यान गुणोदयान् ॥ ६ ॥

सर्गप्रलयकाले तु न नश्येन्न भवेत्तु सः ।
ऋचोऽक्षरे परमे व्योम्नि
यस्मिन् देवा अधिविश्वे निषेदुः ॥
यस्तं न वेद किमृचा करिष्यति
यइत्तद्विदुस्त इमेममासते ॥ ७ ॥

रथ्याघोषेण संतुष्टो वाक्प्रलापरतः सदा ।
रात्रिंदिवं प्रलपते मत्तो मार्जारवद्यथा ॥ ८ ॥

वेदादौ यो भवेद्वर्णः पञ्चवर्णसमन्वितः ।
तस्यान्ते तु पदं षष्ठं तज्ज्ञात्वा वेदविद्भवेत् ॥९॥
अगतिं च गतिं चैव भूतानां विन्दते तु यः ।
प्रकृतीनां विकाराणां स भवेद्वेदपारगः ॥१०॥

पारं गतस्तु तत्त्वानां तत्त्वातीतं तु वेत्ति यः ।
स पारग इति प्रोक्तो न स्वाध्यायस्य पारगः ॥११॥
समाम्नायैकदेशं तु गुह्योपनिषदादि च ।
विन्दते पठते चैव ह्यनुतिष्ठति कर्मणा ॥१२॥

स मे बहुमते (तो) भाति बहुविद्यासुशोभितः ।
स मुक्तिभाक् स एवैकः श्रद्धायुक्तो जितेन्द्रियः ॥१३॥
षडङ्गं षट्पदं वर्णं हृत्पद्मस्थं तु वेद यः ।
षडङ्गवित् स विज्ञेयो नाङ्गयागी षडङ्गवित् ॥१४॥
केवलं लोकवृत्त्यर्थं पठितं वृत्तिहेतुकम् ।
कदर्थयति वेदांश्च कुप्रतिग्रहयाजनैः ॥१५॥

असंयमेन येऽधीता न त्रायन्ति कदाचन ।
ऋगेका संयमस्थेन अधीता पात्यत्यपि ॥१६॥
आमपात्रे यथान्यस्तमापो मधु घृतं पयः ।
नश्यन्ति पात्रदौबल्यात्ते रसास्तस्य भाजनम् ॥१७॥
एवं ह्यपात्रसंयोगात्तदधीतं विनश्यति ।
पात्रदोषेण संदुष्टमपवित्रं भविष्यति ॥१८॥
न वेदपलमाश्रित्य पापं कम समाचरेत् ।
अज्ञानाद्धि कृतं पापं वेदाभ्यासेन शुद्ध्यति ॥१९॥
आचरहीनं न पुनन्ति वेदा ।
यद्यप्यधीताः सह षड्भिरङ्गैः ॥
छन्दांस्येनं मृत्युकाले त्यजन्ति ।
नीडं शकुन्ता इव जातपक्षाः ॥२०॥
गायत्रीमात्रसंतुष्टः श्रेयान विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी ॥२१॥
न विद्यया केवलया तपसा वा पवित्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥२२॥
यथा रथो विनाश्वैः स्यादश्वाश्च रथिना विना ।
एवं तपो ह्यविद्यस्य विद्या चाप्यतपस्विनः ॥२३॥
यथान्नं मधुसर्पिभ्या संयुक्तं स्वादुतां व्रजेत् ।
एवं विद्यातपोयोगैर्ब्राह्मणः पात्रतां व्रजेत ॥२४॥
द्विविधं तु समुद्दिष्टं गुह्यं ब्रह्म सनातनम ।
स्थलसूक्ष्मं च बोद्धव्यं ब्राह्मणेन प्रयत्नतः ॥२५॥

ऋचो यजूंपि चान्यानि मामानि विविधानि च ।
एवं ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥२६॥
आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स तु ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥२७॥
पलालधान्यशूकादि तुपकणसमन्वितम ।
यत् स्थूलं तादृशं ज्ञेयं सूक्ष्मं तण्डुलवत् स्मृतम ॥२८॥
वाक्प्रपञ्चं तु यत् स्थूलं शब्दब्रह्म महत्तरम ।
त्रिवर्गफलदं ज्ञेयं यदि सम्यगधीयते ॥२६॥
वेदोऽधीतो ददच्छुद्धिं भ्रंशितो नरकप्रदः ।
न्यायेनेष्टो ददत् स्वर्गं पुनरावृत्तिकारकम ॥३०॥
सूक्ष्मं तत् परमं गुह्यं त्रयं ब्रह्म सनातनम ।
वेदवेदान्तयोः सारं त्रिविधं ब्रह्मणो मखम ॥३१॥
मोक्षदं तु समुद्दिष्टं विदितं नात्र संशयः ।
षट्कर्मणामनुष्ठानादाश्रमाणां च सेवनात् ॥३२॥
तपसा वा सुतीव्रेण सर्वविद्याविवेचनात् ।
मोक्षावाप्तिस्तु न भवेदृते ज्ञानाच्च कर्मणः ॥३३॥
इज्याचारो दमोऽहिंसा दानं स्वाध्यायकर्म च ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम ॥३४॥
चत्वारो वेदधर्मज्ञा यत्र त्रैविध (द्य) मेव वा ।
स ब्रूते यः स धर्मः स्यादेको वाध्यात्मवित्तमः ॥३५॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः ॥३६॥

ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥३७॥
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥३८॥
प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ।
निःश्रेयसकरं ज्ञेयं द्विजानामिह सर्वशः ॥३९॥
कर्मणां समनुष्ठानमाश्रमाणां च सेवनम् ।
पुत्रदारादिसंसक्तिः प्रवृत्तं कर्म चोच्यते ॥४०॥
नियमानामनुष्ठानं सम्यगात्मविचिन्तनम् ।
सुतादिष्वनभिष्वङ्गो निवृत्तं कर्म वैदिकम् ॥४१॥
प्रवृत्तं सेवमानस्तु स्वर्गलोके महीयते ।
निवृत्तं सेवमानस्तु ब्रह्मभूयाय कल्पते ॥४२॥
न तमः कारणं किञ्चिद्योगधर्मे प्रवर्तते ।
आनन्तर्यात् प्रमाणं तु सर्वमेतदकारणम् ॥४३॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
आत्मज्ञानेन मुच्यन्ते यत्र तत्राऽऽश्रमे रताः ॥४४॥
स्वकर्मणामनुष्ठानात् सम्यगात्मनि दर्शनात् ।
वेदान्तानां परिज्ञानाद् गृहस्थोऽपि हि मुच्यते ॥४५॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमेवाभ्यर्च्य सिद्धिं प्राप्नोति मानवः ॥४६॥
कर्मसंन्यासयोगेन ब्राह्मणः सिद्धिमाप्नुयात् ।
कर्मणां नियतानां तु त्यागो नैव विधीयते ॥४७॥

तेषां कर्मफलत्यागः स त्याग इति कीर्त्यते ।
ब्रह्मप्रधानकर्मस्था न सीदन्ति कदाचन ॥४८॥
मृत्तोयैः शुद्ध्यतेशोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टाः संन्यासेन द्विजोत्तमाः ॥४९॥
गण्डोपलादयो भूत्वा पदमन्यद्विगच्छति ।
ध्यानेनात्मनि संपश्येद् गतिमस्यान्तरात्मनः ॥५०॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ॥५१॥
ध्यानेनात्मनि पश्येच्च सर्वांश्च सुसमाहितः ।
पश्यन् हि योगयुक्तात्मा मुनिर्मोक्षपरायणः ॥५२॥
खं संनिवेशयेन खेषु चेष्टनस्पर्शनेऽनिलम् ।
पङ्क्तिदृष्ट्योः परं तेजः स्नेहयोगश्च मूर्तिषु ॥५३॥
वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् ।
मनसीन्दुं दिशः श्रोत्रं क्रान्ते विष्णुं बले हरम् ॥५४॥
प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥५५॥
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्मशाश्वतम् ॥५६॥

इति श्रीबृहद्योगियाज्ञवल्क्ये (योगधर्मनिर्णयोनाम)
एकादशोऽध्यायः ॥११॥

---

# अथ द्वादशोऽध्यायः

## विद्याऽविद्यानिर्णयवर्णनम्

न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते ।
सर्वं विनिःसृतं शास्त्रं वेदशास्त्रात् सनातनात् ॥१॥

दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते ।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ॥२॥

पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥३॥

सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।
अतिप्रमाणान्येतानि हेतुभिर्न विचालयेत् ॥४॥

सांख्यस्य कर्ता कपिलः परमार्थः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥५॥

पञ्चरात्रस्य सर्वस्य वक्ता नारायणः स्वयम् ।
अपांतरतमश्चैव वेदाचार्यः स उच्यते ॥६॥

प्राचीनगर्भं तमृषिं प्रवदन्ति हि केचन ।
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः ॥७॥

प्रोक्तवानिदमत्युग्रं ज्ञानं पाशुपतं हरः ।
अत ऊर्ध्वं तु ये केचिद्वेदशास्त्राण्यनेकशः ॥८॥

बौद्धः कापिलकुहकौ लोकायतिकभिन्नकाः ।
वेदबाह्यास्तथान्ये तु तामसा अशिवास्तु ते ॥९॥
नैरात्म (त्म्य) वादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
वेदशास्त्रं तु बाधन्ते पौरूपेयास्तु ते स्मृताः ॥१०॥
आसुरेयाः पाशुपता बृहस्पतिकृतास्तु ये ।
शुक्रं रूपं समास्थाय देवानां हितकाम्यया ॥११॥
प्रजापतिकृताश्चान्ये असुराणां प्रमोहनाः ।
येनेदं वाङ्मयं दुग्धमधर्मे विफलीकृतम् ॥१२॥
आत्मानं भूषयेन्नित्यं भोजनाच्छादनादिभिः ।
स्वदेहमेव दैवत्यमन्यन्नैवात्र विद्यते ॥१३॥
असत्यमप्रतिष्ठं च जगदाहुरनीश्वरम् ।
अयं लोकोस्ति न परः पुनः संभवनं कुतः ॥१४॥
जलबुद्बुदवच्चायं संभवेच्च पुनः पुनः ।
स्वेच्छयोत्पद्यते चैव स्वेच्छया च प्रलीयते ॥१५॥
जाति प्राधान्यकं नास्ति एकजातिसमुद्भवः ।
न वेदा नैव यज्ञाश्च न दानं न तपांसि च ॥१६॥
म कार्यं नैव चाकार्यं सर्वं कुर्यादशङ्कया ।
एतदासुरकं भावं समाश्रित्य विनश्यति ॥१७॥
नैयायिकार्थमालोक्य तथाहीश्वरकारणम् ।
प्रतिष्ठानानि वेदस्य एते तर्का उदाहृताः ॥१८॥
प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥१९॥

य: कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥२०॥
तस्माद्वेदादृते नान्यदध्येतव्यं द्विजन्मना ।
वेदबाह्यं तु यत् किञ्चिन्नाध्येतव्यं कदाचन ॥२१॥
या वेदबाह्याः स्मृतयो याः काश्चन कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥२२॥
उत्पाद्यन्ते व्ययन्ते च यानि तानि तु कानिचित् ।
एतान्यर्वाकालिकानि निष्फलान्यवृतानि च ॥२३॥
योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥२४॥
मूलस्तम्भो भवेद्वेदः शाखाश्चान्यानि यानि तु ।
मूले ह्युपासिते सम्यक् फलं भवति नान्यथा ॥२५॥
उच्छिन्नशाखा याः काश्चित्तथा वेदान्तराणि च ।
अन्तर्धानगतानीह स्मृत्वा तु स्मृतयः कृताः ॥२६॥
एकमेव हि विज्ञेयं श्रुतिस्मृतिविचक्षणैः ।
तस्मात्तुल्यबलत्वात्तु विकल्पश्च क्वचित् स्मृतः ॥२७॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥२८॥
योऽवमन्येत ते तूभे हेतुशास्त्राश्रयो द्विजः ।
स विद्वद्भिर्बहिः कार्यो नास्तिको वेदनिन्दकः ॥२९॥
हेतुशास्त्राणि योऽधीते वेदबाह्यो भवेद्द्विजः ।
तेन नास्तिक्यभावेन सर्वं (वं) मन्येत सोऽन्यथा ॥३०॥

तीर्थं दानं व्रतं यज्ञा वेदा विप्राश्च देवताः ।
स्वर्गापवर्गहेतूनि कुदृष्ट्या पश्यतेऽनृतम् ॥३१॥
नास्तिक्यभावान्मूढात्मा पापेषु कुरुते मतिम् ।
श्रुतिस्मृत्युदितं त्यक्त्वा ततो नरकमृच्छति ॥३२॥
अज्ञानतमसाऽन्धानां भ्रामितानां कुदृष्टिभिः ।
न प्रत्यक्षं भवेत्तेषां वेदविद्यान्तरं तु यत् ॥३३॥
वेदांश्चैव तु वेदाङ्गान् वेदान्तानि तथा स्मृतिः (तीः) ।
अधीत्य ब्राह्मणः पूर्वं शक्तितोऽन्यांश्च संपठेत् ॥३४॥
आत्मज्ञाननिमित्तं तु सिद्धान्तानि विचिन्तयेत् ।
केवलानि तु योऽधीते वेदबाह्यो भवेद् द्विजः ॥३५॥
वेदान्तान्यः पठेद्विप्रश्चतुरश्चानुपूर्वशः ।
तथा शाखोपशाखानि गुह्यान्यादेशकानि च ॥३६॥
सर्ववेदप्रणीतानि मन्त्रांश्चापि पवित्रकान् ।
स सर्वविद्भवेद्विप्रो वेदवेदान्तपारगः ॥३७॥
तथा चात्मगुणैर्युक्त आत्मोपासनतत्परः ।
वेदतुल्यो भवेत् सोऽपि ऋषितुल्यो द्विजोत्तमः ॥३८॥
एकेनापि भवेत्तेन सर्वधर्मविनिश्चयः ।
पङ्क्तिं पावयते चैव उद्धरिष्यत्यनुग्रहात् ॥३९॥
अनन्तं चाप्रमेयं च वेदशास्त्रं सनातनम् ।
वेदितव्यं प्रयत्नेन सर्ववर्गफलप्रदम् ॥४०॥
वेदमेव समभ्यस्येद्वेदश्चक्षुः सनातनम् ।
भूतं भव्यं भविष्यं च सर्वं वेदप्रतिष्ठितम् ॥४१॥

अनन्तं चाप्रमाणं च सर्वं वेदान् प्रसिध्यति।
इति संचिन्त्य मुनिना वेदाचार्येण धीमता ॥
याज्ञवल्क्येन विप्राणां त्रयीमागः प्रदर्शितः ॥४२॥
येन गच्छन्ति विद्वांसः सत्पथा ब्रह्मणोऽन्तिकम् ।
असत्पथेन विप्रस्य गमनं हि विरुध्यते ॥४३॥
वेदान्तानां हि सर्वेषां या निष्ठा समुदाहृता ।
उपास्या यादृशी चैव मुनिना समुदाहृता ॥४४॥
ओंकारस्याथ गायत्र्या व्याहृतीनां शिरस्य च ।
स्नानस्य चैव संध्यायाः प्राणायामस्य चैव हि ॥४५॥
प्रत्याहारस्य ध्यानस्य मार्जनान्तर्जलस्य च ।
उपस्थानस्य होमस्य आत्मज्ञानस्य यो विधिः ॥४६॥
विद्याऽविद्याविचारं च त्रयीविद्याभिशंसनम् ।
तत् सर्वं मुनिना प्रोक्तं विप्राणां हितकाम्यया ॥४७॥
य इदं धारयेद्विप्रः स्वधीतं शृणुयाच्च यः ।
मया स ते तु यः प्रोक्तं(?)सोऽमृतत्वाय कल्पते ॥४८॥
सर्वाणि भूतानि ममान्तराणि सर्वेषु भूतेष्वहमन्तरस्थः ।
पश्यन्ति ये योगविदो मनुष्यास्तेषां प्रदेयं न तु
योऽन्यथा स्यात् ॥४९॥

इति श्रीबृहद्योगियाज्ञवल्क्ये ( विद्याऽविद्या-
निर्णयो नाम ) द्वादशोऽध्यायः ।

॥ श्रीगणेशाय नमः ॥

अथ

# ब्रह्मोक्तयाज्ञवल्क्यसंहिता

## चतुर्वेदानांशाखावर्णनम

वेदोपकण्ठनिलयं याज्ञवल्क्यम्महामुनिम ।
सुखासीनं मुनिवरं दृष्ट्वा पृच्छाकृताद्विजैः(?) ॥ १ ॥
भगवन्वेदवेदांश्च यजुर्व्वेद विशेषणम ।
अग्नि(होत्रिणाम)हीश्च(?)विप्राणान्तथा वाजसनेयिनाम ॥२
वर्णाश्रमाणां धर्माणां सर्वेषां वद सुव्रत ।
ब्रह्मविद्ब्रह्म आलोक्य योगीन्द्रः प्राब्रवीन्मुनीन् ॥३॥
यत्पूर्वम्ब्रह्मणा प्रोक्तमधुना च मया श्रुतम ।
सप्तर्षीणाञ्च संसर्गे परमेष्ठी पितामहः ॥ ४ ॥
ततोऽहमखिलं वक्ष्ये ब्रह्मणा नोदितः पुनः ।
वेदांश्च उपवेदांश्च शाखाभेदास्तथैव च ॥ ५ ॥
यजुर्व्वेदस्य ये धर्मा नित्यानैमित्तिकास्तथा ।
तान्सर्व्वान्कथयिष्यामि ब्रह्मणा भाषितो यथा ॥ ६ ॥
अग्रतः सम्प्रवक्ष्यामि श्रृणुध्वं ऋषिसत्तमाः ।
यजुर्वेदरहस्यन्तु यथावदनुपूर्वतः (शः) ॥ ७ ॥

ऋग्वेदश्च यजुर्वेदः सामवेदोऽप्यथर्वणः ।
यस्य यस्य प्रमाणन्तु तथा भेदाः प्रकीर्त्तिताः ॥ ८ ॥
तत्रादौ ऋग्वेदस्य शतभेदास्तु कथ्यते ।
आश्वलायन सांख्यायनचार्वाकाद्यास्तथैव च ॥ ९ ॥
चर्च्चकः श्रावणी पारः कुमपारस्तथैव च ।
क्रमचटः क्रमशठः क्रमदण्डः प्रकीर्त्तिताः ॥१०॥
चतु पारणमेतेषां त्रिभेदाः कथितास्तथा ।
शाकला वा(श्क) कलाश्चैव मण्डूका व पिताश्वभूः ॥११॥
मण्डलानि चतुःषष्टि दश चैव प्रकीर्त्तिताः ।
वर्ग्याणि यतिसंख्यानां सहस्रे द्वे तथोत्तरे ॥१२॥
ऋचां दशसहस्रं हि तथा पञ्चशतं (तानि) च ।
ऋचामशीति पादाश्च एष वारण उच्यते ॥१३॥
यजुर्वेदस्य वेदानां षडशीतिः परिकीर्त्तिताः ।
चकारानामपिप्रोक्ता चानणीयास्ततः परम् ॥१४॥
वातातिभेदाश्चैताश्चतैत्रामैत्रायणी तथा ।
मैत्रायणीया ये प्रोक्ताः भेदाः सप्त प्रचोदिताः ॥१५॥
मानवादुंदुभाश्चैव वनाहछागमेव(?) च ।
श्यामाश्यामीपर्णी प्रोक्ता याज्ञेयाः षड्भवन्ति हि ॥१६॥
हाद्रावी(?)भासुनीगार्ग्री शार्क्वना जावसी तथा ।
अष्टादशसहस्राणि ऋक्संख्या वः प्रवोचिताः ॥१७॥
वाजसनेयिनां प्रोक्ताः भेदा सप्तदश स्मृताः ।
जावालाश्चापिबौद्धाश्च काण्वमाध्यन्दिनास्तथा ॥१८॥

शापयाशपयिताश्चैव(?) काणलापौण्ड्रमेव च ।
वत्सा आवटिका ज्ञात्वा परमा विटिकास्तथा ॥१६॥
पानाशनां च (?)बौद्धाया आक्षु बौद्धास्तथैव च ।
कात्यायना वैजवापा भेदा वाजसनेयिनाम् ॥२०॥
सहस्रे द्वे शतेन्यूनं मन्त्रेवाजसनेयिनि ।
सखिलंशुक्रियाख्यातं(?) ब्राह्मणाश्च चतुर्गुणम् ॥२१॥
पुनस्तथैव यजुषां भेदद्वय(?) परं स्मृतम् (?) ।
येषामाहिकेयाश्च(?) तत्रभेदा उभावपि ॥२२॥
पाण्डिकेयापिये प्रोक्ताः पञ्चभेदाः प्रकीर्त्तिताः ।
कालेतानपिविज्ञेया तत्र बौद्धायनीस्मृतौ ॥२३॥
हिरण्यकेभी(?) भाद्वोज्य(भरद्वाज) अधरतद्धि प्रकीर्त्तिताः ।
सहस्रदशविज्ञेयं शौक्तिभेदमनुत्तमम् ॥२४॥
चत्वारिंशाश्चते भेदास्तेऽपि उत्सन्नकामताः ।
सामवेदस्य भेदानां सहस्रं परिकीर्त्तितम् ॥२५॥
राणाधनी(?) कौथमी च पूर्व्वे गते उभे अपि ।
भेदास्तान्कथयिष्यामि त्राणाव्यन्याथ कौथमी ॥२६॥
नाणायणीसात्यमुग्राकर्त्पायतुकलात्रया (?) ।
ग्रहाकाचपाली च(?)गालावी (च) वसुता तथा ॥२७॥
कौशमी नामया प्रोक्ता भेदाः सम्परिकीर्त्तिताः ।
कौथमीरायणी (?) प्रोक्तानायणीयास्तथैव च ॥२८॥
प्राञ्जलिविंधभृत्याश्च प्राचीनाजानिकास्तथा ।
अष्टादशसहस्राणि सामानि च चतुर्दश ॥२६॥

अष्टौशतानि नवतिस्तथा दशनिगद्यते ।
मबालखिल्याख्यप्रेक्ष एतत्सामगणाःस्मृताः ॥३०॥
वेदार्थः स च विज्ञेया नवभेदाः प्रकीर्त्तिताः ।
पिप्पलादानुदाश्चैवदामूदाजामनास्तथा (?) ॥३१॥
ब्रह्मपालाशकौतांकीदेदश(?) तथैव च ।
वातणाविपयाज्ञात्वावेदाप्य(थ)र्व्वण उच्यते ॥३२॥
एतेषां शाखयामध्ये पञ्चभेदाः प्रकीर्त्तिताः ॥३३॥
नक्षत्रकल्पोद्विविधोनकल्पः
संहितावकल्पोद्विविधानकल्पः(?) ।
शान्तिकश्चकल्पेदुह्णिोनउत्को(?)
अधीत्यमुनयो (?) सुकर्मयुक्ताः ॥३४॥
द्वादशैवसहस्राणि ब्रह्मत्वं साभिवारूपम्(?) ।
एतद्वेदरहस्यं च चतुर्वेदाश्चविस्तराः ॥३५॥
शाखाभेदमिदम्प्रोक्तं ब्रह्मणा परमेष्ठिना ।
त्रिगुणांपव्यते(?) नित्यं मंत्रब्राह्मणमेव च ॥३६॥
एतद्वेदप्रमाणन्तु शाखाशाखीतराःस्मृताः ।
स्वशाखामंत्रान्मुयोऽधीते शाखापाठी भवेद्द्विजः ॥३७॥
तामेव द्विगुणाधीत्य पदपारो भवेत्तु सः ।
तामेव त्रिगुणाधीत्य क्रमपारोविधीयते ॥३८॥
षडङ्गमपियोऽधीते वेदपाराः प्रकीर्त्तिताः ।
शिक्षाकल्पो व्याकरणं निरुक्तं छन्दज्योतिषम् ॥३९॥

षडङ्गसहितोवेदः सर्वसिद्धिप्रदायकः ।
मुखं व्याकरणम्प्रोक्तं चक्षुषी ज्योतिषन्तथा ॥४०॥
छन्दांसिपादौ वेदस्य शिक्षाघ्राणं प्रकीर्त्तितम् ।
निरुक्तं हृदयं ज्ञेयं कल्पं हस्तमुदाहृतम् ॥४१॥
धमशास्त्रन्तुजीवः स्याद्वेदः पुरुषः प्रकीर्त्तितः ।
आबोध्ये पुरुषोवेदो आचाराय कलाःस्मृताः ॥४२॥
आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षडभिरङ्गैः ।
ते मृत्युकाले पुरुषा व्रजन्ति
नीडं शकुन्ता इव जात पक्षाः ॥४३॥
गायत्रीमात्रसारोऽपि वरंविप्रः सुयन्त्रितः ।
अयन्त्रितश्चतुर्वेदी सर्व्वाङ्गी सर्वविक्रयी ॥४४॥
सर्वेषामेवं वेदानामुपवेदं वदाम्यहम् ।
ऋग्वेदस्योपवेदश्च आयुर्व्वेदः प्रकीर्तितः ॥४५॥
यजुर्वेदस्योपवेदधनुर्व्वेदः प्रणोदितः ।
सामवेदस्योपवेदं गन्धर्वः प्रोच्यतेमुने ॥४६॥
अथर्व्वेदस्योपवेदं शिल्पाद्याः शास्त्रशास्त्रकाः ।
पुराणं मानवोधर्म्मः सांगोवेदश्चिकित्सकः ॥
आद्याः सिद्धानिचत्वारि न हर्तव्यानि हेतुभिः ॥४७॥

इति श्रीब्रह्मप्रणीतेयाज्ञवल्क्येधर्म्मशास्त्रेवेदप्रमाणोपन्यासः प्रथमोऽध्यायः ।

---

# अथ द्वितीयोऽध्यायः

## नित्यनैमित्तिक कर्मवर्णनम

अत एव प्रवक्ष्यामि ब्रह्मणा कथितापुरा ।
यजुषां माध्यन्दिनीशाखा कात्यायनपराशरा: ॥ १ ॥
अग्निहीनास्तु ये विप्रास्तथा वाजसनेयिनः ।
स्नानादौ भोजनान्तञ्च तथाश्राद्धं द्विजोत्तमाः ॥ २ ॥
ब्रह्मणारादितम्पूर्वं सर्वेषां धर्म्ममुत्तमम ।
तदहं सम्प्रवक्ष्यामि यथासंख्यंसमुच्चयम ॥ ३ ॥
नित्यनैमित्तिकं काम्यं श्राद्धञ्च त्रिविधंस्मृतम ।
पूर्वन्नैमित्तिकं कुर्यात्ततो नित्यं समाचरेत ॥ ४ ॥
नित्यन्तु वैश्वदेवःस्यात्क्षयेऽहनिनैमित्तिकम ।
काम्यकं कृष्णपक्षे च सर्व्वकामफलप्रदम ॥ ५ ॥
वैश्वदेवं ततः कुर्य्याद्वलिकर्म्म ततः परम ।
पञ्चसूना गृहस्थस्य वर्त्ततेऽहरहः सदा ॥ ६ ॥
कण्डनी पेषणी चुल्ली जलकुम्भी च मार्ज्जनी ।
एताश्च वाहयन्विप्रो वाध्यते वै मुहुर्मुहुः ॥ ७ ॥
एतेषां पावनार्थाय पञ्चयज्ञाः प्रकीर्त्तिताः ।
अध्ययनं ब्रा(ब्र)ह्मयज्ञः पितृयज्ञस्तु तर्प्पणम् ॥ ८ ॥
होमो दैवोवलिर्भूतनृयज्ञोऽतिथिपूजकः ।
श्राद्धं वा पितृयज्ञन्तु पित्र्यो वलिस्थापि वा ॥६॥

नामन्त्रणं न होमश्च नावाहनं न विसर्ज्जनम् ।
बलि वैश्वान्न पिण्डश्च नित्यश्राद्धे विधिद्विजाः ॥१०॥
दन्तकाष्ठं न पूर्व्वंस्यात्प्रातर्मध्यान्हिकी क्रिया ।
ब्राह्मणश्च शुचिर्भूत्वा विधिवत्स्नानमाचरेत् ॥११॥
अगम्यागमनात्स्तेयात्पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात्पापान्मुच्यन्ते स्नानमात्रतः ॥१२॥
प्रक्षाल्य पाणीपादौ च कुशोपग्रहणन्तथा ।
शिखा बन्धनसंयोगा गायत्री चाभिमन्त्रितम ॥१३॥
भिद्यन्ते कवचाघोरा भिद्यन्ते गिरिपर्वताः ।
भिद्यन्ति वेदशास्त्राणि अभेद्या ब्राह्मणी शिखा ॥१४॥
प्रपद्ये वरुणन्देवमम्भसां पतिमूर्ज्जितम् ।
पावये देहिमेतीर्थं सर्वपापान्मुनी महे (?) ॥१५॥
तीर्थमावाहयिष्यामि सर्वं च विनिषूदनम् ।
सान्निध्यमस्मिंश्चकुरु स्थीयताम्मदनुग्रहात् ॥१६॥
शापघ्नि वरदे देवि गंगे ! नलिनिनन्दिनी ।
शुभगे सुव्रते शान्ते अर्घ्यं मे प्रतिगृह्यताम् ॥१७॥
स्रोतसां सन्मुखोमज्जेद्यत्रापः प्रवहन्ति वै ।
स्थावरेषु गृहेचैव सूर्यसम्मुखमाप्लवेत् ॥१८॥
आपोहिष्ठेति तिसृभिः हिरण्यवर्णा स्तथैव च ।
शन्नोदेवीरिति तथा शन्न आपस्तथैव च ॥१९॥
इदमापः प्रवहतामापोमौषधिरेव च ।
सुमित्रियान आपोन्न इमम्मे वरुणमुच्चरेत् ॥२०॥

तद्विष्णोश्चैव गायत्रीममिमन्त्र्य पुनः पुनः ।
उरु ३देव सवितश्च येतेशतमुदीरयेत् ॥२१॥
शनैः सम्मार्ज्जनं कृत्वा छन्द आर्षञ्च दैवतम् ।
अघमर्षणसूक्तेन त्रिरावर्त्त्य जलं शुभम ॥२२॥
ततोऽम्भसि निमग्नस्तु त्रिः पठेदघमर्षणम ।
प्रदद्यात्तु पुनर्मूर्ध्नि महाव्याहृतिभिर्ज्जलम् ॥२३॥
गुणा दशस्नानवरः प्रभाते रुपञ्चतेजश्चबलं च शौचं ।
आयुष्यमारोग्यमलोलुपत्वदुःस्वप्ननाशश्च(भवन्ति)मेधा ॥२४
स दशं आहतंधौतम(?) अग्निग्ध मलवर्जितम ।
धम्मार्थमाहरेद्विप्रोमरुस्त्वत्परिधापयेत (?) ॥२५॥
परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टि ।
रश्मिशतं च जीवामि शरदः ॥२६॥
पुरुचीरायस्पोषमभि सव्ययिष्ये ।
यशसामाद्यावा पृथिवी मन्त्र वत्रतथोत्तरीयम् ॥२७॥
द्विकक्ष एककक्षश्च भुक्तकक्षस्तथैव च ।
कौपीनयुक्तो विशिखोनग्नः पञ्चविधः स्मृतः ॥२८॥
हुतं दत्तं तथाजप्तं स्नानं सध्यां तदाऽसुराः ।
हरन्ति प्रसभंयस्मान्ननग्नो वै भवेद्द्विजः ॥२९॥
भ्रुवौर्मण्डलमध्यस्थं तिलकं कुरुते द्विजः ।
तावेवलं(?) धनं कृत्वा लिङ्गभेदा स उच्यते ॥३०॥
वेणुपत्र दलाकारं वैष्णवं तिलकं स्मृतम् ।
अर्द्ध चन्द्रं तथा शैवं शाक्तेयन्तिर्यगुच्यते ॥३१॥

चतुःकोणमिति स्पष्टं विकरालमुदाहृतम ।
पैशाचं विन्दुसंयुक्तं तिलकं धर्मनाशनम ॥३२॥
ललाटादि कपालान्तं केशवादिन्यसेद्धरिम ।
द्वे दर्भे दक्षिणे हस्ते सव्येत्रीण्यासनेतथा ॥३३॥
पादमूले शिखायाच उपवीते सकृत्सकृत् ।
अनामिका धृतेदर्भे मध्यमा न कदाचन ॥३४॥
मध्यमानामिकादर्भे पुत्रमित्रश्रियं हरेत ।
उभाभ्यामपिपाणिभ्या धार्यो विप्रैः पवित्रकैः ॥३५॥
ब्रह्मग्रन्थिसमायुक्तं गायत्र्या चाभिमन्त्रितम् ।
ब्रह्मग्रन्थिपवित्रेण सन्ध्योपास्ति करोति सः ॥३६॥
स वै द्वादशवर्षाणि कृतसन्ध्यो भवेन्नरः ।
ब्रह्मग्रन्थिसमायुक्तं संध्योपास्ति करोति चेत ॥
पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः ॥३७॥
संध्यास्नाने जपेहोमे ब्रह्मग्रन्थिर्विधीयते ॥३८॥
भोजने वर्त्तुलोग्रन्थिरेपधर्म्मो विधीयते ।
चतुर्भिर्दर्भयंजूत्यै(पुञ्जैश्च) ब्राह्मणस्य पवित्रकम् ॥३६॥
एकैकन्न्यूनमित्याहुर्व्वर्णे वर्णे यथाक्रमम् ।
दर्भाश्च ब्राह्मणा मन्त्रब्रह्मग्रन्थि पवित्रकम् ॥४०॥
नैवनिर्म्माल्यतां यान्ति नियोज्यानि पुनः पुनः ।
कुशाकाशास्तथा दूर्व्वा यवाश्चैव तु वल्वजाः ॥४१॥
पुण्डरीकास्तु विज्ञेया.षड्विधंकुश उच्यते ।
ॐ कारव्याहृती सप्त गायत्री सशिरं तथा ॥४२॥

आपोहिष्ठा ऋचस्तिस्रो द्रुपदादिवाघमर्षणम ।
उद्वयमुदुत्यं चैव चित्रन्तच्चक्षुरेव च ॥४३॥
तेजोऽसीति तुरीयञ्च सन्ध्यामेतत्समाचरेत ।
ऋषिश्छन्दश्च वेदानां संध्याहीनानुपासिता ॥४४॥
सा संध्या वृपली ज्ञेया विनियोगविवर्जिता ।
अथ सप्तव्याहृतीनां गौतमभरद्वाज विश्वामित्र ॥
जमदग्निवशिष्ठ कश्यपात्रिऋषयः ।
अग्निर्वायुः सूर्य प्रजापतिर्वरुणेन्द्र विश्वेदेवा देवता ॥
गायत्र्युष्णिगनुष्टप्बृहतीपङ्क्ति त्रिष्टुब्जगत्यश्छन्दांसि ।
सर्वेषामंगिरसः प्रजापति ऋषिः ॥
ब्रह्माग्नि वायु सूर्यादेवताः शासुरी गायत्री छन्दः ।
सर्वेषाम्प्राणायामे विनियोगः ॥
सरस्वती तु सायान्हे कृष्णाङ्गी पीतवाससा ।
ब्रह्मरूपाचहंसस्था प्राणायामाप्तमाह्वयेत ॥४५॥
मध्यान्हे चैव सावित्री श्वेतवासा रुद्ररूपा ।
वृषा रूढा प्राणायामेषु (?) विन्नयेत ॥४६॥
ॐ कारं तु समुच्चार्य्य समन्तादुदकं क्षिपेत ।
आवाहयेत ततो देवीं नासिकाग्रं निरीक्षयेत ॥४७॥
पूरकं कुम्भकं चैव रेचकञ्च यथाक्रमम ।
कनीय(?) मंकनी प्रभ वृद्धप्राणायामस्त्रिलक्षणः ॥४८॥
मात्रा द्वादशकं प्रोक्तं कनीयः परिकीर्त्तितः ।
चतुर्विंशति मात्रायां मध्यमं प्रोच्यते बुधैः ॥४९॥

वृद्धैश्चैव तु यत्प्रोक्तं मात्राषड्त्रिंशदुत्तमम ।
खलु मोक्षार्थिभिस्तच्च जान्वोरुपरि मार्ज्जनम ॥५०॥
तालत्रयमपितत्वज्ञा मात्रामंज्ञ प्रमसति (प्रशंसन्ति) ।
घण्टायाः स्वनितं वाऽपि अतिमात्रस्तदुच्यते ॥५१॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसायुताम ।
प्राणायामे त्रिरावर्त्य चतुर्म्मार्गस्तु (?) उच्यते ॥५२॥
नासिका कृष्ट (ण) मोध्यानं(?)पूरक उच्यते ।
कुम्भके निश्चलोच्छ्वासो रिच्यमानस्तु रेचकः ॥५३॥
प्राणायामस्यमात्रांयो न ज्ञाये (जानाति) ज्ञान दुर्बलः ।
अप्रसूता यथाधेनुर्वृथातस्य परिश्रमः ॥५४॥
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतः प्राणान्प्राणायामः स उच्यते ॥५५॥
भूर्भुवः स्वः महः जन स्तपः सत्यन्तथैवच ।
प्रत्योंकार समायुक्तं तत्स्यवितुवरेणियम ॥
आपोज्योतिरसो मृतं शिरः पश्चात्प्रयोजयेत ॥५६॥
वाह्यस्थितं नासापुटेन वायुराकृष्यतेवैसकलं शनैः शनैः ।
परिपूरयेच्च नाड़ीः समन्तान ।
सपूरको नाम महानिरोधः ॥५७॥
न रेचको नैव च पूरकोऽयं नासाग्रचारी स्थितरावबायुः(?)।
सुनिश्चितंधार्य यथाक्रमेण
कुम्भाख्यमेतत्प्रवदन्ति तज्ज्ञः ॥५८॥

निष्क्रम्य नासा प्रवरावशेषं प्राणंवहिः शून्यमिवानलेन ।
निरुच्छ्वसंस्तिष्ठति वोर्ध्वं वायुः
सरेचकोनाम महानिरोधः ॥५६॥

नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम् ।
चतुर्भुजं महात्मानं पूरकेनैव चिन्तयेत ॥६०॥
कुम्भकेन हृदिस्थानं ध्यायेच्च कमलासनम ।
ब्रह्माणं रक्त गौराङ्गं चतुर्वक्त्रं पितामहम ॥६१॥
रेचकेनेश्वरं विद्या ललाटस्थं महेश्वरम् ।
शुद्धस्फटिकसंकाशं निर्मलं पापनाशनम् ॥६२॥

सव्याहृतीं सप्रणवां प्राणायामस्तुषोडश ।
अपि भ्रूणहनं मासा युनात्यहरहः क्रमात् ॥६३॥
प्राणायामाः ब्राह्मणेन त्रयोऽपिविधिवत्कृता ।
व्याहृति प्रणवैः साद्धं विज्ञेयं परमं तपः ॥६४॥

यदा विरोधात्संयोगाद्देवतात्रयचिन्तनम् ।
अग्नि वायुरवि योगात्तदाशुद्ध्यतेवै त्रिभिः ॥६५॥
निरोधाज्ज्ञायते वायुर्व्वायोरग्निः प्रजायते ।
अग्नेरापो विजायन्ते ततोऽत्रभिद्यतेत्रिभिः ॥६६॥

यदा स देवो जागर्त्ति तदेतं चेष्टितं जगत् ।
ततोऽसावाचमनं कुर्यात्प्राणायामं विसर्जयेत् ॥
पापभक्षणसंयोगादृषिश्छन्दश्च संयुतम् ॥६७॥
अग्निश्चमेति सायान्हे प्रातः सूर्यश्चमेति च ॥

आचमने विनियोगः ! अग्निश्च मामन्युश्च मन्युपतयश्च ।
मन्यु कृतेभ्यः पापेभ्यो रक्षन्तां यदन्हा पापमकार्षम्
मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना—
अहस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि
इदमहममृत योनौ मत्ये ज्योतिषि जुहोमिस्वाहा ॥
सूर्यश्चमेति नारायण ऋषिः सूर्यो देवतानुष्टुप्छन्दः—
आचमने विनियोगः ॥

सूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः—
पापेभ्योरक्षन्तांयद्रात्र्यापापमकार्षमनसा वाचा हस्ताभ्यां-
पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतुयत्किञ्चिद्दुरितम्मयि इद-
महमापोऽमृत योनौ सूर्य्ये ज्योतिषिजुहोमि स्वाहा ॥

आपः पुनन्त्विवतिब्रह्माऋषि रापो देवता गायत्री
छन्द आचमने विनियोगः ॥

आपः पुनन्तु पृथिवी पृथ्वीपूता
पुनातु मां पुनन्तु ब्रह्मणस्पति र्ब्रह्मपूता पुनातु-
मां यदुच्छिष्टमभोज्यञ्च यद्वादुश्चरितं
मम सर्व्वम्पुनन्तु मामापोऽसतां च प्रतिग्रह ७ं स्वाहा ॥

आपोहिष्ठेति सिन्धुद्वीपऋषि रापो देवता
गायत्री छन्दो मार्ज्जने विनियोगः ॥
अष्टाक्षरंनच पदं प्रणवादि तु मार्ज्जनम् ।
अर्द्धं चैवान्यधः क्षिप्य(प्त्वा) ततोऽर्द्धम्मूर्ध्नि वै क्षिपेत् ॥६८

अधो भागविसृष्टैरद्भिर्न सुरा यान्ति संक्षयम ।
सर्व्व तीर्थाभिषेकस्तु ऊर्ध्व मम्मार्जनाद्भवेत् ॥६९॥
धाराच्युतेन तोयेन मार्ज्जनं स्याद्विगर्हितम् ।
नद्यां तीर्थे ह्रदेवाथ गृहेचैव तु भाजने ॥७०॥
अभावे वामहस्तेवा मार्ज्जनन्तु विधीयते ।
सुमित्रिया दुर्म्मत्रिया द्रूंजी धी प्राजापत्ये
अब्देवते आदान प्रक्षेपयोः
सुमित्रियान आप ओषधयः सन्तु दुर्म्मित्रिया-
स्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मः ।
द्रुपदेति कोकिलो राजपुत्र ऋषिः सरस्वत्यश्विनौ
सविता त्रिष्टुप्छन्दः सौत्रामण्ये विनियोगः ।
द्रुपदामाम सा देवी यजुर्व्वेद प्रतिष्ठिता ।
नासिका निश्चल श्वासः सौत्रामण्यः फलमश्नुते ॥७१॥
ऋतं च सत्यं चेत्यघमर्षण ऋषिः भावभृतो
देवता अनुष्टुप्छन्दः अश्वमेधावभृथे विनियोगः ॥
नासिका कृष्य वै प्राणो पठेच्चैवाघमर्षणम ।
त्रिरावर्त्तन संयोगात्तज्जलञ्च क्षिपेद्भुवि ॥७२॥
अन्तश्चरमीतितिरश्चीन ऋषि रापो देवता अनुष्टुप्
छन्द आचमने विनियोगः ॥
अन्तश्चरति भूतेषु गुहायां विश्वतो मुखः ।
त्वं यज्ञस्त्वं वषट्कारः त्वं विष्णोः परमम्पदम् ॥७३॥

आपोज्योतीरसोऽमृतम्ब्रह्मभूर्भुवः स्वरोम ।
पुष्पाक्षताम्भः संयुक्तामुपस्थाय दिवाकरम ॥७४॥
आकृष्णेन तु सायान्हे प्रातर्गायत्र्यमेवच ।
अभिमन्त्र्य तु पानीयमुपस्थायाञ्जलि त्रयम् ॥७५॥
हंसः शुचि मध्यान्हे समाहितहृदारविम ।
जपाकुसुम वर्णाभमुपस्थायैकमञ्जलिम ॥७६॥
उत्तानौ तु (?) यौश्चैव निष्ठन्कुर्यात्प्रयत्नतः ।
आसीनः पश्चिमां संध्यामुपस्थानं जपन्सदा ॥
उद्वयादौ जपेन्मन्त्रं भास्कर प्रीतिकारकम् ॥७७॥
उदुत्यमिति प्रस्कण्व ऋषिः सूर्यो देवतात्रिष्टुच्छन्दः ।
सूर्यप्रीतये विनियोगः । उद्वयन्तमस स्परिस्वः
पश्यन्त उत्तरम देवं देवत्रा सूर्यमगन्मज्ज्योति रुत्तमम्
उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम् ॥
चित्रंदेवाना कुत्सांग (कौत्स)
ऋषिः सूर्यो देवताऽनुष्टुप्च्छन्दः सूर्योपस्थाने विनियोगः ।
चित्रन्देवानामुदगादनीकंचक्षुर्मित्रस्यवरुण स्याग्नेः—
आप्राद्यावा पृथिवी अन्तरिक्ष ७ं सूर्य्य आत्मा जगत-.
स्तस्थुषश्च ।
तच्चक्षरितियजुष्पते दध्यङ्ङाथर्व्वण ऋषिः
सूर्यो देवता सूर्याभिमन्त्रणे विनियोगः ।
तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत

पश्येम शरदः शतञ्जीवेम शरदः शतᳬंशृणुयाम शरदः शतं प्रब्र-
वाम शरदः शतमदीनाः श्याम शरदः शतं भूयश्च शरदः शतात् ।

विभ्राडित्यनुवाकञ्जपेन्मन्त्रमण्डल ब्राह्मणं तथैवान्यान
वैदिकान्मन्त्रान (?) भोक्ताजपेच्छुभान् ।
उषस्याडीनं जपेन्मन्त्रं भास्कर प्रीतिकारकम
तत्र आवाहनं कुर्याद् गायत्र्या वेदमातरम् ।
सूर्य्य प्रीतिकरं शुभ्रं सर्व कामफलप्रदम ॥७८॥
तेजोऽसीति परमेष्ठी प्रजापति ऋषिराज्यं देवता
गायत्री छन्दः गायत्र्यावाहने विनियोगः ।
तेजोऽसीति जपेन्मन्त्रं गायत्रीं मातरन्तथा ।
वर्णन्यासंतथा कुर्याच्चतुर्विंशाक्षराः शुभाः ॥७९॥
समादिव ततो मुद्रः शिखायां श्वेतवर्णसं
सांख्यायनगोत्रापं शिरा सरस्वती द्वा गायत्र्या जपे-
विनियोगः ।
आदौ(?) किलकतुर्पादौमुनिर्व्वीजमुदाहृतम् ।
विंशति जीवमित्याहु रष्टमः शक्ति रुच्यते ॥८०॥
तुरीयपदस्य विमल ऋषिः परमात्मा देवता-
गायत्री छन्दः गायत्र्युपस्थाने विनियोगः ।
गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि ।
नहि पद्यसे नमस्ते तुरीयाय दर्शताय
पदाय परोरजसे सावदोऽमू ।
उपस्थाय तु गायत्रीं सर्व्वमन्त्रमयीं शुभाम ॥

ब्राह्मणः सर्वधर्म्मज्ञस्ततस्तु जपमारभेत ॥८१॥
ॐ कारं सर्वमुच्चार्य भूर्भुवः स्वस्तथैव च ।
गायत्रीं प्रणवस्यान्ते जपो ह्येष उदाहृतः ॥८२॥
व्याहृत्यादौ पदादौ च प्रणवं विन्यसेत्सदा ।
एवं सप्रणवैर्युक्तं गायत्री जपलक्षणम् ॥८३॥
ॐ कारं चतुरावर्त्य विज्ञेया सा शताक्षरा ।
शताक्षरं समावर्त्य चतुर्वेद फलं लभेत् ॥८४॥
संध्या येन न विज्ञाता सन्ध्यायेनानुपासिता ।
स शूद्रवद्बहिष्कार्यः सर्वकर्म्मसु गर्हितः ॥८५॥
देवा गात्विति वामदेव ऋषिः सविता देवता
गायत्री छन्दः गायत्री विसर्ज्जने विनियोगः ।
देवागातु विदोगातुं वित्वा गातु मतं मनस स्पते इम्मं-
देव स्वाहा वातेधा ॥
देवागातुयेन्मन्त्रं गायत्री तु विसर्जिता ।
शिवस्यवदनेजाता विष्णोर्हृदय वासिनि ॥८६॥
ब्राह्मणीत्वमनुजाता गच्छ देवि नमोऽस्तुते ।
संध्याहाने व्रत भ्रष्टे विप्रे वेदां विवर्जये(त) ॥८७॥
जीवमात्रोभवेच्छूद्रो मृतश्चेन्निरयं व्रजेत् ।
वनस्पती रोषधीश्च भूतग्रामं चतुर्विधम् ॥८८॥
ब्रह्मयज्ञन्ततः कुर्याद्दर्भाश्च करसम्पुटे ।
यथा शक्ति स्वशाखायां गायत्री वाऽथ तर्पणम् ॥८९॥

उभाभ्यामपि पाणिभ्यां देवानां तर्प्पणन्तु यः ।
ससूढ़ो नरकं याति कालं सूत्रमवाकशिराः ॥६०॥

अन्वारब्धे सव्येन पाणिना दक्षिणेन तु ।
तृप्यन्तामिति चो(क्ते)क्तव्यं नाम्ना च प्रणवादिभिः ॥६१॥

ऋषिर्गृत्समदश्छन्दो गायत्री विश्वेदेवा देवता ।
तर्पणे विनियोगः । विश्वेदेवास आगत इति मंत्रं पठेत

ॐ मोदाश्चैव प्रमोदाश्चसुमुखो दुर्म्मुखस्तथा ।
अविघ्नो विघ्न कर्तार स्तर्प्पयेत्सिद्धि नायकान प्रणवादि तर्पयेत् ॥

(सं) तर्प्पयेद्ब्रह्माणं पूर्वं विष्णंरुद्रं प्रजापतिं ।
देवाश्छन्दांसि वेदाश्च ऋर्षीश्चैव तपोधनान ॥६२॥

आचार्यांश्चैव गन्धर्वानाचार्या नितरान्तथा ।
सम्वत्सरं सावयवं देवीरप्सरसं तथा ॥६३॥

तथा देवानुगान्नागान्सागरान्पर्व्वतानपि ।
सरितोऽथमनुष्यांश्च यक्षरक्षांसि चैवहि ॥६४॥

पिशाचांश्च सुपर्णांश्च भूतानि च पशून्स्तथा ।
वनस्पती रोपधीश्च भूतग्रामं चतुर्विधम ॥६५॥

मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसंवशिष्ठञ्चभृगुन्नारदमेव च ॥६६॥

गौतमञ्च भरद्वाजं विश्वामित्रञ्च काश्यपम ।
जमदग्निं तथा दक्षं मनुं स्वायम्भुवं तथा ॥६७॥

ऋषिप स्तथार्षेभ्य स्तेवतस्तामसस्तथा चक्षुषश्च ।
विवश्वांश्च(?) तथान्यान्सन्तर्पयेदनु ॥९८॥
ब्रह्मसूत्रं स्व कं सेयोगिभ्यस्तर्पयेद्बुधः ।
सनकश्च सनन्दनश्च तृतीयश्च सनातनः ॥९९॥
कपिलश्चासुरिश्चैववोढ पञ्च शिखस्तथा ।
अपसव्यं ततः कुर्यात्स्थित्वापितृदिशा सुखः ॥१००॥
पितृ तीर्थेन संतर्प्य ऋषि विनियोग समन्वितः
शंखप्रजापतिऋषिः पितरो देवता त्रिष्टुप्छन्दः
स्वपितृतर्पणे विनियोगः ॥

उदीरितामंगिरस आयन्तुन मंत्रत्रयंजप्त्वा ।
स्वगोत्रास्मत्पिताशर्म्मा तृप्यतामित्यञ्जलि त्रयम्
ऊर्ज्जं वहन्ती पितृभ्यो ये चेह मन्त्रत्रयं जप्त्वा ।
स्वगोत्रास्मत्पितामहोऽमुकशर्म्मा तृप्यतामित्यञ्ज-
लित्रयम् ।

मधुव्वातामंत्रत्रयं जप्त्वा स्वगोत्रास्मत्पितामहामुकशर्म्मा-
तृप्यतामितित्रयं नमो वश्चेतिमन्त्रेण स्वगोत्रमातामह-
प्रमातामह वृद्धप्रमातामहाञ्जलित्रिकम् । तृप्यध्वमिति
मातु र्माता मह्याद्या स्त्रियः । पितृ पितामह्याद्या
पितृष्वाद्याः सर्वातृप्यध्वमिति ।
पित्र्यमंत्रास्तु सर्वेषां ऋषिः सरव(?)प्रजापतिः ।
देवता पितरस्तेषां विनियोगस्तु तर्पणे ॥

एकैकमंजलिं दद्या (देवा) द्वौ द्वौ तु सनकादयः।
अहन्निति पितर स्त्रीन् स्त्रीन शेषमेकैकमञ्जलिम् ॥१०१॥
एवञ्च सर्व भूतानि तर्पये द्देवताः पितॄन।
सगच्छेत्परमं स्थानं तेजोमूर्त्तिं निरामयम ॥१०२॥
दिवादीना(?)मृपाभित्वां नरकं प्रतिपद्यते।
आब्रह्मस्तम्बपयन्तं देवर्षि पितृमानवाः ॥१०३॥
क्षिपेदञ्जलीन्स्त्रीन्स्त्रीन्कुर्यात्संक्षेपतर्पणम ।
नास्ति (क्य) भावेन यः कुर्यान्न तर्पयति यः पितृन् ॥१०४॥
पिबन्ति देहनिश्रावं पितरोऽस्य जलार्थिनः।
निष्पिड्य स्नानवस्त्रन्तु आचम्य प्रयतः शुचिः ॥१०५॥
तल्लिङ्गैः पूजयेद्देवान्ब्रह्मादीनमत्सरः।
आग्नेयां गणपतिं पूज्य(पूजयित्वा)मध्ये पूज्यं चतुर्म्मुखं ॥
विष्णुन्तु दक्षिणे पूज्य मन्त्रवत्परि पूजयेन्।
गणानान्त्वेतिमन्त्रेणगणनाथम्प्रपूजयेन् ॥१०७॥
ततो ब्रह्म (ब्रह्माणं) समभ्यर्च्यं ब्रह्म (?) तेन पुनातुमा।
तद्विष्णोः विष्णुं सम्पूज्य मानस्तोके महेश्वरम ॥१०८॥
तत्सवितुः सवितारं (वित्रे) च मित्रस्य चत्रटषणीकृत।
अग्निरस्मि ततो देवी प्राजापत्यं प्रजापते ॥१०९॥
इमम्मे वरुणं पूज्य तल्लिङ्गैर्देवमर्चयेत्।
हंसः शुचिपदुपस्थाय(?)प्रस्तिष्वेत्प्रदक्षिणाम् ॥११०॥
दिश दिक्पतिन्श्चैव ॐ प्राच्यैदिशेनमः।
इन्द्रायनमः आग्नेय्यै दिशे नमः अग्नये नमः ॥

दक्षिणायै (स्यै) दिशेनमः यमाय नमः
नैऋत्यै दिशेनमः निऋतये नमः प्रतीच्यै
दिशेनमः वरुणाय नमः वायव्यै दिशेनमः
वायवे नमः उदीच्यै दिशे नमः सोमाय नमः
(ई) ऐशान्यै दिशेनमः ईश्वराय नमः ऊर्ध्वायै
दिशे नमः ब्रह्मणे नमः अवाच्यै दिशे नमः
अनन्ताय नमः प्राच्यादिदिशः उपदिश विदिश उद्दिश्य
दिग्भ्य स्वाहा ।

ॐ ब्रह्मणे नमः ॐ अग्नयेनमः ॐ पृथिव्यैनमः ॐ ओष-
धीभ्यो नमः ॐ वाचे नमः ॐ वाचस्पतये नमः ॐ विष्णवे
नमः ॐ अद्भ्यो नमः ।

ॐ महद्भ्यो नमः ॐ अपांपतये नमः ॐ वरुणाय नमः ।
सचर्व्व(?) सेतिमुख विमृज्य देवागात्विति विसर्ज्जयेत्
यो मे (वै ग) तां स्तर्पयेदद्भिः पितॄन्देवान्तिलोत्तमान् ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥१११॥
ततोऽर्घ्यं भानवे दद्यादष्टद्रव्यैश्च संयुतम् ।
यवाश्वसर्षपादूर्व्वास्तिलं तण्डुलमेव च ॥११२॥
रक्त पुष्पाणि मृजुदर्भागन्धोदकसमन्वितम् ।
ताम्र पात्रेण संयुक्तं जानुभ्यां धरणीगतम् ॥११३॥
वैदिके आगमे वापि अर्घ्यं गृह्णाति भास्करः ।
ततो विष्णुं समभ्यर्च्य पुरुष सूक्तेत्यनुक्रमात् ॥११४॥

आगमोक्तेन मंत्रेण विधाने पूजयेद्धरिम् ।
पुष्पधूपादिनैवेद्यैः पुष्पाञ्जलिविधानतः ॥११५॥
विष्णुं समर्चयेद्यस्तु सोऽपि विष्णुं समाविशेत् ।
दद्यात्पुरुषसूक्तेन यः पुष्पाञ्जलि नित्यशः ।
अर्च्चितं स्याज्जगदिदं तेन सर्व्वं चराचरम् ॥११६॥

अस्य पुरुष सूक्तस्य नारायण ऋषिः पुरुषोत्तमो देवता (जगद्ध जा) नुष्टुप्छन्दः पुरुषसूक्ते विनियोगः ॥

प्रथमं विन्यसेद्वामं द्वितीयं दक्षिणे उरौ ।
तृतीयं वामपादे तु चतुर्थं दक्षिणेन्यसेत् ॥११७॥
पञ्चमं वामजानौ तु षष्ठं वै दक्षिणे तथा ।
सप्तमं वामस्कन्धे तु अष्टमं कटि दक्षिणे ॥११८॥
नवमं नाभिमध्येतु दशमंहृदि विन्यसेत् ।
एकादशं कण्ठमध्ये द्वादशं वामवाहु च (षु) ॥११९॥
त्रयोदशं दक्षिणं बाहुं आस्यदेशे चतुर्दशम् ।
अक्ष्णोः पञ्चदशंन्यस्य षोडशं मूर्ध्नि विन्यसेत ॥१२०॥
पुनर्न्यासं ततः कृत्वा षडङ्ग मंत्रविद् द्विजः ।
ॐ अद्भ्य संहृदि विन्यस्य वेदाहंशिरसि तथा ॥१२१॥
प्रजापतिः शिखायांतु यो देवेभ्यः कवचाय हुम् ।
रुचं ब्राह्म त्रिनेत्रे तु श्रीश्चते अस्त्राय फट् ॥१२२॥
ततो देवं समाहूय पूजार्थं परमेश्वरम् ।
आत्मानं सवितृ मध्ये वा वारुणस्थं परमेश्वरम् ॥१२३॥

ॐ सहस्रशीर्षे इत्यावाहनम । पुरुप एवेत्यासनम् ।
एतावानस्येति पाद्यं त्रिपादूर्ध्वेत्यर्घ्यं ततो विराडित्याचमनम
स्नानन्तु यस्माद्यज्ञेति तस्माद्यज्ञेत्युपवीतकम ।
यज्ञमिति गंधं यत्पुरुपंमिति पुष्पाणि दापयेत् ॥
धूपं दद्याद्ब्राह्मणोऽस्य चन्द्रमामन दीपकम ।
नाभ्या आमीति नैवेद्यं यत्पुरुषेण पुष्पाणि दापयेत् ॥

पुष्पाञ्जलि सप्तास्येतिपरिक्रम्य यज्ञेनेति विमर्ज्जनं पुनरेव पुनर्जाप्यं पुरुपसूक्तं पुनः पुनः ।

ध्येयः सदासवितृमण्डलमध्यवर्त्ती । नारायणः सरसिजासन-
सन्नि विष्टः । केयूरवान्कनककुण्डलवान्किरीटी ।
हारी हिरण्मयवपुर्धृतशंखचक्रः ॥१२४॥

एवं क्रमेण सम्पूज्य देवदेवं जनार्दनम् ।
आगमोक्तविधानेन यः पूजयति केशवम ॥१२५॥
चतुर्वर्ग फलं प्राप्य विष्णुलोकं स गच्छति ।
पुनस्त्र्यम्बकम्पूज्य (सम्पूज्य) सर्व दुःख निवारणम ॥
महामृत्युविनाशी (शिनं) सर्व्वसौख्यविवर्द्धनम ॥१२६॥

ॐ त्र्यम्बकमन्त्रस्य वशिष्ठऋषिः श्री मृत्युञ्जयरुद्रो देवताऽनुष्टुप्छन्दस्त्र्यम्बके विनियोगः ॥

देवदेवौ प्रणवबीजं त्र्यम्बके करशोधनं ।
व्याहृत्यादौ मंत्रपादौ विन्यसेत् ॥
करेण विन्यसेन्मन्त्रमष्टागं विन्यसेत्पुनः ।
त्र्यम्बकं शिरसिन्यस्य ललाटं च यजामहे ॥१२७॥

सुगन्धिन्तु मुखोन्यस्य हृदयेपुष्टि वर्द्धनम।
उर्व्वारुकंन्यसेन्नाभौ बंधनादि कट्यां न्यसेत् ॥१२८॥
मृत्योरिति उरौन्यस्य मृतादिति च पादयोः।
ततः षडङ्ग विन्यस्य देवदेवं महेश्वरम् ॥१२९॥
ॐ नमो भगवते रुद्राय हृदये।
ॐ नमो भगवते रुद्राय शिरसि ॥
ॐ नमो भगवते त्र्यम्बकाय शिखायाम्।
ॐ नमो भगवते त्र्यम्बकाय आन्योराय(?)अस्त्र्याय फट्।
त्र्यम्बकेमास(शक्ति)माहूय पूजार्थं परमेश्वरम् ॥
त्र्यम्बकेसापुनस्थाप्य त्र्यम्बकेन(ण) समर्च्चयेत्।
पूष्पधूपादिनैवेद्यपुष्पाञ्जलिविधानतः ॥१३०॥
पूजयेद्देवदेवेशं मृत्यरोग विनाशनम।
त्र्यम्बकेणैव मन्त्रेण पूजयेत्परमेश्वरम् ॥१३१॥
पुनरेव पुनर्जाप्यं त्रयम्बकन्तु पुनः स्मरेत्।
पुन ध्यायेत देवेशं चन्द्रमण्डलसंस्थितम् ॥१३२॥
चन्द्रावभाससंयुक्तं जटाजूटसमन्वितम्।
कलशावभृतःपूर्णौ वरदाभयदायिनौ ॥१३३॥
ध्यात्वैवं देवदेवेशं जपेन्मन्त्र तु त्र्यम्वकम्।
ततो वन्हि समासाद्य वन्ह्युपासन कर्म्मणि ॥१३४॥
अग्निहीनास्तु ये विप्रास्तथा वाजसनेयिनः।
वाह्योपस्तिविधानेन ब्रह्मणा नोदिता पुरा ॥१३५॥

यस्मिन्नग्नौपचेदन्नं होमस्तस्य विधीयते ।
स्थाप्य वह्निमयत्नं न चतुर्धादेव(?)विन्यसेत् ॥१३६॥
ज्वलनं मध्य संस्थाप्य एवं संस्कृत्य(?)पञ्चधी ।
पूर्णेन तु शिवं विद्या ब्राह्मणं(ब्रह्माणं) दक्षिणेन तु ॥
पश्चिमे वरुणं विद्यादुत्तरे तु जनार्दनम् ॥१३७॥
आयाहि शांडिल गोत्र देवमुख्य विप्रगुरु शीघ्र
पावकमावह (?) । एषोह देवमन्त्रेण हव्यवाहन सम्मुखं
पृष्ठौदिवि समुच्चार्य पर्युक्ष्य जुहुयाद्धविः ।
उद्धृत्य हविषा सिंच्य हविष्येण घृतादिना ॥१३८॥
स्वशाखा विधिना हुत्वा शेषं भूतबलिं हरेत् ।
जुहुयात्सर्पिषाभक्तं तैलक्षारविवर्जितम ॥१३९॥
दध्यक्तं पयभाक्तं वा तदभावेऽम्बुनापि च ।
पयोदधिघृतैः कुर्याद्धोमकर्म्म श्रुवेण च ॥१४०॥
हस्तेनान्नादिभिः कुर्यादद्भिरंजलिना जले ।
व्याहृतिश्च ततो व्याहृत्यततो मंत्रैश्च शाकलैः ॥१४१॥
दशाहुतीन्हुत्वा तु शेषं भूतबलिं हरेत् ।
प्राजापत्येस्विष्टकृते पत्नीनामाहुतीद्वयम ।
हुतशेषं ततो देया बली भूतक पैतृकौ ॥१४२॥

गौतमभरद्वाज विश्वामित्र जमदग्नि ऋषिः अग्निर्वायु सूर्य प्रजापतिदेवता गायत्र्युष्णिगनुष्टुब्बृहती छन्दांसि नित्यक-व्याहृति होमे विनियोगः ।

भूरादिव्याहृति (तीं) श्चैव महाव्याहृतिमेव च ॥
शाकलैश्च ततो हुत्वा दद्याद्भूमौ बलिं ततः ॥१४३॥

देव कृतस्यौषणां प्रजापतिऋर्षिः लिङ्गोक्ता देवता अनुष्टुप्छन्दः शाकल होमे विनियोगः ।

हुत्वा तु शाकला होमं ततो भूमि बलिं हरेत ।
विश्वेभ्यो देवेभ्यश्च मध्येभूमि बलिं हरेत् ॥१४४॥
ब्रह्मसूत्रन्तु कण्ठेन सर्वेभ्यो भूतेभ्यस्तथा(?) ।
प्राचीना वितिना दद्यात्परमपितृभ्यः स्वधाचरेत ॥१४५॥
पात्रे निर्णजनञ्चैव यक्ष्मैतत्तेत्युदीरयेत ।
ब्रह्मयज्ञं ततः कुर्याज्जपयज्ञं तथैव च ॥१४६॥
उपकल्प्यततोऽन्नम्वा नैवेद्यञ्च चतुर्विधम् ।
वैश्वदेवेभ्यश्च(?) प्रथमांशमुपकल्पयेत् ॥१४७॥
सनकादिमनुष्येभ्यो द्वितीयांशं प्रकल्पयेत् ।
वाग्रे पा चलिभिर्दद्यात्स्वभ्यः स्वपतिभ्य एव च ॥१४८॥
श्वभ्यश्च श्वपचानां च पतिता(?) पापरोगिणाम् ।
कृमीणां च पतंगानां सनकैर्निक्षिपेद्भुवि ॥१४९॥
श्वानौद्वौ श्यामशवलौ वैवश्वतकुलोद्भवौ ।
तयोरन्नम्प्रदास्यामि इमं पिण्डंमयोद्धृतम ॥१५०॥
गृहपूजां ततः कुर्याच्छान्तिकं नित्यमेव च ।
वामे धाता तु संपूज्य विधाता चैव दक्षिणे ॥१५१॥

गृहमध्येश्रितं पूज्य अन्ने च कुलदेवता क्षितिजलपवन हुताशनेभ्यो नमः ।

शान्तिकं च ततः कुर्यात्तथा सङ्कल्प्यचोच्चरेत् ।
अद्यतिथ्यां(?) यत्किञ्चित्कल्पितम्ममन्दिरे ॥१५२॥
पक्वमन्नं समानीय सर्वोपस्करसंयुतम् ।
यथाकालं मनुष्याद्यै र्भोक्ष्यमाणं शरीरिभिः ॥१५३॥
तत्सर्वं विष्णुपूजाया प्रीयन्तां पितृदेवताः ॥१५४॥
अर्चा(?)समीपे शयनासने गृहे
दिवा च रात्रौ च कथा व विभ्रता ।
यदस्ति किञ्चित्सुकृतम्मया कृतं
जनार्द्दनस्तेन कृतेन तुष्यतु ॥१५५॥
एवं सङ्कल्प्य सपुष्पं पितृरूपी जनार्दनः ।
अतिथिश्च समायुक्तो विनिव्यद्भोजने द्विजः ॥१५६॥
गोशकृन्मृण्मयंभिन्नं तथापालाशमेव च ।
लोहविद्ध शिरीपाकं वर्जयेदासनं बुधः ॥१५७॥
वारिणा भस्मना वापि कारयेन्मण्डलन्ततः ।
आदित्यावसवो रुद्रा ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥१५८॥
न भिन्न भाण्डे भुञ्जीत न भावप्रतिदूपिते ।
ताम्रं स्फटिक अब्जेवा न भुंजीयात्कदाचन ॥१५६॥
पालाशे मध्यमे पत्रे स्वर्णे रौप्ये तथैव च ।
यः करोत्यशनं तस्य प्राजापत्यं दिने दिने ॥१६०॥
एक एव तु यो भुङ्क्ते विमले कांस्य भाजने ।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशोबलम् ॥१६१॥

मण्डले पात्रं संस्थाप्य अन्नपूर्णं समाहितः ।
प्राणायामं ततः कुर्यान्मंत्र संस्कार पूर्वकम ॥१६२॥
अन्नं विष्णू रसो ब्रह्मा भोक्ता देवो महेश्वरः ।
सर्वान् देवान हृदि स्थाप्य भुक्त्वा पापैर्न लिप्यते ॥१६३॥
यद्देवा देव हेडेति शुद्धदृष्टि पुनाति सः ।
महाव्याहृतिभिश्चैवमभिमन्त्र्य पुनः पुनः ॥१६४॥
गायत्र्या चाभि सम्मन्त्र्य शन्नं (न्नो) अन्नपते स्तथा ।
इमन्नेधियमित्याहुर्य्या ओषधी स्तथैव च ॥१६५॥
सप्तार्च्चिपं ततो ध्यायेद्धृदिस्थं हव्य वाहनम् ।
एवं विधं चिन्तयेत्तु आत्मयज्ञे ह्युपस्थिते ॥१६६॥
जीवो वैश्वानरोज्ञेयो हृदये पद्मसंपुटे ।
उदरे गार्हपत्योऽग्निर्दक्षिणाग्निस्तु पृष्ठतः ॥१६७॥
आस्ये आहवनीयोऽग्नि स्त्रिधा एव विचिन्तयेत् ।
भोजनात्किञ्चिदन्नाग्रं धमर्राजाय वै बलिम् ॥१६८॥
ददौ (दद्यात्) स तत्र चित्राय वै नमः ।
भुवपतिश्चैव चित्रव (?) भुवनंचित्रगुप्तकः ॥१६९॥
भूतानां पति धर्मस्तु दद्यादेवं बलित्रयम ।
ददौ स तत्र चित्राय चित्र गुप्ताय वै नमः ॥१७०॥
भुवन पति चैव दद्याद्भूमिबलिं ततः ।
भू पतये भुवन पतये भूतानां पतये नमः ॥१७१॥
आपोशान क्रियापूर्वमग्नौ वै जुहुयाद्धविं ।
हृद्या काश गतो योहि पद्म संपुट मध्यगः ॥१७२॥

अनन्तारमपस्तस्य दीपवद्योहृदि स्थितः ।
अन्तश्चरसि भूतेभ्यो गुहायां विश्वतो मुखः ॥१७३॥
त्वं यज्ञस्त्वं वषट्कार स्त्वं विष्णोः परमं पदम् ।
आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम ॥१७४॥
अमृतोपस्तरणमसीत्यापः प्राश्य विधिवज्जुहुयात् ।
कोष्ठ वह्निना, प्राणो पान स्तथा व्यानः समानो दान मेवच ॥
प्राणस्य त्रिपुटीग्रासमपानं मुद्रां(?) गुष्ठके ।
व्यानस्य शृङ्गिण्यां गुष्ठे तर्ज्जन्योदानां(?)गुष्ठके ॥१७६॥
समानं सम्पुटी ग्रासं पञ्चग्रासाः प्रकीर्तिताः ।
प्रणवादि स्वाहान्तश्च पञ्च दद्यान्मनाहुतीः ॥१७७॥
वाग्यतः शेषमश्नीयादग्निहोत्रं दिने दिने ।
शब्दः स्पर्शस्तथा रूपं रसो गंधस्तु पंचमम् ॥१७८॥
जाग्रत्स्वप्नं सुषुप्तश्च तुरीयाश्च स्थानिकं तथा ।
पंचमध्यगतो विष्णुर्हस्ते यः भुञ्जते सदा ॥१७९॥
अन्नार्थी प्लवते वायुरन्नार्थी प्लवते नलः ।
अन्नार्थी वाप्ययं सूर्यो रसान् गृह्णाति रश्मिभिः ॥१८०॥
यथाहि क्षुधितो बालो मातरं पर्युपासते ।
एवं सर्वाणि भूतानि आविशन्त्यात्मघातिनः ॥१८१॥
एवं ज्ञात्वा तु यो विप्रो विधिवच्चान्नमश्नुते ।
आत्मानं च तथान्नंच दातारं चैव तारयेत् ॥१८२॥
तर्पितं तेन सम्पूर्णं विश्वं भुवनसप्तकम् ।
दैवे पित्र्येच यद्भुक्तं तदक्षयमुदाहृतम् ॥१८३॥

एवं यो भुज्यते नित्यं निरग्निर्मोक्षमाप्नुयात् ।
नोच्छिष्टवोच्छिष्टमादद्याज्जग्ध्वान्नं नैव दापयेत ॥१८४॥
आसनो पादरूढस्तु न भुंजीत कदाचन ।
उच्छिष्टे घृतदानश्च पायसं ताम्रभाजने ॥१८५॥
लवणं क्षीर संयुक्तं त्रीण्येतानि न भक्षणम ।
उच्छिष्टे दानमादद्यात् तप्तकृच्छ्रं व्रतं चरेत् ॥१८६॥
ताम्रस्थो पायसं भुक्त्वा चरेच्चान्द्रायणं शुचिः ।
अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिर संस्थितम ॥१८७॥
अघृताम्रपि(?)गोधूमायवान्नं गोरसः शुचिः ।
न सक्तौ पाकदोषः स्यात् सिद्धे धान्ये तथैव च ॥१८८॥
घृतपक्वे गुड़ाक्तं च न दोषः परिविद्यते ।
अन्ने भोजनसंपन्नं मक्षिकाकेशदूषिते ॥१८९॥
अनन्निरस्पृशेन्नोधं(?)तं स्थानं भस्मना स्पृशेत ।
विप्रो विप्रेण संस्पृष्टो उच्छिष्टेन कदाचन ॥१९०॥
आचम्य तु ततः शुद्धः प्राणायामत्रयोदशैः ।
क्षत्रियेण यदास्पृष्टो उच्छिष्टेन कदाचन ॥१९१॥
स्नाने दाने भवेत् शुद्धिः प्राणायामैस्तु षोडशैः ।
उच्छिष्टेन यदास्पृष्टो वैश्ये विप्रस्तु क्षत्रियम ॥१९२॥
अपराह्ने विशुद्धिःस्यात्प्राणायामैस्तु विंशतिः ।
उच्छिष्टेन तु संस्पृष्टः शुनाशूद्रेण वा द्विजः ॥१९३॥
जपेत्सहस्रं गायत्रीमहोरात्रमुपोषणम ।
पंचगव्यं दिने प्राश्य सन्ध्योपास्ति करोति वै ॥१९४॥

कपिलाक्षीरपानेन श्वशूद्र स्पृष्टः शुद्धयति ।
मार्जारमक्षिकाकीटपतङ्ग कृमिदर्दुरा ॥१९५॥
मध्यामध्यस्पृशंरोपि न दोषः परिविद्यते ।
आक्रमेणैव मार्जारो शुनाघ्राते तथैव च ॥१९६॥
काकोच्छिष्टे ग्रहग्रस्ते तुल्यं गोमांस भक्षणम् ।
चंद्रसूर्यग्रहेनाद्यादद्यात्स्नात्वा विमुक्तये ॥१९७॥
अमुक्तयोरस्तङ्गतयो दृष्ट्वा स्नात्वापरेऽहनि ।
सर्वेषामेव वर्णानां सूतकं राहुदर्शने ॥१९८॥
स्नात्वा कर्माणि कुर्वीत पूर्वपाकं न भुज्यते ।
ग्रहकाले जपं स्नानं सग्रहे होममाचरेत् ॥१९९॥
मोक्षकाले तथा दानं विमुक्तौ स्नानमाचरेत् ।
नित्यं नैमित्तिकं काम्यं संकल्पं यन्नदीयते ॥२००॥
चंद्रसूर्यग्रहौ लंघंदृणं तस्य न मुंचति ।
मिष्टान्नं भोजनं कृत्वा आचम्य प्रयतः शुचिः ॥२०१॥
अर्द्धं पिबति गंडूषं भूमावर्द्धं परित्यजेत् ।
रसातलगता नागास्तेन प्रीणन्ति नित्यशः ॥२०२॥
भोजनासनमुत्सृज्य बाह्याचमनमाचरेत् ।
प्रक्षाल्य पाणि पादौ च ततः शुद्धिमवाप्नुयात् ॥२०३॥
ततः स धर्मविद्विप्रः किञ्चिदात्मनिमित्तये ।
सर्व्वकर्म्म परित्यज्य योगधर्मं समालभेत् ॥२०४॥
निरग्निके विधिर्ह्येष स्तथामाध्यन्दिने यजुः ।
ऋषीणामग्रे पुरागीता ब्रह्मणा च मयाश्रुतम् ॥२०५॥

नित्यश्राद्धविधिर्ब्रह्मन् ब्रह्मणानोदितः पुरा ।
नित्यं श्राद्धे च गंधाद्यै द्विजानभ्यर्च्य शक्तितः ॥२०६॥
सर्वान् पितृगणान् सम्यगिहैवोद्दिश्य भोजयेत् ।
आवाहानं स्वधाकार पिण्डाग्नौ करणादिकम् ॥२०७॥
ब्रह्मचर्यादि नियमो विश्वेदेवास्तथैव च ।
नित्यश्राद्धे त्यजेदेतं भोज्यमन्नं प्रकल्पयेत्॥ २०८॥
कुर्यादहरहः श्राद्धं अन्नाद्येनोदके न वा ।
पितृनुद्दिश्यदेवांश्च भोजयेद्विप्रमेव च ॥२०९॥
एकमप्याशयेद्विप्रं ब्राह्मणं .स्वगृहेगृही ।
स एव फलमाप्नोति नित्यश्राद्धस्य यत्नतः ॥२१०॥
अभ्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि ।
पितृभ्य इदमित्युक्त्वा हन्तकारः स उच्यते ॥२११॥

इति ब्रह्मप्रोक्ते याज्ञवल्क्ये नित्यश्राद्धे निरग्नियज्ञ विधिनाम
द्वितीयोऽध्यायः ॥

---

# अथ तृतीयोऽध्यायः

## नैमित्तिकश्राद्धविधिवर्णनम

अथातः सम्प्रवक्ष्यामि क्षयेऽहनि निमित्तकम् ।
अग्निहीनास्तु ये विप्रा मन्त्रे वाजसनेयिनि ॥ १ ॥
क्षयेऽहनि समामाद्य निमन्त्रे च द्विजोत्तमः ।
कुलीनः सर्वधर्मज्ञः श्रुतिः शास्त्र विशारदः ॥ २ ॥
शान्तादान्ताः सुशीलाश्च सर्वदाप्रियवादिनः ।
स्नातकश्चयतिश्चैव आहिताग्निस्तथैव च ॥ ३ ॥
प्रथमेऽन्हि निमंत्रीत(?) ब्राह्मणं संशितव्रतम् ।
प्रसीदामीति सोब्रूयादोग्धीमन्त्रमुदीरयेत् ॥ ४ ॥
क्षयेऽहनि समासाद्य स स्नात्वाविधिपूर्वकम् ।
स्नानं सन्ध्यां प्रकुर्व्वीत नित्यकर्म न कारयेत् ॥ ५ ॥
नित्यं नैमित्तिकं काम्यं त्रिविधं धर्म्मलक्षणम् ।
निमित्तन्तुव्यतिक्रम्य नित्यकर्म्म न कारयेत् ॥ ६ ॥
जपं होमं तथा दानं तर्पणं देवलार्च्चनम् ।
क्षयेऽहनि समासाद्य न कुर्यात्पूर्वमेव हि ॥ ७ ॥
क्षयेऽहनि समासाद्य न कुर्यात्पूर्वतर्पणम् ।
पितृघाती स विज्ञेयो वदत्येवं पितामहः ॥ ८ ॥
सामगायजुपापूर्व्वं बह्वृचा च तथान्तके ।
द्रुहिणेन इदं प्रोक्तं कुर्यान्नैमित्तिकीं क्रियाम् ॥ ९ ॥

एकोद्दिष्टे निमित्तं तु तथा विप्रविसर्ज्जने ।
नित्यकर्म्म ततः कुर्यात्तर्प्पणं देवतार्च्चनम् ॥१०॥
नित्यनैमित्तिके चैवद्वावेतौ परमार्थिनौ ।
नैमित्तिकेव्यतीते तु ततोनित्यं समाचरेत ॥११॥
एकोद्दिष्टं सदा कुर्याच्छ्राद्धं पितृक्षयेऽहनि ।
न चेतु पार्व्वणं शस्तं(?)क्षयेहनि मनोषिरसि च ॥१२॥
न सुस्वाम्रृद्धन्नयः (?) शंसितव्रताः ।
ऊचुस्ते संशमानानां(?)यनीश्वरीअर्घ पिण्डी तथा ॥१३॥
ज्योति मेप्येकी(?) कृतं यदि पितरः ।
कथमायान्ति (?) प्रमाणैर्वैदिकैर्यदि ॥ १४ ॥
समुद्धरति प्रेतत्वं प्राप्नोति पितृमण्डलम् ।
पुनः प्रेतत्वमायान्ति एकोद्दिष्टं यथाकृतम ॥१५॥
निरग्निः साग्निकश्चैव सपिण्डी करणेकृते ।
एकोद्दिष्टं कृतं येन स विष्णुर्वलि(?)शुध्यति ॥१६॥
इन्द्रियाणां मनोनाथो नक्षत्राणां यथा शशी ।
तथा श्राद्धन्तु विज्ञेयं पार्वणं वै यथाविधि ॥१७॥
आकर्ण्य वचनन्तेषां याज्ञवल्क्यो महामुनिः ।
उवाच परमं वाक्यं मुनीनां हितकाम्यया ॥१८॥
पार्व्वणं कुरुते यो वै केवलं पितृहेतुना ।
मातामह्यान कुरुते पितृहा स प्रजायते ॥१९॥
मातामहपितृणान्तु विशेषो नोपलभ्यते ।
विशेषं कुरुते यस्तुनरकं स ध्रुवं व्रजेत् ॥२०॥

तस्मात्सर्वं प्रयत्नेन निरग्निः पार्व्वणं त्यजेत् ।
साग्निके पार्व्वणं कुर्यादेकोद्दिष्टं तथान्तिके ॥२१॥
चैताग्नि(न चैवाग्नि)गृहे येषां मातापित्रोः क्षयेऽहनि ।
न तेषामधिकारोऽस्तिएकोद्दिष्टे कदाचन ॥२२॥
सपिण्डी करणादूर्ध्वमग्नियुक्तस्य पार्व्वणम् ।
अनग्नेस्तु क्रिया नान्या एकोद्दिष्टे कृते क्वचित् ॥२३॥
एकोद्दिष्टं सदा श्राद्धं श्रेष्ठं पितृक्षयेऽहनि ।
न तु वै पार्व्वणशस्तं येषामग्निर्न विद्यते ॥२४॥
एकोद्दिष्टं परित्यज्य मृताहेऽन्यं समाचरेत् ।
सभवेत्पितृहन्ता च तस्मात्तं परिवर्जयेत् ॥२५॥
पौर्णिमायाममावास्यां तथा कन्यागतेरवौ ।
एकोद्दिष्टं तु मातुः स्यात्पितुरेव हि पार्व्वणम् ॥२६॥
नान्यकाले प्रशंसन्ति क्षयेऽहनि तु पार्व्वणम् ।
अग्नि हीनास्त्रयो वर्णाः प्रमीत पितृकाश्चये ॥२७॥
एकोद्दिष्टं सदातेषां विप्राय ह्यवर्ज्जितः ।
एकोद्दिष्टं तु शूद्रस्य शस्तं पितृक्षयेऽहनि ॥२८॥
वर्षे वर्षे तु कर्त्तव्यं पितृमातृपरायणैः ।
पात्रं पत्नीविधिरनाङ्ग(?)देशकालौ क्षमादया ॥२९॥
एतदेवोच्यते श्राद्धं वह्निकान्ति(?)समन्वितः ।
एक पिण्डे त्रयोभागाः पितु स्तेषां त्रयस्त्रयः ॥३०॥
एवं षड्गुणमायाति एकस्यामन्त्रणे कृते ।
एकं वार्षिकमायातं सपिण्डीकरणे कृते ॥३१॥

एकस्यापि हि दत्तेन षट् तृप्तिं यान्ति तद्दिने ।
पितृपक्षेत्वमावास्यायां भवेन्मातुक्षयेऽहनि ॥३२॥
एकोद्दिष्टं तु मातुः स्यात्पितुरेवहि पार्व्वणम् ।
चरण क्षालनात्पूर्व्वं पुनर्ब्रह्मनिमन्त्रणं ॥३३॥
आसनार्च्चनसंयुक्तं अर्घ्यश्च प्रतिपद्यते ।
अग्निष्वात्ताः पितृगणाः प्राची. रक्षन्तुमेदिशम् ।
तथा वर्हिषदः पान्तुयाम्यां मे पितरस्तथा ॥३४॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः ।
रक्षो भूतपिशाचेभ्यस्तथैवासुर दूपकः ॥३५॥
सर्वतश्चाधिपत्ये(?) पांयमोरक्षां करोतुमे ।
दक्षिणे कटि देशे तु प्राग्रगेषु कुशेषु च ॥३६॥
तर्जयन्तीह दैत्यानां यथावृत्तामयन्तथा ।
एकोद्दिष्टमेकार्धन्तु तदग्नौ करणं बिना ॥३७॥
नावाहनं सविरेन्न दैवं विगताशिपम् ।
तस्य तस्यैव दातव्यं यस्य यस्य क्षयेऽहनि ॥३८॥
नान्यस्यतस्य दातव्यमित्येपानैगमी श्रुतिः ।
विकरेण सदा कुर्यात्पार्वणन्तु विधीयते ॥३९॥
अग्निवान्पार्व्वणं कुर्यान्न कुर्यादग्नि वर्ज्जितः ।
पार्व्वणेषु सपिण्डेषु वृद्धौ नान्दी मुखं तथा ॥४०॥
एकोद्दिष्टेऽपिकर्त्तव्यं विकरन्तु द्विजातिभिः ।
उभौ यस्य व्यतीते च जीवेच्च प्रपितामहः ॥४१॥

पितुरेकैव दातव्यं श्रुतिरेषा पुरातनी ।
पिताविश्रान्तिमापन्नो यस्यजीवेत्पितामहः ॥४२॥
भूमौ पिण्डद्वयं दद्यात्तृतीयं तस्य हस्तके ।
एकाह्निके विवाहे च प्रेतान्नं वृद्धिमादिकम् ॥४३॥
प्रेतपूर्व्वादिकं वृद्धि कुर्यात्स्वायम्भुवोऽब्रवीत् ।
आहवेषु तथोत्पाते एकाह्ने(एकस्थाने,वा मृतान्बहून् ॥४४॥
पाकमेकम्प्रकुर्वीत पिण्डांश्चैव पृथक् पृथक् ।
मधुमन्नं घृतैर्युक्तं पानीयं पायसन्तथा ॥४५॥
कुतपं तिलसंयुक्तं ज्योतिश्चैवाष्टमी तथा ।
कपित्थं श्रीफलाकारमष्टाङ्गं पिण्ड उच्यते ॥४६॥
तिलैरुथ्याप्यते मूर्द्धा क्षीरे बाहु घृते हृदि ।
मधुना चैव नासा हि तोये हस्तौ तु पादयोः ॥४७॥
ज्योतिश्चैव तु जीवंस्यात्पिण्डनिर्व्वापनं स्मृतम् ।
अनन्तपिण्डयानायसजीव पिण्ड उच्यते ॥४८॥
माषः सर्वत्र नैवेद्यः पिण्डे अग्नौ च वर्ज्जयेत् ।
यथा मद्यं तथा मांसं निषिद्धश्चाग्निपिण्डयोः ॥४९॥
कूष्माण्डं महिषीक्षीरं अविकं राजसर्षपाः ।
कुसुम्भं राजमाषाश्चमसूराश्चणकास्तथा ॥५०॥
कोद्रवा यूषकाश्चैव सर्वे ते श्राद्धघातकाः ।
तुषहीनानि धान्यानि सर्वे यान्ति पवित्रताम् ॥५१॥
वर्ज्जयित्वा मसूरान्नंकवुष्ठा राजमाषकम् ।
मसूरं मासिकं सस्ये यले(वे) जंवीरमेव च ॥५२॥

आमिषं कृत्ति पानीयमारनालमथामिषम् ।
आमिषं शुक्तिकापूर्णं गोवर्ज्यक्षीरमामिषम् ॥५३॥
दुनोति तण्डलान्यत्र क्षीरसंयोगतः क्रमात् ।
तत्र क्षारं प्रवक्षेत होमे नित्ये च वर्ज्जयेत् ॥५४॥
श्राद्धे त्रीणि पवित्राणि त्रपुसीमधुसैन्धवाः ।
अन्ये त्रीणि पवित्राणि दौहित्रंकुतपास्तिलाः ॥५५॥
दौहित्रंगोघृतं ज्ञेयं कुतपं पायसं स्मृतम् ।
मन्त्राश्चैव तिलाज्ञेयाः श्राद्धकर्म्मणि सर्व्वदा ॥५६॥
पिण्डनिर्व्वपनं पूर्णमर्च्चयित्वा यथाविधि ।
गन्धपुष्पैस्तथा धूपैर्नैवेद्यादिभिरर्च्चयेत् ॥५७॥
रक्तचन्दन हरिद्रा च रोचना कृष्णमृत्तिका ।
नार्च्चयेत्पार्वणे पिण्डान्क्षयेऽहनि विशेषतः ॥५८॥
कुदशाभोम्तु(?) नादेयं नोन्मत्तं गरुड्ध्वजे ।
पिण्डे जातिं च नोदद्या देव्या पाक्तं(साकं)न्न पूजयेत् ॥५९॥
जातीपुष्पं तथार्क्कञ्च किंशुकं करवीरकम् ।
पितृमूर्धनि योदद्यात्स एव पितृघातकः ॥६०॥
एकोद्दिष्टे तथा काम्येदं (देवादौ) चान्ये पितृपूजने ।
ब्राह्मणे च तथा पिण्डे पुष्पाणीमानि (ण्येतद्वि) वर्जयेत् ।
कदम्ब-विल्व-सपुष्ट-तुलसी-काष्ठचन्दनम् ।
(दद्यात्)पितॄन्समभ्यर्च्य पितॄणां वाञ्छितः सुतः ॥६१॥
तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तद्विष्णोः परमं पदम् ॥६२॥

तुलसी भृंगराजं च अपामार्ग शमीन्तथा ।
पितृमूर्धनि यो दद्यात्स याति परमां गतिम् ॥६३॥
अवनेजनयोश्चासु स्वदितं प्रष्ठ(?) मेवच ।
अक्षय्यमुपतिष्ठन्तु अभिरम्य विसर्ज्जनम् ॥६४॥
अघोराः पितर.संतु संकल्पं दक्षिणास्तथा ।
तिलकं च ततः कुर्यान्मन्त्रमेवमुदीरयेत ॥६५॥
नित्यं निष्ठः(तिलैः)ससंतर्प्य सर्व्वदा यज्ञबुद्धयः ।
पितृमातृपराः सन्तु सन्त्वस्मत्कुलजाजनाः ॥६६॥
मधुव्वाता ऋचा पूर्व्वं पङ्क्तौ (यां) पिण्डं विसर्ज्जयेत् ।
वाजे वाजे जपेन्मन्त्रं शामवाजस्तथैव च ॥६७॥
वहिः प्रदक्षिणं कुर्यादच्छिन्नजलधारया ।
स्वाष्टुपथ(पितृसूक्तं)जपेत्कर्त्ता ब्राह्मणैः सहपठेद्द्विजाः ॥६८
सर्वे श्राद्धावसाने च एतन्मन्त्रद्वयं पठेत् ।
स्वादुपथ(पितृस्तोत्रं)जपेत्कर्त्ताब्रह्मणा सहपठेयु(त्) द्विजाः ॥
ब्राह्मणं तदनुव्रज्य द्विजां(?) पीडां प्रशाम्यति ।
नैमित्तिकमिदं कुर्याद्ब्राह्मणः पितृपूजकः ॥७०॥
एकोद्दिष्टविधिर्ह्येष भवेद्वाजसनेयिनाम् ।
तेषां माध्यन्दिनी शाखाये द्विजा अग्निवर्ज्जिताः ॥७१॥
नित्यकर्म्म ततः कुर्यात्तर्प्पणं देवतार्च्चनम् ।
देवाग्निगुरुवालानां यतीनां ब्रह्मचारिणाम् ॥७२॥
श्राद्धपाकेन दातव्यो। यावत्पिण्डं न निर्व्वयेत् ।
श्राद्धेऽहनि न यो दद्याद्वासः वासांसि वाससी ॥७३॥

सप्तजन्मनि नग्नत्वं जायन्ते पितरस्तथा ।
एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ॥७४॥
मासेऽन्यस्मिन्तिथौ तस्मिन्श्राद्धं कुर्यात्प्रयत्नतः ।
यस्य सम्वत्सरान्मोहाद्व्यतिक्रान्तोद्विजन्मनः ॥७५॥
श्राद्धं तस्य प्रकुर्वीत अन्यस्मिन्मासि तद्दिने ।
एतत्ते सर्वमाख्यातमेकोद्दिष्टं निमित्तकम् ।
अतः परम्प्रवक्ष्यामि काम्यश्राद्धमनुत्तमम् ॥७६॥

इति श्री मद्ब्रह्मोक्त याज्ञवल्क्ये नैमित्तिके एकोदिष्टश्राद्ध-वर्णनम नाम तृतीयोऽध्यायः ॥

---

# अथ चतुर्थोऽध्यायः

## श्राद्धवर्णनम

कर्त्तव्यं विधिवच्छ्राद्धं गृहस्थः प्रतिपर्वणि ।
श्राद्धकालमहं वक्ष्ये धर्मारोग्यसुखप्रदम ॥ १ ॥
अमावास्यार्कसंक्रान्तिव्यतीपातेऽयनद्वये ।
गजच्छायाष्टकान्तिस्रो युगाद्याविषुवद्वयोः ॥ २ ॥
ग्रहणं चन्द्रसूर्याभ्यांकृष्णपक्षेनभस्य च ।
कृष्णपक्षे सदा कुर्य्यात्कर्म्मणांसिद्धिहेतवे ॥ ३ ॥
शुद्धद्रव्ये समुत्पन्ने स्वकीयगृहमागते ।
वृद्धौतीर्थे च संप्राप्ते तथा कन्यांगते रवौ ॥ ४ ॥

त्राण(कुतपं) पूर्वमेवोक्तं श्राद्धकालाः प्रकीर्त्तिताः ।
मध्यान्हसमये किञ्चिच्चलिते सप्तसप्तके ॥ ५ ॥
स कालः कुतपोनाम पितॄणादत्तमक्षयम् ।
अग्र्यः सर्वपुदेवेपुश्रोत्रियोवेदवित्तथा ॥ ६ ॥
पारगः सर्वविद्यानां ऋत्विक्श्वशुरमातुलाः ।
सोदर्य्योऽप्यथ वा माता ब्रह्मज्ञोब्रह्मविद्यतिः ॥ ७ ॥
वेत्ति यो वेदतत्त्वार्थं त्रिमधुर्ज्येष्ठसामगः ।
त्रिसुपर्णं तपोनिष्ठो याज्यसम्वन्धिबान्धवाः ॥ ८ ॥
पितृमातृपरो नित्यं दान्तो यः स्मृतिपारगः ।
ब्राह्मणो यः पुराणानां वेत्ति पुण्यानि पुण्यकृत् ॥ ९ ॥
एकैकसम्भवेच्छ्राद्धे नियोज्याः पङ्क्तिपावनाः ।
पुराणविदुपा श्राद्धं करोत्यस्मत्कुलेयदि ॥१०॥
अनन्ता जायते तृप्तिर्वदते च पितामहाः ।
ज्ञातपूर्वक्रमानविप्रान सर्वान्श्राद्धं नियोजयेत् ॥११॥
सरोगविकलक्लीबहीनांगो वेदविक्रयी ।
कुकुमामरजम्र पी (?) शूद्रान्नादीदिसञ्ज्ञकः ॥१२॥
कुण्डाशी पतितश्चैव गोतपौनर्भवादयः ।
स्नानदानविहीनश्च सर्व्वाशीसर्व्वनिन्दकः ॥१३॥
परविन्नावकीर्णी च क्रयविक्रयकारकः ।
पाषण्डी च विकर्मी च छिद्रान्वेषी तथाऽशुचिः ॥१४॥
दाम्भिको बकवृत्तिश्च कृतघ्नो गुरुदूपकः ।
अपूर्व्वपतितश्चैव वृपलीपतिरेव च ॥१५॥

सदासेवी च खल्वाटः कुप्रतिग्रहकारकः ।
अज्ञातकुलगोत्रो यः द्विर्न्नग्नो(?)शिल्पिकर्मकृत ॥१६॥
भृतकाध्यापकश्चैव श्वित्री कुष्ठीस्तथैव च ।
काणश्चद्राविड़श्चैवालोमावहुलोमजः ॥१७॥
कुलाचारविनिर्भ्रष्टो लोकदुष्टस्तथैव च ।
अवकीर्णी कुण्डगो कुनखी श्यावदन्तकः ॥१८॥
मित्रध्र क्पिशुनोऽव्याधिवाग्दुष्टः पापकृत्तथा ।
कुणपायुधजीवी च अग्निदो गरदस्तथा ॥१६॥
सोमविक्रयकारी च तिलकर्म्मानुजीवकः ।
पितृमातृपरित्यागी मद्यपी गंडमालिनः ॥२०॥
वृषलीपति दुष्कर्म्मा राजयक्ष्मी तथैव च ।
अव्रतानामुपाध्यायकाण्डपृष्ठाश्चयेद्विजाः ॥२१॥
सर्व्वनार्हन्तिते श्राद्धे पितृकर्म्मसु वर्ज्जयेत् ।
द्विजशायन काले च पुत्रप्रतिनिधधनयः (?)॥२२॥
सर्वे ते पुत्रिकाप्रोक्ता कणदुष्टाननाधमाः ।
अयतिर्मोक्षवादी च चतुर्थाश्रमवर्ज्जितः ॥२३॥
कृतघ्नश्चकुलीनश्च गुरुघातक यो द्विजः ।
धर्म्माचारविहीनाश्च एताञ्छ्राद्धे पुवर्ज्जयेत् ॥२४॥
एकैकमपिविद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलंफलमाप्नोति नान्या (?) चार्च्चैत्तथावहून् ॥२५॥
सहस्रं हि सहस्राणामनृचा (?) यत्रपूजयेत् ।
एकैकमपि विद्वांसो सर्वानर्हन्ति धर्म्मतः ॥२६॥

प्रथमेऽहनि मन्त्रे च द्वितीयेह्नि तथैव च।
श्राद्धकर्त्ता तथा भोक्ता तथाशीलपरायणौ ॥२७॥
दक्षिणं जानुमालम्ब्य समत्वञ्चनिमन्त्रितः।
त्वया संयमिना भाव्यं मया च श्राद्धकर्मणि ॥२८॥
आमन्त्रितो द्विजस्तत्र दोग्ध्री मंत्रमुदीरयेत्।
देहमाश्रित्य तिष्ठन्ति पितरस्तस्यमहात्मनः ॥२९॥
वायुभूताश्च विप्राणां तनुमाश्रित्यभुञ्जते।
वन्धुदत्तं सुधान्नञ्चतस्माद्विप्रमुधार्चयेत ॥३०॥
पितापितामहश्चैव तथैव प्रपितामहः।
समीहन्तु सुताः सर्वे मातृपक्षे विशेषतः ॥३१॥
भुञ्जन्ति विप्रकोशेषु पितरोऽन्तर्हिताः सदा।
तस्माद्विप्रपितृविद्यान्पितृदत्तान्प्रपूजयेन ॥३२॥
द्वि पार्व्वणं प्रकर्त्तव्यं द्वयंपाके सकृत्तथा।
एकाह्निके समुत्पन्ने पार्वणं च क्षयेऽहनि ॥३३॥
प्राज्ञः क्षयाहे कुर्वीत पश्चात्पाकंतुपार्वणम्।
पितृपक्षे त्वमावास्या पितृमातृक्षयेऽहनि ॥३४॥
पितुस्तु पाकं (पार्वणंकार्य,)एकोद्दिष्टन्तु मातृकम।
अन्येषां भ्रातृमित्राणां पार्व्वणं आममाचरेत् ॥३५॥
दशै(एकै)कस्मिन्पञ्च वा विप्रान्पार्व्वणे विनियोजयेत।
द्वौ दैवे प्राक्त्रयः पित्र्ये एकैकंस्वपितुस्त्रयः ॥३६॥
द्वौ दैवे पितृकार्येत्रीनेकं चैव प्रकल्पयेत।
एकं दैवं तथा पित्र्ये धनं विप्राह्वयावतः(?) ॥३७॥

योजयेच्छ्राद्धदानेन पितृयज्ञं न लोपयेत् ।
मातामहानामप्येवं कर्त्तव्यं वैश्वदैविकम् ॥३८॥
सदा चैवं प्रकुर्वीत काम्यकेषु विशेषतः ।
द्रव्याभावे द्विजाभावे विष्णुं सन्निध(सान्निध्यं)योजयेत् ।३६
श्राद्धपाकं पुरस्कृत्य विष्णवे परमात्मने ।
दीपज्योतिः समायुक्तमुपकल्प्य जनार्दनं ॥४०॥
अनेनैव विधानेन द्विजाभावे करोति यः ।
पितरस्तस्यतृप्यन्ति सोमपाने दिने दिने ॥४१॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतम् ।
तेन ते भगवानीशो नित्यं प्रीणाति केशवः ॥४२॥
पुनर्भोजनम्मध्यान्हेऽध्ययनं मैथुनं तथा ।
दानं प्रतिग्रहोऽध्वक्लेशं भुक्तवाष्टकम्विवर्जयेत् ॥४३॥
श्राद्धे अध्वाभवेदश्वः पुनर्भोजी च वायसः ।
मैथुने रेत अश्नाति दुष्टान्ने नरकं व्रजेत् ॥४४॥
अध्ययने तु भवेत्प्रेतो दानेभवतिराक्षसः ।
प्रतिग्रहे भवेद्दासोऽध्यापने कुक्कुटोभवेत ॥४५॥
तस्मात्सर्वप्रयत्नेन कर्त्ता भोक्ता तु वर्ज्जयेत् ।
ब्राह्मणन्तु समामाद्यश्राद्धं कुर्यात्प्रयत्नतः ॥४६॥
द्वौ दैवे प्राक्त्रयः पित्र्ये एकैकमुभयेऽथवा ।
मातामहानाप्येवं तंतं वा वैश्वदेविकम् ॥४७॥
श्वानचाण्डालवाराह कुक्कुटाश्वरजस्वलाः ।
यत्रैते निवसन्तीह श्राद्धं तत्र न कारयेत् ॥४८॥

शूद्रश्च पाक रोगी च नगाक्षुपनकादयः ।
पाखण्डी च विकर्म्मी च कुष्ठी च भ्रूणहातथा ॥४६॥
यत्रैतेन्वेपयन्नित्यं(निवसन्तीह) श्राद्धकालंव(स)वर्ज्जयेत् ।
यवंधान्यश्चगोधूममुद्‌गा वा प्रशक्करा ॥५०॥
तुपहीनास्तथा मापाः श्राद्धकर्मणि योजयेत् ।
श्राद्धेषु नागरं देयं लवणं सैन्धवन्तथा ॥५१॥
गव्यन्तु पायसं देयं पितॄणां दत्तमक्षयम ।
कूष्माण्डंवर्ज्जयेन शुद्धमन्नंह विन्न(व्यन्त)ण्डुलीयकम् ।५२
गन्धारिकापटोलानि श्राद्धकर्मणिवर्जयेत ।
शुद्धमन्नं हविष्यान्नं विष्णुमान्निध्यभोजनम ॥५३॥
अन्नाभावे तु कर्त्तव्यं शाकमूलफलेन वा ।
अर्घ्यार्थमाहरेत्पात्रं सजलं मागरोद्भवम् ॥५४॥
सौवर्ण राजतं ताम्रं तथा खद्गोद्भवं(?) शुभम ।
प्रशस्तं दारुणं वावि(?)पात्रं कुर्याद्विचक्षणः ॥५५॥
मृत्स्ना तथाकांस्यं मारकूटादि सम्भवैः ।
त्रपुसीसकलोहैश्च अर्घ्यपात्रे विसर्ज्जयेत् ॥५६॥
कायवाधामनार्त्तश्च(?) वेगयाधाविसर्ज्जितः ।
मनोवाक्कायशौची च श्रद्धयाश्राद्धदोभवेत् ॥५६॥
क्षान्तोदान्तः शुचिः स्नातो धौतवासाजितेन्द्रियः ।
श्रद्धावाञ्छ्राद्धकृन्निष्ठो विप्रागमनकांक्षया ॥५७॥
अपराह्णे समभ्यर्च्य स्वागते कामके सदा ।
पवित्रपाणिराचम्य आसनेपूपवेशयेन ॥५८॥

दत्वार्घ्यं क्षालयेत्पादावाचम्यक्षालयेत्पुनः ।
पूजयेत्पुनराचम्यविप्राणाभ्य(म)न्तरे (?) दिशेत् ॥५६॥
(स्यात्)स्वात स्वागतंतइति ब्रूयात्विश्वेदेवाःपितॄन्स्तथा ।
सुस्वागतं च ते ब्रूयुस्तिलैरवकिरन्मयम् ॥६०॥
दैवे युग्मायथाशक्ति पित्र्ये चैव यथाविधि ।
प्राङ्मुखास्तेसदादैवे पित्र्ये कार्यो(र्या) उदङ्मुखाः ॥६१॥
श्राद्धार्हास्ते उपविष्टाश्च न स्पृशेयुः परस्परम् ।
ब्रह्मयोग्याकथाकुर्युः पितॄणांमे तदीप्सितम् ॥६२॥
अग्निष्वात्तारय(दयः) सर्वे रक्षार्थे पितृगणाह्वये ।
तिलान्वाशर्पपानः पीतादिग्रहा(?)पितृगणैः सह ॥६३॥
दक्षिणेकटिदेशे तु प्रागग्रेपु कुशेपु च ।
तृणमावध्य सहासीत तिलैः सह कुशत्रयम् ॥६४॥
प्राणायामंततः कुर्याद् गायत्रीस्मरणन्तथा ।
श्राद्धकर्त्तास्मि वै ब्रूयात विप्रैर्वाच्यं कुरुष्व वै ॥६५॥
दर्भांश्चैवासने दद्यात्पितॄणां द्विगुणं तथा ।
सजलैश्च यवैः दर्भाः सजलैश्च तिलैः पितॄन् ॥६६॥
देवानां दक्षिणेदद्यात्पितॄणामप्रदक्षिणे ।
नामगोत्रं स्वधाकर्म्म स्वागतं ब्राह्मणस्य च ॥६७॥
संकल्पासनदानेपु ततोऽर्घ्यं च समारभेत् ।
पाद्यार्घ्यमासनं गोत्र मर्घं पिण्डावनेजने ॥६८॥
गोत्राणां चैव कर्मणां पृष्ट्वामक्षयाकोस्तथा(?) ।
गोत्रानावाहने प्रोक्तं गोत्रेभ्यः सङ्कल्प उच्यते ॥६६॥

अर्घ्यपात्रं समानीय कुशतोयसमन्वितः ।
शन्नो देवी पयः क्षिप्त्वा यवोऽसीति यवंक्षिपेत् ॥७०॥
गन्धपुष्पादिसम्पूर्णः प्रश्नं कुर्याद्विचक्षणः ।
परिपूर्णं च त इत्युक्त्वा विश्वेदेवान्समाव्हयेत् ॥७१॥
विश्वेदेवास आगत शृणुतामपिम ऽह्वं(?) ।
आगच्छन्तु महाभागा विश्वेदेवा महावलाः ॥७२॥
यो यत्रावाहिता(विहिता) श्राद्धे मावधाना भवन्तु ते ।
मन्त्रेणानेन वै तत्र अर्घ्यं विप्रकरे न्यसेत् ॥७३॥
ततस्तुक्रमयोगेनपित्र्यमर्घ्यन्तु नियोजयेत ।
कुशमम्बुतिलैर्युक्तमायान्तु पितरस्तथा ॥७४॥
तिलोऽसिपितृदैवत्योर्जपेन्मन्त्रान्क्षिपेत्तिलान् ।
शन्नोदेवीपयः क्षिप्त्वा शेषं पूर्ववदाचरेत् ॥७५॥
स्वगोत्रनामशर्म्मेति उशन्तस्त्वेति वै क्षिपेत् ।
आवाहयेत्पितृन्भक्त्याजपेदायन्तुनः पुनः ॥७६॥
पितृवत्पूजनंकृत्वामन्त्रेणैव प्रयत्नतः ।
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥
नमः स्वाहायै स्वधायै नित्यमेव भवन्तु मां ॥७७॥
या दिव्या आप पयसा भूर्यान्तरिक्षा उतपार्थिवीर्या हिरण्यवर्णायज्ञियास्तान आपः शिवाः मः स्योना सुहूता भवन्तु एपते अर्घ्य इति प्रथमे पात्रे सस्रवान्समवनीयं दत्वार्घ्यम्पूजयेत भक्त्यागन्धपुष्पानुलेपनैः ।

तदर्घलभनं कुर्यात्कर्त्ता भोक्ता तथैव च ।
पितृभ्य स्थानमसीतिन्युब्जीकुर्यात्तं निदध्यादत्र ॥७८॥
अर्घ्यगन्धपुष्पदीपं वासां च प्रदानं सपविपितुः पात्रं
दक्षिणाधो मुखंन्यसेत ॥
यद्देवाहेडनश्चत्वारिऋग्भि(चैं) गंपोनिमन्त्रितम् ।
तेनान्नपाकं संस्कुर्या द्याति पाकपवित्रताम् ॥७६॥
तेन मन्त्रेण पानीयमन्नपाकन्तु संस्कृतम् ।
सूर्यस्पृष्टं तु दृष्टं वा तदन्नं न पुनीमहे ॥८०॥
तदग्नौ करणं कुर्यात्संगृह्यान्नं घृतप्लुतम् ।
अग्नौ कुर्यादनुज्ञातः कुरुष्वेति वदेद्द्विजः ॥८१॥
सव्येन जुहुयात्तत्र अग्नौ करणमाहुतिम् ।
साग्निकेऽअग्निकुण्डश्च निरग्निर्द्विज हस्तके ॥८२॥
अग्नौकरणमाहुत्या सव्येन जुहुयाद्धविः ।
अग्निकेऽग्निकुण्डश्च निरग्निर्द्विजहस्तके ॥८३॥
विप्रहस्ते तथा काष्ठे वडवाश्वदजामुखे ।
पाषाणचक्रनिर्भिन्ने वसेदप्सु च पावकः ॥८४॥
अग्नौकरणशेषन्तुविश्वेदेवाश्च हूयते ।
द्वाभ्यां प्रदीयते यत्र निराशाः पितरोगताः ॥८५॥
मातामहपुयोदद्यादग्नौकरणमाहुतिम्(ती) ।
निराशाः पितरस्तस्य पैशाचं श्राद्धमुच्यते ॥८६॥
श्राद्धपाकं समासाद्य विश्वेदेवाः प्रदीयताम् ।
दत्त्वा तु पूर्ववत्तेषां पितृणां तदनन्तरम् ॥८७॥

जलान्नपानं गन्धादि पुष्पधूपाम्तथैव च ।
देवपूर्व्वेणदातव्यं पितृपूर्वेण विमर्जयेत ॥८८॥
कर्पूरं रामठञ्चं व मरीचं च तथागुड़ं ।
श्राद्धकर्मणिशम्तानि मैन्धवं त्रपुसी तथा ॥८६॥
भक्ष्य भोज्यं तथा पेयं यत्किञ्चित्पच्यतेगृहे ।
पतन्तिकणिका श्राद्धं नताः मम्मार्जयेद्बुधः ॥६०॥
उष्णं स्निग्धं च मधुरं तथान्यत्प्रीतिकारकम ।
काशं पत्रं फलंतोयं पितृपूर्वन्नदापयेत ॥६१॥
विना मासेन यः श्राद्धं कृतमप्यकृतम्भवेन् ।
क्रव्यादापितरोयस्मादलाभे पायसादिके ॥६२॥
इक्षुः पयो घृतं शालि मुदगमापयवास्तथा ।
प्रसाधिकश्च शामाकान्गोधूमाश्चैवदापयेन ॥६३॥
कूष्माण्डावालवृतांकापालक्यातण्डुलीयकम ।
कुष्टान्नञ्च दग्धान्नं श्राद्धकर्म्मणिवर्ज्जयेत ॥६४॥
कालशाकम्महाशाकं पद्भलोहामपं मधु ।
आनन्त्यायोपकल्पन्ति जम्बीराणिविशेषतः ॥६५॥
यावदुष्णम्भवेदन्नं यावदश्नन्तिवाग्यतः ।
तावदश्नन्तिपितरः शेपान्नं राक्षसंविदुः ॥६६॥
तस्मादुष्णानिदेयानिस्निग्घानिमधुराणि च ।
प्राग्द्रव्याणि च देयानि विश्वेदेवान्ततः पितॄन ॥६७॥
दत्त्वान्नं पृथ्वीपात्रे इतः पात्राणिमंत्रितम् ।
'इदं विष्णुर्जपेन्मन्त्रं द्विजांगुष्ठानियोजयेत् ॥६८॥

निरङ्गुष्ठं तु यच्छ्राद्धं वहिर्जानुचयत्कृतम ।
अश्रद्धायाऽपिचयद्दत्तं सर्वं ज्ञेयं तदासुरम ॥९९॥
भाजनं लभनंयावद्भुक्त्वाचान्नं यथाविधि ।
यथासुखंजुपध्वं व इतिवाच्यमनुष्ठिते ॥१००॥
भुञ्जानस्तक(?)त प्राणस्पृष्टान्न सौ(?)सुखम ।
रक्षोघ्नी च जपेन्मन्त्रं तिलाश्चविकरेन्महीम ॥१०१॥
स्वाध्यायंश्रावयेद्विप्रान्पुराणान्यखिलानि च ।
इन्द्राग्नी सोमसूक्तञ्च पावमानीस्तथैव च ॥१०२॥
पुरुषसूक्तं यजुपा पिण्डब्राह्मणसत्पथः ।
पितृस्तवं तु पञ्चैव गायत्री मधुब्राह्मणाः ॥१०३॥
विप्राणामात्मनश्चापि एतत्सर्वं जपन्ति ये ।
तत्सर्वं च जपेच्छ्राद्धे प्राणायामन्तुकारयेत ॥१०४॥
पितृवत्तानद्विजान् सर्वान् ज्ञात्वा तृप्तिपृष्ट्वा ततः परम् ।
यूयं तृप्ताः ततः पृष्ट्वाशेपन्याथमन्वहम ॥१०५॥
स्वल्पमन्नमुपादाय विकीर्याऽऽचम्यवारिणा ।
देवपित्रान्तरे भूमौ मन्त्रेणानेनवैक्षिपेत ॥१०६॥
येपान्नं पचते मातायेपान्नं पचतेपिता ।
उच्छिष्टं ये नकाङ्क्षन्ति तेपां वै दत्तमक्षयम ॥१०७॥
तत आचमनं दद्यादनुज्ञातास्तु ये द्विजाः ।
कृताञ्जलिपुटोभूत्वा गायत्री च मधुजपेत् ॥१०८॥
मधुमन्नं समासाद्य अष्टांगं पिण्ड उच्यते ।
उपलिप्ते तदधिष्ठे गोशकृद्वारिणापिवा ॥१०९॥

चतुष्कोणन्तु विप्राणां त्रिकोणं क्षत्रियम्य च ।
मण्डलाकृतिर्वैश्यम्य शूद्रम्याभ्युक्षणंम्मृतम ॥११०॥
न(म)लापकर्पणं मर्वं म्थापयेन्नैऋृत्यांदिशि ।
वन्हिमादायतत्रैव निक्षिपेत्क(त्र)पुनर्निऋृतौ ॥१११॥
पितृरूपाश्च अमुराः पिशाचा अमुराम्तथा ।
तेपांवैरक्षणार्थायक्षिपेद्वन्हिन्तुनिऋृतौ ॥११२॥
यत्नात्पिण्डंप्रगृण्हीयात्प्रदद्यात्म्वयमेवहि ।
पूर्वन्तुविकरंदद्यात्कुशहीनंक्षिपेद्भुवि ॥११३॥
कपित्थैः श्रीफलैर्वापि पिण्डान्दद्यात्तुतत्समम ।
विकरं दद्याद्दैवपित्र्यान्ते तु भुवि (क्षिपेत) ॥११४॥
पिण्डमासनदर्भाग्रं दक्षिणं च तथोत्तरे ।
विकरं दद्यात्तत्र दातव्यं उच्छिष्टं न कदाचन ॥११५॥
उच्छिष्टन्तु यदादद्याद्विकरंतु द्विजातिभिः ।
पतन्तिविकरस्यापिपण्मामोच्छिष्टभोजने ॥११६॥
यदन्नं पिण्डदाने तु तदन्नं विकरेन्यसेत ।
क्षिपेत्पिण्डंजलाम्नौ वा विकरन्तत्रवैक्षिपेत ॥११७॥
काम्यके विश्वे दद्यात्क्षयाहे पिण्डमुत्तरम ।
विकरेण विनाश्राद्धं पुनः प्रेतत्वं जायते ॥११८॥
विकरं भूमिदातव्यंपद्माङ्गुल्येनमर्च्चयेत्(?) ।
कुशपुष्पतिलैर्युक्तं गाथातत्रमुदाहृतम् ॥११९॥
येषां न माता न पिता न बन्धुर्नवान्नदः ।

कश्चिदस्तिवंशे ते तृप्तयेऽन्नं भुवितेमत्प्रयान्तु
पोषायसुखाय ।
निधायदर्भम्विधिद्दक्षिणाग्रं (ग्यं) प्रयत्नतः ।
उदङ्मूलं समास्तीर्य दर्भान्नुच्छिष्टसन्निधौ ॥१२०॥
श्राद्धे संकल्पिते चैव उपवीते नीविबन्धने ।
गर्भहीनं कुशं कुर्याद्यदीच्छेच्छुभमात्मनः ॥१२१॥
विकिरं तत्र विन्यस्य आचम्य प्रयतः शुचिः ।
पिण्डदानं ततः कुर्याद्ध्यात्वापितृपरायणम ॥१२२॥
पिण्डे दद्यात्तु पूर्वेण सांगुष्ठं मुष्टिबन्धनात् ।
सव्य जानुमधः कृत्वाभूमौ पितृ परायणः ॥१२३॥
नामगोत्रस्वधाकारमुच्चार्यपितृपूर्ववन ।
पितृ पूर्वेण दातव्य पिण्डश्चैव त्रिकं त्रिकम ॥१२४॥
नामगोत्रम्वधाकारमुच्चार्य विधिपूर्वकम ।
दत्ते पिण्डं ततस्तेतु विसृज्याल्लेपभागिना ॥१२५॥
कुशाग्रं स प्रदातव्यं प्रीतन्त्रोलेपभागिनः ।
दत्ते पिण्डे ततस्तंतु पुनराचम्य चैव तु (तत) ॥१२६॥
सतिलमुदकं पित्र्यं पितृमूर्द्ध निवक्षिपेत ।
अत्र पित्रोनमोवः सांगुष्ठां ब्रह्मसूत्रकम ॥१२७॥
पितृंश्चमनसाध्यात्वाऽक्षतं निक्षिपेद्भुवि ।
गन्धपुष्पार्च्चनं कुर्यात्सफलं तत्प्रदक्षिणम् ॥१२८॥
समभ्यर्च्य ततः पिण्डान्समस्तकानुगः ।
आयु प्रज्ञां स्मृतिम्मेधां पुत्रानैश्वर्यमेव च ॥१२९॥

लभ्यन्ते (भते) श्राद्धदानेन पितृंस्तद्गतमानसम् ।
सुप्रोक्षिते ततः पिण्डान्द्वारि दद्यात्मकृत्सकृत ॥१३०॥

तथा पुष्पाक्षतश्चैवाक्षय्योदकमेव(?) च ।
सतिलै नामगोत्रन्तु दद्याच्छक्त्या तु दक्षिणाम् ॥१३१॥

प्राचीनावीतिना भूत्वा पितृर्वा तु कल्पयेत् ।
पूर्वेण च पितृन्दद्याद्विश्वेदेवान्तथान्तरे ॥१३२॥

असुरा पितृरूपेण अन्न मन्तिमान च ।
तेषाम्वै रक्षणार्थाय पश्चाद्विश्वेदवान्विसर्ज्ज येत् ॥१३३॥

न्यस्तपूर्व्वन्तु यत्पात्रं कृत्वा चैवाधोमुखम् ।
तत्रापि कुशमं गृह्य पिण्डान्तत्रं(?) प्रदापयेत् ॥१३४॥

तदुत्थानं ततः कुर्यात्पितृपात्राभितं पुनः ।
ऊर्ज्जदानं पितृणां च आचम्य प्रयतः शुचिः ॥१३५॥

ततस्तु दक्षिणां दद्यात्ब्राह्मणेभ्यो यथाविधि ।
आशिषः प्रतिगृह्णीयाद्द्विजेभ्यः प्राङ्मुखः सदा ॥१३६॥

अघोराः पितरः सन्तु स ब्रुयु(?)पुनर्द्विजः ।
गोत्रन्नोवर्द्धन्तां तथेत्युक्त्वातुते पुनः ॥१३७॥

दातारोनोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहु देयं च नोऽस्त्विवति ॥१३८॥

अतिथींश्च लभेमहि लभध्वंयाचितारश्च नः ।
सन्तु मास्म याचेत्कथश्चन मा याचेथाः ॥१३९॥

स्वस्ति भवन्त्विति तं ततस्तुतिलकं कुर्यान्मन्त्रेणानेन
यत्नतः ।
नित्यानिष्टानं सनिष्टाः सर्व्वदायज्ञ बुद्धयः पितृ मातृ-
परामत्त संत्वमस्कुल जानताः ।
पृच्छामासनमर्घ्यं पृरणतो आवाहनार्घ्यक्रमपूजा पात्र-
समर्प्पणाग्निहवनं पृथ्वीति कल्पाज्ञनम् ।
वालावं द्विजतृप्ति पिण्डयजने सुप्रोक्षिताक्षय्यके ॥
उर्व्वोड्विवदिज दक्षिणा च तिलकं विधेया पैतृकेदिने ।
ततः पिण्डं समुद्धृत्य आघ्राय पितृ मन्त्रकम् ।
वाजे वाजे जपेन्मन्त्रं आमावाजस्तथैव च ॥१४०॥
वहिः प्रदक्षिणं कृत्वा अच्छिन्नजलधारया ।
बन्धुवर्गेण सहितः सभार्यः सकुटुम्बकः (स्विनः) ॥१४१॥
पुनराचम्य तत्रैव स्वादुपजपेच्छुचिः(?) ।
ब्राह्मणैः स पटेत्तत्र श्राद्धं भोक्ता द्विजोत्तमः ॥१४२॥
स्वादुपः(?) जपेन्मन्त्रं श्राद्धकर्त्ता यथोचितम् ।
पितृ स्पास्तुते विप्राः ब्राह्मणस्य पटेत्पुनः ॥१४३॥
श्राद्धारम्भे तथा पादे विकरे पिण्डमेव च ।
ऊर्ज्जने (?) चैवपड्भिः (कृत्वा) आचमनं ततः ॥१४४॥
विसर्जयेत्ततो विप्राः (न) प्रणिपत्य पुनः पुनः ।
अद्वारमुपगच्छेयुः पुनराचमनन्ततः ॥१ ४५॥
वैश्वदेवं तत. कुर्यात्स्वशास्त्रोक्तविधानतः ।
भुञ्जीतातिथिसंयुक्तो भूरिभोजनबान्धवाः ॥१४६॥

जीवतो वाक्यकरणंमृते च भूरि भोजने ।
ऋणसंशोधनार्थायत्रिभिरेव सुतः सुतः ॥१४७॥
उच्छिष्ट मार्ज्जनं यावन्न कृतं मुनिसत्तमः ।
तावदश्नन्तिपितरः स्वधाधारामि मिश्रितम ॥१४८॥
ब्रह्मचारी भवेत्तत्र रजन्यां ब्राह्मणैः सह ।
सन्नियम्येन्द्रियग्राममात्मचिन्तनतत्परः ॥१४९॥
श्राद्धम्भुक्त्वा भवेत्पश्चात्पुनर्भोजी च वायसः ।
मैथुने रेत अश्नाति दुष्टान्नेनरकं व्रजेत् (वसेत) ॥१५०॥
रतश्चानुमतं तत्र ऋषि सर्गे प्रजापतिः ।
अग्निहीनास्तुये विप्रास्तथा माध्यन्दिनो द्विजाः ॥१५१॥
तथा वाजसनेयिनः प्रोक्ताः कलौ श्राद्धपरायणाः ।
कुर्यात्साधारणं श्राद्धं सर्वकाम फलप्रदम् ॥१५२॥
ततो मांसं प्रवक्ष्यामि श्राद्धार्थे सम्प्रकल्पयेत ।
मात्स्यहारिणऔरभ्रशाकुनिच्छागपार्षतैः ॥१५३॥
एणरौरववाराहशाशैं मांसं यथाक्रमम ।
मास वृद्धाभितृप्यन्ति उक्तमेवं पितामहैः ॥१५४॥
खड्गामिषं महाशल्कं त्रिमधून्यन्नमेव च ।
लोहामिषकालशाकं मासं वार्ध्रीणमक्षयम ॥१५५॥
अलाभे पायस कुर्यात्तगोक्षीरं तण्डुलैः सह ।
तृप्तिर्द्वादशवर्षाणि इक्षवः संयुतः पितृन ॥१५६॥
पित्र्यर्थे पायसं कुर्यान्न कुर्यादामिषोऽपिवा ।
मुन्यन्नेषु यथा प्रीतिः पितृणान्नतथापले ॥१५७॥

श्राद्धेषु पायसं श्रेष्ठं मुद्गमाषं तथैव च ।
स्व शाखिनं सामगं श्रेष्ठं पितॄणां दत्तमक्षयम ॥१५८॥
अटेन पृथिवी सर्वां सशैलवनकाननम् ।
लभेत यदि पित्र्यर्थे साम्नामक्षर(?) वित्तकम ॥१५६॥
काम्यकातिथि कर्त्तव्या (व्यं) श्राद्धकर्म्म द्विजातिभिः ।
पौर्णिमा श्राद्धदानेन सम्पूर्णफलमश्नुते ॥१६०॥
कुर्व्वन्वै प्रतिपच्छ्राद्धं प्रभूतं धनमश्नुते ।
श्रीकां लभते भद्रां तृतीयामश्वमेव च ॥१६१॥
चतुर्थीं क्षुद्रपशवः पुत्रान्प्राप्नोति पञ्चमीम् ।
षष्ठी च द्यूतविजये लभेद्वाणिज्य सप्तमीम ॥१६२॥
अष्टमी वा एकशाकं नवमी दशमी च गो ।
एकादशी धनं धान्यं द्वादशीं च हिरण्यकम ॥१६३॥
कुप्यं गाति त्रयोदश्यां हितं शस्त्रचतुर्दशीम् ।
अमावास्या च सर्वेषां फलम्प्राप्नोति काम्यके ॥१६४॥

इति श्रीब्रह्मप्रोक्ते याज्ञवल्क्ये पितृकल्पे काम्य-
प्रकरणे चतुर्थोऽध्यायः ।

---

# अथ पञ्चमोऽध्यायः

## श्राद्धवर्णनम्

अथातः सम्प्रवक्ष्यामि आम श्राद्धं च कल्पना।
द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥१॥
आमश्राद्धं प्रकुर्व्वीत यस्यभार्या रजस्वला।
आपन्ननग्नौ तीर्थे च चन्द्र सूर्यग्रहे तथा ॥२॥
आमश्राद्धं प्रकुर्व्वीत शूद्रं कुर्यात्सदैवहि।
सक्तुभिः पिण्डदानं च पिण्याकेन गुडेन च ॥३॥
कर्त्तव्यं ब्रह्मणा प्रोक्तं चरुणा पायसेन वा।
आमश्राद्धमिदं गुह्यं तथा पाकविवर्ज्जितः ॥४॥
तृप्ताः प्रश्नविहीनस्तु आमेह्यं नानिवर्ज्जयेत्।
आमं वा यदि वा पक्वं विप्रेभ्यो यत्प्रदीयते ॥५॥
ते नाग्नौ करणं कुर्याद्भूमौ पात्रं निधापयेत्।
आमेन कुरुते श्राद्धं विप्रान्पक्वेन भोजयेत् ॥६॥
तावुभौ ब्रह्मणा प्रोक्तं नरकाहो (?) न संशयः।
पिंडं निर्वापरहितं यत्र श्राद्धं विधीयते ॥७॥
स्वधावाचन लोपोऽस्ति विकरस्तु न लिप्यते।
अग्नौकरणमर्घ्यं च आवाद्भ्रमवते (?) जनम् ॥८॥
पिण्डं श्राद्धेषु कर्त्तव्यं पिण्डहीनं विवर्ज्जयेत्।
अयने विषुवे चैव मन्नमम(मन्वादिषु) युगादिषु ॥९॥

श्राद्धं कुर्व्वीत यत्नेन पिण्डनिर्व्वपनं विना ।
मघायुगादौ(?) भरण्यां यत्नेन परि वर्ज्जयेत् ॥१०॥
पिण्ड श्राद्धं न कुर्व्वीत यदिच्छेत्सुत जीवितम् ।
याम्यं वा पैतृकं वापि पितृनपक्षे विशेषतः ॥११॥
तत्र सङ्कल्पना कुर्यात्पितृणां पुष्टिदः सदा ।
मन्वादिश्च युगादिश्च मघा च भरणी तथा ॥१२॥
श्राद्धं तत्र प्रकुर्व्वीत पिण्डनिर्व्वपनं विना ।
यद्ददाति गयास्थस्य सर्वकामन्त्यमश्नुते ॥१३॥
तथा मघाभरण्योश्च त्रयोदश्यां विशेषतः ।
प्रौष्ठपदस्य द्वादश्यां पितृभ्योऽर्पयतेयदि ॥१४॥
तत्र सङ्कल्पना श्राद्धं पिण्डनिर्व्वापरक्षणम् ।
यदा सङ्कल्पं कुरुते द्वादश्यां च मघायुताम् ॥१५॥
अहं सङ्कल्प मन्तुष्टव(?) पितामहः ।
पितृपक्षे त्रयोदश्यां पिण्ड श्राद्धं न कारयेत् ॥१६॥
कुर्वन्वै कल्पना साद्धं मघासह मघां विना ।
कुहूपूर्णेतुपञ्चम्यां यः श्राद्धं कुरुते नरः ॥१७॥
कामिकं तु वरं पुत्रं लभते नात्र संशयः ।
प्राशनं मध्यमं पिण्डं पितामह स जीवति ॥१८॥
नारी प्रसूयते पुत्रं लभते नात्र संशयः ।
कल्पना च त्रयोदश्या आनन्त्यायोपकल्पते ॥१९॥
प्रतिपत्प्रभृतिह्येतद्वर्ज्जयित्वा चतुर्द्दशीम् ।
शस्त्रेण तु हताये वै तेषां श्राद्धं प्रदीयते ॥२०॥

पितृपक्षे चतुर्दश्यां यः श्राद्धं कुरुते नरः।
सन्ततिस्तु हनिष्यन्ति विनाशस्त्रहते मृते ॥२१॥
श्राद्धं दानं चतुर्दश्यां विनाशस्त्रनिपातने।
ज्येष्ठपुत्रो विनश्यति पितृणाम्वा अधोगतिः ॥२२॥
स्वस्थमृत्युः पिता यस्य शस्त्रघाती पितामहः।
पार्वणञ्चेति विज्ञेयंत्रयस्तेशस्त्रघातकाः ॥२३॥
मध्यमं युग्मपिण्डौ च त्रिहंगं वारिउद्धरेत्।
पितामहं तथाप्येके त्रयस्ते शस्त्रघातकाः ॥२४॥
यथाविहंगो पक्षाभ्यां अगमाश्रित्यतिष्ठति।
तथा पिता स्ववृक्षं च पितामहसमाश्रितः ॥२५॥
मृत्काष्ठोपललौहेषु विद्युद्घातविषादिभिः।
नखीदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी ॥२६॥
जलादिषु विपन्ना ये वन्हौ पाकरकेहताः।
पक्षिशस्त्रविपन्ना ये तेषां शस्ता चतुर्दशी ॥२७॥
कण्ठपाशविपन्नाये योगिनीवापमृत्युना।
ततोवृष्टिविपन्ना ये तेषां शस्ता चतुर्दशी ॥२८॥
विप्रशापहताये च अग्निदग्धामृताश्चये।
तेषां श्राद्धं प्रशंसन्ति पितृपक्षेचतुर्दशी ॥२९॥

इति श्री ब्रह्मोक्ते याज्ञवल्क्ये आत्मकल्पनाशस्त्रहते यजुषा
निरग्निःश्राद्धविधिवर्णनं नाम पञ्चमोऽध्यायः

———

# अथ षष्ठोऽध्यायः

## श्राद्धवर्णनम

अथातः सम्प्रवक्ष्यामि मातृणां पूजनं पृथक् ।
पिता सर्वत्रपुत्रे सपत्नीकामभीप्सतः ॥ १ ॥
वृद्धे चादौ गयावाते(तीर्थे)मध्ये अन्वष्टकासु च ।
पृथक् श्राद्धं च नारीणामन्यत्र पतिनासह ॥ २ ॥
वृद्धे श्राद्धं त्रयं कुर्यात्तत्रादौमातृकंस्मृतम ।
द्वितीयं पैतृकं ज्ञेयं तृतीयं मातामहं सदा ॥ ३ ॥
पाकं वा तु वहिःशालां मोदनं वरदं दधि ।
नान्दीमुखेषु कर्त्तव्यमामश्राद्धं सदामुने ॥ ४ ॥
दधिवदराक्षतमिश्रं स्यात्पिण्डनिर्व्वपनं बुधैः ।
यवश्वऋजवो दर्भास्तिलार्थे च यवाः स्मृताः ॥ ६ ॥
सम्पन्नमिति पृच्छार्थो नित्यकर्म्मसुपूर्वकम् ।
वृद्धौ विवाहे यज्ञे च मातृणां कुलपूजने ॥ ७ ॥
नव दैवतकं श्राद्धेऽब्रवीत्स्वायम्भुवः परम ।
मातृश्राद्धं तु पूर्वं स्यात्पितृणां तदनन्तरम ॥ ८ ॥
ततो मातामहानां च वृद्धिश्राद्धत्रयं स्मृतम् ।
गयायां पुष्करे चैव तथा अन्वष्टकासु च ॥ ९ ॥
पितु मुख्ये न कर्त्तव्यं पार्वणं तु चतुष्टयम् ।
जीवे भर्त्तरि वामे च मृतेभर्त्तरि दक्षिणे ॥१०॥

श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा।
पार्व्वणेषु सपिण्डेषु वृद्धावन्वष्टकासु च ॥११॥
क्षयाहे पर्व्वणि पूर्व्वं विश्वेदेवान्प्रपूजयेत।
मन्वादिश्चयुगादिश्च तथाकाम्येषुपार्व्वणे ॥१२॥
विश्वेदेवा अपूज्याश्चेद्यत्करोति नतत्कृतम।
याज्ञवल्क्यादिदं श्रुत्वा ऋषयः शंसितव्रताः ॥१३॥
ते पृच्छन्तिमहात्मानं मिथिलास्थंतपोधनम।
कस्मिन्श्राद्धेषु के पूज्या विश्वेदेवामहाबलाः ॥१४॥
ये यत्र विहिताः श्राद्धे कथयस्व महामुने।
तपः स्वाध्यायनिरतो प्रहृष्टो वाक्यमब्रवीत ॥१४॥
क्रतुर्दक्षो वसु. सत्यः कामः कालोधृतिः रुचिः।
पुरूरवोमाद्रवसौ नाकश्चैव तथापरः ॥१५॥
द्वादशश्चाग्नि सर्वश्च मर्वव्याणनिगद्यते।
एवं द्वादश विख्याता विश्वेदेवास्तुधर्मजाः ॥१६॥
पर्व्वकाले क्रतुर्दक्षोश्चमुः सत्यौ च नान्दिके।
कामः कालो नवश्राद्धे काम्ये च धृतिलोचनौ ॥१७॥
पुरूरवोमाद्रवसौ(पुरूरवामाडवश्चैव)क्षयेऽहनि तु पार्व्वणे।
सपिण्डीकरण श्राद्धे एको नाकः प्रकीर्त्तिताः ॥१८॥
पितृन्यज्ञे तथान्येषुत्रिदशैर्विष्णुरूपिणः।
विश्वारूपास्तथाख्याताधर्मजा धर्मनन्दनः ॥१९॥
श्राद्धकालेषु पूज्यन्ते ये यथा परिकीर्त्तिताः।
वैशाखेतृतीयाशुक्लेस्मिते नवमी कार्त्तिके ॥२०॥

माघेपञ्चदशी कृष्णा अश्विन्यां च त्रयोदशी ।
हुतं दत्तं तथा श्राद्धं युगादिष्वक्षयम्भवेत ॥२१॥
आश्विने नवमी शुक्ला द्वादशी कार्त्तिकस्य च ।
तृतीया चैत्रमासस्य तथाभाद्रपदस्य च ॥२२॥
फाल्गुनस्यत्वमावास्या पौषस्यैकादशीसिता ।
आषाढ़स्यापिदशमी माघमासस्य सप्तमी ॥२३॥
श्रावणस्याष्टमीकृष्णा तथा पाढ़ी च पूर्णिमा ।
कार्त्तिकी फाल्गुनीचैत्री ज्येष्ठीपञ्चदशी तथा ॥२४॥
मन्वन्तरादिषु(दयश्चैता) सर्वदत्तंस्यादक्षयकारकम् ।
पिण्डायत्र न पूज्यन्ते तत्र चत्वारिवर्ज्जयेत् ।
अर्घ्यमावाहनं चैव विकरश्चावनेजनम ॥२५॥
इति श्री ब्रह्मोक्तं याज्ञवल्क्ये यजुपानिरग्निकैवृद्धिः
प्रकरणंनाम षष्ठोऽध्यायः ।

---

# अथ सप्तमोऽध्यायः

## श्राद्धवर्णनम्

अथातः सम्प्रवक्ष्यामि सपिण्डीकरणेविधिः ।
स्त्रियाश्च पुरुषस्यैव श्रुतिरेषा पुरातनी ॥१॥
मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसम्वत्सरं चैव+आद्य एकादशेऽहनि ॥२॥
द्वादशाहे त्रिपक्षे च षण्मासे मासिकेऽब्दिके ।
श्राद्धानिषोडशैतानि संस्मृता (तानि) परमेष्ठिना ॥३॥
यस्य संवत्सरादर्वाक्सपिण्डीकरणं भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात्सम्वत्सरं द्विजाः ॥४॥
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
त्रीणि पित्र्ये चतुष्टयं त्रीणि पितॄणामेकं ॥५॥
प्रेतस्य प्रेतपात्रं पितृ पात्रेऽथ सिञ्चति ।
ये समानाह्व मिति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥६॥
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।
अत ऊर्ध्वम्प्रदातव्यं प्रेतान्नं प्रतिवत्सरम् ॥७॥
यस्मिन्नहनिप्रेतः स्यात्तस्मिन्नहनि दापयेत् ।
यस्यैतानि न दीयन्ते प्रेतश्राद्धानिषोडश ॥८॥
पिशाचत्वं स्थिरन्तस्य दत्तैः श्राद्धशतैरपि ।
पति मेके न कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ॥९॥

सा मृतापि गतैकत्वं सर्व्ववर्णेष्वयं विधिः।
स्वेनभर्त्रा समं श्राद्धं मान(?)मुक्तं सदैव हि ॥१०॥
पितामह्यपि स्वेनैव स्वेनैव प्रपितामही।
श्वश्रू जीवति भर्त्तारं स्नुषा चान्तर्हितं यदि ॥११॥
अर्धं पिबति भर्त्तारं पिण्डं विसृज्य मेलयेत्।
यस्यजीवे पितुर्मातृ भ्राता भार्यापि जीवति ॥१२॥
सपिण्डीकरणं तस्य पितामहपितृत्रयम्।
सर्वासामेवपत्नीनामेकाचेत्पुत्रिणी भवेत ॥१३॥
तेन पुत्रेण सर्वास्ता ग्राह्याः पुत्रवती ह्यजः (प्राह)।
पिताविश्रान्तिमापन्नो यस्यजीवेत्पितामहः ॥१४॥
वृद्ध प्रपितामहः श्राद्धं कुर्यात्प्रेतादिकी क्रियाः।
वृद्धश्चैवतु यत्पात्रंतस्मिश्चे त्प्रपितामहम ॥१५॥
तत्सुतः सिंचयेत्पात्रंतत्सुतः सिंचयेत्पुनः।
वृद्धप्रपितामहं पिण्डंतत्त्रिधा कारयेद्बुधः ॥१६॥
प्रकर्पणगते प्रेते नापिता प्रेत उच्यते।
पितुः पितामहे जीवे (वति) पुत्रश्चेन्म्रियतेयदि ॥१७॥
सपिण्डी करणं तस्यवसुरुद्रादित्यान्वै पितॄन्।
सपिण्डी करणा दूर्ध्वं यावदब्दत्रयं भवेत ॥१८॥
वहिः श्राद्धं प्रकुर्वीत न कुर्याद्भूरि भोजनम्।
तीर्थ स्नानं महादानं यवान्यत्पितृतर्प्पणम ॥१९॥
अब्दमेकं न कुर्वीत महागुरु निपातने।
यथाज्योतिर्गुणान्सर्वान्प्रच्छादयति भास्करः ॥२०॥

पितृ द्वारं तथा प्रे तं (तां) वर्ष माच्छाद्य तिष्ठति ।
स्नानं दानं तथा तीर्थं श्राद्धं च पितृ तर्पणम् ॥२१॥
सपिण्डीकरणादूर्ध्वं कुर्यात्पुत्रः सदैवहि ।
दशम एकादशे चैव द्वादशे वा तथैव च ॥२२॥
प्रमादात्पोडशे वापि कुर्यात्प्रेतादिकां क्रियाम् ।
अश्विनी पुष्य हस्तं च स्वाति श्रवण रेवती ॥२३॥
न कुर्यात्प्रेतकर्म्माणि सपिण्डीकरणादिकम् ।
पतन्ति पितरस्तस्य नरके घोररौरवे ॥२४॥
एकान्हे अहेपड(?) देदशाहेकादशे तथा ।
द्वादशाहे पोडशं च मासे चैव त्रिरब्दिके ॥२५॥
तथात्रिमासेपण्मासे दशमे ऊनवार्षिकम् ।
सपिण्डी करणे श्राद्धं वृषोत्सर्गं च पोडशे ॥२६॥
औरसक्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोपविद्धश्च दायादो बान्धवाश्चषट् ॥२७॥
औरसो धर्मपत्नीतस्तत्समः पुत्रिकासुतः ।
न्यायमार्गेषु यो जात औरसः परिकीर्त्तितः ॥२८॥
क्षेत्रज्ञः क्षेत्रजातस्तु स्वगोत्रेणेतरेण च ।
यथा गावश्व शंडश्च क्षेत्र शंडश्च क्षेत्रज्ञः ॥२९॥
पुत्र इत्युच्यते पितृमातृषु योदत्तः संस्कारकरः ।
स्वगृहे कृतं स्वज्ञाति जात उच्चैर्वा सदत्तःपरिकीर्त्तितः ॥३०
दद्यान्मातु. पिता यस्मात्सपुत्रो दत्तको भवेत् ।
ज्येष्ठज्ञातिस्वयं जातः पाल्यः कृत्रिम उच्यते ॥३१॥

गृहे प्रच्छन्नउत्पन्नो गूढजस्तु सुतः स्मृतः ।
स्वज्ञातिजातो यस्त्यक्तः सनालः सगरस्तथा ॥३२॥
उत्सृष्टा गृह्यते यद्यत्स्व सोपविद्धो भवेत्सुतः ।
दायादाः सर्व धर्मेषु तथा सन्तान कारकः ॥३३॥
यज्ञ कर्मणि दाने च षड्यथा परिकीर्त्तिताः ।
कानीनस्य सहोजश्च क्रीतः पौनर्भवस्तथा ॥३४॥
स्वयंदत्तापविद्धश्च बान्धवाः षट् प्रकीर्त्तिताः ।
कानीनः कन्यकाजातो मातामह सुतो मतः ॥३५॥
अथ स्व ज्ञातिजोवापि गृहिण्या स सहोजः(?) ।
पितृ मातृश्च (मातृभ्यां) च विक्रीतो दासः क्रीतस्तूच्यते ॥
अक्षतायां क्षतायांच पुनर्भूतः पुनर्भवः ।
स्वयंदत्तापविद्धश्च पूर्वमेव प्रकीर्त्तिताः ॥३७॥
अश्राद्धेया अपाङ्क्तेया दायादःपुत्र उच्यते ।
अन्तेवासिनि चाण्डाल गरदे पङ्क्तिदूषके ॥३८॥
गृहे सूतके ग्रन्थभेदी दैवे पित्र्ये च (न) योजयेत् ।
आश्रमादाश्रमं गच्छेच्चतुर्थे वाश्रमे वसेत ॥३९॥
निवृत्तः सर्वकार्येषु अन्तर्वासी स उच्यते ।
चण्ड (ण्डाल) स्तुन हितः क्रोधे अदम्रो दभ्रवारणे ॥४०॥
यस्य विप्रस्य(?)तस्मादं चाण्डालत्वं विनिर्दिशेत् ।
गरद इत्युच्यते वेदस्वाधीत्याध्यापयेत्पुनः ॥४१॥
स कल्पं सरहस्यं च विप्रौऽसौ गारदः स्मृतः ।
श्रतिस्मृतिरतोनित्यं प्रतिग्रहपराङ्मुखः ॥४२॥

तथा पङ्क्तिरभोजी च स विप्रः पङ्क्तिदूपकः ।
शरीराणीन्द्रियान्याहुः शरीरं गृह उच्यते ॥४३॥
स्ववशे तस्य तिष्ठन्ति स विप्रो गृहमूपकः ।
दशग्रंथि समायुक्तं शरीरं यस्य देहिनाम ॥४४॥
यस्तं भिन्दति ज्ञानेन ग्रन्थभेदी स उच्यते ।
वार्त्ता वृत्तिश्च शाली च जपावृत्तो घोर सन्यस्तः ॥४५॥
यज्ञे दाने तथा श्राद्धे दत्तं भवति चाक्षयम ।
स्वगृहे वर्त्तते नित्यं श्रतिस्मृत्यवगाहनम ॥४६॥
अयाचितेषु गृह्णीयाद्वार्त्ता वृत्तिः स उच्यते ।
शीलोऽछ्छ यास्तु (या) वर्वर्त्ति प्रतिग्रह विवर्ज्जितः ॥४७॥
भुञ्जीतातिथि संयुक्तो वृत्तशालीनको द्विजः ।
मासीनं यस्तु गृण्हीयात्सभक्तं न्यस्तु गृह्णाति ॥४८॥
कुशूलं कुम्भीधान्यानि जापा वृत्ति स उच्यते ।
चतुर्थं साहसंयुक्तो अन्नं पर्णन्तु संस्थितः ॥४९॥
तद्गतेन्यत्प्रगृह्णीयाद्विप्रोऽसौ घोरसः स्मृतः ।
ते धन्यास्ते कृतार्थाश्च पितृभिश्चैव दापयेत ॥५०॥
येषु श्राद्धेषु भुञ्जीत ब्राह्मणं च यथोन्नतम ।
असम्मानात्तपो वृद्धि. सम्मानाच्च तपः क्षयः ॥५१॥
अर्च्चितः पूजितो विप्रो दुग्धा गौरिव शान्तये ।
कृष्णसारो मृगो यत्र मंद्रं यदुपि(?) उत्तमम ॥५२॥
ब्राह्मणा वन्हिहीनाश्च तत्र श्राद्धे मयोदितम ।
चाण्डालैः पशुकंठ पाश निगडैर्वापाक्षितैर्द्रंष्ट्रिभिः

विद्यु च्छस्त्र विदग्रहाग्नि मुदकं पापाण सर्पम्विषम ।
पिड्वारूढ विदेश मृत्यु शकटे कूपेप्रपातेष्वपि
अश्वाष्ट्रोवृषभस्तथात्महनने कुष्टेऽप्यपस्मारिणि ॥५३॥
लूता विप्लव शीतलोश्च (श्व) वहते भवंत् ।
देवर्षीणां च संसर्गे मनुनाऽहं तथैव च ।
पितृ कल्पगि (?) स्तं ब्रह्मणा भापितं मम ॥५४॥
अग्निहीनाश्च ये विप्रा मंत्रे वाजसनेयिनः ।
तेषां श्राद्धं प्रशंसति परमेष्ठी पितामहः ॥५५॥
अत ऊर्ध्वम्प्रवक्षामि सर्वेषां धर्म्ममुत्तमम ।
यस्मिन्देशे मृग कृष्णस्तस्मिन्धर्म्मान्निबोधत ॥५६॥
पितुरब्दमशौचस्यात्पण्मासान्मातुरुच्यते ।
मासत्रयं तु पत्नीनां नारायणबलिक्रिया ॥५७॥
अन्येषां चैव गोत्राणां त्रिपक्षे बलि विष्णुना ।
अंगानि वेदाश्चत्वारोमीमांसान्याय विस्तरः ॥५८॥
पुराणंधर्म्मशास्त्रं च विद्याश्चैव चतुर्दश ।
पुनर्मन्वङ्गिरोव्यासो गौतमेत्युशनोयमः ॥५९॥
वशिष्ठदक्ष सम्वर्त्त शातातपपराशरः ।
आपस्तम्बस्तु हारीतः शंखः कात्यायनोगुरुः ।
ब्रह्मा तृ (त्रि) विष्णव ह च धर्म्म शास्त्र प्रयोजकाः ॥६०॥

इति श्रीब्रह्मप्रणीतेयाज्ञवल्क्येधर्मशास्त्रेयजुपानिरग्निपितृकल्पम् सप्तमोऽध्यायः ।

---

# अथाष्टमोऽध्यायः

## तत्रादौ ब्रह्मचारिधर्मवर्णनम

अतः परं प्रवक्ष्यामि लोकानांधर्म्ममुत्तमम ।
ब्राह्मणाद्यास्तुवर्णानां यथावदनुपूर्वशः ।। १ ।।
निषेकादिश्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।
आरामिकोनापितश्च दारुहःकांसघातकः ।। २ ।।
लौहकः कुम्भकारश्च पड्प्रकृत्या च उत्तमाः ।
सूतकश्चक्रिणस्तथाध्वजहोच्छिष्टभोजी च खड्गकृत्या-
धमाधमाः(?) ।।३।।
गर्भाधानमृतौ(?) पुंसवनस्यन्दनात्पुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येतेजाः (?) कम च ।। ४ ।।
अहन्येकादशेनाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनंमासि चूडा कुर्यात्तथाकुलम ।। ५ ।।
एवमेनः शमं याति वीजगन्(?)समुद्भवम् ।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तुसमन्त्रकः ।। ६ ।।
गर्भाष्टमेऽष्टमेचाब्दे ब्राह्मणस्योपनायनम ।
राज्ञामेकादशेवर्षे विंशामेकेयथाकुलम् ।। ७ ।।
ब्रह्मणाकथिता(नि) पूर्वं संस्काराणि निबोधत ।
ब्रह्मचर्यसवामस्य कार्यं विप्रस्यपञ्चमे ।। ८ ।।
राज्ञोबलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ।
सर्वेषां भोजयेत्तं च मध्यान्ह(ह्णार्क)गत(?)विधिः ।। ९ ।।

विधिवद्वन्हिं संस्थाप्य पात्रोत्सादनमेव च ।
पर्युग्नशिरालङ्कृत्य(?) पश्चादग्ने स्थि (?) वीन् ॥१०॥
ब्रह्मचर्यमार्यभागा च गुरोर्वाचयत्यब्रवीन् ।
पीतवस्त्रं यथेन्द्राय मन्त्रवत्परिधापयेन ॥११॥
येनेन्द्राय सुमन्त्रेण कौपीनमुपकल्पयेत् ।
इयं दुरुक्तमुच्चार्य युवामुवासास्तथैव च ॥१२॥
मेखलां तत्र विन्यस्य शिष्यायब्रह्मवर्चसे ।
ब्रह्मसूत्रं समादाय गायत्र्या चाभिमन्त्रितम् ॥१३॥
यज्ञस्यत्वेतिमन्त्रेण ब्रह्मसूत्रं समर्पयेत् ।
अनेनमन्त्रेणयज्ञस्यत्वायज्ञस्योपनह्याम्युपनीते नोपनह्यामि
आयुष्यंवर्च्चस्यथंरायस्योपमौद्भिदं ।
इति मंत्रेण गुरुश्चैव पठेन्मन्त्रंव्रतंकृणतस्तथैव(?) च ।
योमेदण्डः परापठे दंण्डंसमाददे ॥
ब्राह्मणो बिल्वपालाशौ क्षत्रियोवटखादिरौ ।
पिप्पलोदुम्बरौ वैश्ये दण्डग्राहीतिधर्मतः ॥१४॥
शिरोललाटनासाग्रे ब्राह्मणक्षत्रियविशाम् ।
मुष्टिंद्वादशाजिनंमेखलांदशहस्तक(योः) (?)॥१५॥
पल्व च त्पात (?) ब्रह्मचारी गृहस्थयोः ।
पण्णवत्य(र)ग्रजेप्रोक्ता चतुरशीति बाहुजे ॥१६॥
पञ्चसप्तति वैश्यस्य संख्येयमुपवीतके ।
ऐणेय रौरवं विप्रे क्षत्रियस्याजिनंस्मृतम् ॥१७॥

अजंगव्यन्तु वैश्यस्य सर्वेपा शुभकृत्तथा ।
विप्रस्यमेखलामौञ्जी मौर्वास्यात्क्षत्रियस्य च(स्तथा) ॥१८॥
शणसूत्रा तु वैश्यस्य त्रिविधा मेखला मता ।
प्रत्यक्षमलाभे चैव कुशाश्मन्तकवल्वजौ ॥१६॥
प्रवराग्रंथिभेदाश्च संस्कृत्यं च त्रिभिस्तथा ।
स्याद्भिरञ्जलिना (?) आत्मना पूरयेद्धनुः ॥२०॥
आपोहिष्ठेतितिसृभिरभिपिच्य पुनः पुनः ।
सूर्यस्योद्धेपणशिष्यं(?)तच्चक्षुर्मन्त्रंवर्ज्जयेत ॥२१॥
शिष्यस्य हृदयालंभमत्रतेत्युदाहरेत ।
शिष्यस्य हस्तमादाय कोनामासीतिपृच्छति ॥२२॥
स्वनामग्रहणेशिष्यः शर्माहम्भोद्विजोत्तमाः ।
इन्द्र .ब्रह्मण अग्निश्च भवत्तो शिष्यउक्तवान् ॥२३॥
भूतेभ्यश्च प्रजापत्यं देवायत्वा तथैव च ।
सवित्रेभ्यो अद्भ्यश्चैव ओपधीभ्योपि समुच्चरेत ॥२४॥
द्यावापृथिवीदेवेभ्यो विश्वेभ्यश्चतथैव च ।
सर्वेभ्यस्त्वानुभूतेभ्यः परिदद्दामिक्रमेण तु ॥२५॥
अग्नेः प्रदक्षिणंकृत्वा उपविश्य यथाविधि ।
आज्याहुतीन्ततोहुत्वा शिक्षाशिष्याय उक्तवान् ॥२६॥
अथै (?) न .शास्त्रब्रह्मचर्चस्वीवीर्येणसंस्थितः ।
आपोशानक्रियां कुर्यात्सूर्यसंयुक्तं न स्वपेत् ॥२७॥
सत्यमेव हि वक्तव्यं सत्यसंधानमेव च ।
आपोशान क्रियानित्यं शिष्यो बाढं प्रवाच्यताम् ॥२८॥

अथ सावित्री मन्वाहुरग्ने रन्तरतस्तथा ।
प्रत्यङ्मुखोपविष्टश्च समीक्ष्य च गुरुं सदा ॥२९॥
आसीनं दक्षिणे वापि पत्संञ्च स(?) उत्तरेन ।
उपविश्यतु तत्रैव एन्द्राभिमुखो गुरुः ॥३०॥
यत्सोद्ध र्ञ समारभ्य वारुण्याभिमुखो(?)(खः) शिष्यः ।
सर्वां च तृतीये प्राप्यं महात्मनि उत्तरेन (?) ॥३१॥
सम्वत्सरे च षण्मासे चतुर्वि(विंशा) (?) हमेव च ।
द्वादशाहे च षडहे सद्यस्त्वे चापि दाव(प)येत् ॥३२॥
गुरो गायत्र्यादानाञ्च पितृवत्परिपालयेत ।
गुरोर्गावः प्रदातव्याः सुदुग्धाः वत्ससंयुताः ॥३३॥
गायत्री ब्राह्मणो दद्यात्त्रिष्टुभां क्षत्रियस्य च ।
वैश्याय जगतीं दद्याद् गायत्री त्रिष्टुवुच्यते ॥३४॥
त्रिपदा वापि सर्वेषां गायत्री परिकीर्त्तिता ।
येषां द्विजानां गायत्री कालातीते प्रमादतः ॥३५॥
प्राजापत्यत्रयं कुर्यात्ततोपनयनं विधिः ।
मन्त्रवित्समिधादानं पाणिनाग्नौ समूहनम् ॥३६॥
ॐ अग्ने सुश्रवः सौश्रवसंमांकुरु यथा त्वमग्ने ।
सुश्रवः सुश्रवा असि एवम्मा ॳ सुश्रवः
सौश्रवसंकुरु यथात्वमग्ने देवानां यज्ञस्य निधिपा असि
एवमहम्मनुष्याणां वेदस्य निधिपोभूयास ॳ स्वाहा ।
ॐ अग्नये समधि माहार्षं बृहते जातवेदसे यथा ।
त्वमग्ने समिधा समिध्य स एवमहमायुषा मेधया—

वर्च्च सा प्रजया पशुभिर्ब्रह्मवर्च्च मे न समिन्धे (धो)।
जीव पुत्रो ममा चार्यो मेधाव्यः हममान्यनि
राकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्य (स्व्य) न्नादो
भूयास ७ं स्वाहा। द्वितीया तृतीया इत्येवमुपोष्य इति-
वारिभिः।

सुश्रवा च पुनर्दद्यात्पूर्व्ववत्परिसमूहनम।
पर्युक्षोदकमादाय मुखं सम्मृज्य वै तथा ॥३७॥
तनूनपा अग्नेऽस्मि मन्त्रेण पाणिभ्यां च प्रतप्ते न च।
मेधाम्मेदेवः सवितः मेधां देवी सरस्वती ॥३८॥
मेधाम्मेऽश्विनौ देवा वाधत्ता पुष्करस्रजौ।
अंगानि च म आप्यायन्ताम् वाक्प्राणश्चक्षुरेव च ॥३९॥
श्रोत्रञ्च यशश्चैव वलमित्पर(?) उच्चरेत।
ललाटे भस्मना दद्याद् ग्रीवा दक्षिणतः स्तथा ॥४०॥
आयुषं च पठेन्मन्त्रं प्रतिमन्त्रं श्रियायुतम।
दक्षिणपात्रमादाय वामे हस्ते तथैव च ॥४१॥
भिक्षाचर्यमतः कुर्याद्भवो (?) ब्राह्मणः सदा।
भवत्पूर्वं ब्राह्मणस्तु भवन्मध्ये ब्र यादुरुजः ॥४२॥
भवदन्तस्तु वैश्यस्य भिक्षाचर्यं विधीयते।
दण्डाजिनोपवीतानिमेखलाश्चैव धारयेत ॥४३॥
ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्यं स्वात्मवृत्तये।
तदादौमातरं गच्छेद्भिक्षार्थे पुत्रक सदा ॥४४॥

तेषु तेषु च गृण्हीयाद्ब्राह्मणो ब्रह्मचारिणः।
गुरोर्भैक्ष्यं निवेदयित्वा(दित्वा) गुरोराज्ञामनुपालयन्॥४५॥
गुरोराज्ञां सदा तिष्ठंद् ब्रुवन्नेव मब्रुवोः(?)।
अरण्यात्समिधादाय तस्मिन्नग्नौ जुहोति च ॥४६॥
वाचं विसृजतेवाधःशायी(शिष्यः) तु नित्यशः।
अक्षारलवणाशीस्याद्दण्डधारी च सवदा ॥४७॥
अग्निपरिचरणं नित्यं गुरुशुश्रूषणं तथा।
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम ॥४८॥
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्।
दिवा सन्ध्यासु कर्णस्थ ब्रह्मसूत्र उदङ्मुखः ॥४९॥
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः।
गृहीतशिश्नश्चोत्थायमृद्भिरभ्युद्धृतैर्जलैः ॥५०॥
गन्धलेपक्षयकरं शौचंकुर्यादतन्द्रितः।
अन्तर्जानुः शुचौदेशे उपविष्ट उदङ्मुखः ॥५१॥
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्।
कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रंकरस्य च ॥५२॥
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्।
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्॥५३॥
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः।
हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ॥५४॥
शुद्ध्यन्स्त्री चैव शूद्रश्च सकृत्स्पृष्टवाभि( मन्त्रितम )न्ति हृतः।
स्नानमभ्युद्धृतैर्मन्त्रैर्मार्जनम्प्राणसंयमः ॥५५॥

स्नानं मन्त्रं तथा संध्यां कुर्यात्पूर्ववदाचरेत।
जपन्नासीत सावित्रीं प्रत्यङ्नातारकोदयात ॥५६॥
सन्ध्यांप्राक्प्रातरेवं हि तिष्ठन्नासूर्यदर्शनात।
अग्नि(कार्य)र्धं ततः कुर्यात्सन्ध्ययोरुभयो रपि ॥५७॥
ततोऽभिवादयेत्वृद्धानसावहमिति ब्रुवन।
गुरुञ्चवोपासीत स्वाध्यायार्थं समाहितः ॥५८॥
आहूतश्चाप्यधीयीत लब्धं वाऽस्मै निवेदयेत।
हितं चास्य चरेन्नित्यं मनोवाक्कायकर्मभिः ॥५९॥
कृतज्ञोऽद्रोहि मेधावी शुचिः कल्याणसूचकाः।
अथवा धर्मतः साधुः शक्तः प्रज्ञानवित्तदा ॥६०॥
दण्डाजिनोपवीतानि मेखलां चैव धारयेत।
त्रा(द्विजातिषु) ष चरेतभैक्ष्यमनिन्द्यं ष्वात्मवृत्तये ॥६१॥
कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया।
आपोशान क्रियापूर्वं सकृत्पात्रमहुत्सम( विशोधयेत )॥६२
ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि।
ब्राह्मणः काममश्नीयाच्छ्राद्धं व्रतमपीड़यन् ॥६३॥
मधुमांसजनोच्छिष्टमु(भु)क्तस्त्रीप्राणहिंसनम।
भास्करालोकनाश्लीलपरिवादादि वर्ज्जयेत ॥६४॥
स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति।
उपनीय वदेद्वेदमाचार्यः स उदाहृतः ॥६५॥
चत्वारिंशाष्टमधिकं पठेद्वेदं समाहितः।
यावद् वा ग्रहणं कुर्याद् ब्रह्मचर्यं समाचरेत ॥६६॥

वेदारम्भावसाने च वेदाहुत्या च हूयतं ।
पृथिव्याग्नयऋग्वेदेन्तरिक्षवायवे यजुर्दिवे मूर्याय सामेष
दिक्चन्दथर्वण एवच ।
वेदवेदद्वया हुत्यं भूरादिश्चाष्टमा हुतीम ।
ततो ब्राह्मण छन्दोभ्यः प्राजापत्याश्च देवादौ जुहुयात्स-
मग्राहुतिम ॥
व्याहृत्यायादशाहुत्या अन्यग्रन्थेष्वयं विधिः ।
असंयमेन योऽधीते अनार्य च (?) कदाचन ॥६७॥
ऋचैकासंयमस्थेन (येन) अधीतारयत्यपि ।
आमपात्रे यथान्यस्तं आपोमधुघृतं पयः ॥६८॥
न तिष्ठेत्पात्रदौर्बल्यात्तरसा तस्य भाजनम् ।
एवं ह्यपात्रसंयोगादधीतोऽपि विनश्यति ॥६९॥
पारदोषेण वेदोऽपि अपवित्रं (त्रो) भविष्यति ।
गायत्री सारमात्रोऽपि वरं विप्रो (प्रः) सुयन्त्रितः ॥७०॥
नापण्डितश्चतुर्वेदी मर्वाशी सर्वविक्रयी ।
आचारहीनं न पुनन्ति वेदः यद्यप्यधीता सहषड्भिरङ्गैः
ते मृत्युकाले पुरुषं त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥७१
अनध्याये तु योऽधीते छान्दसं विमलं शुभम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥७२॥
प्रतिवेदब्रह्मचर्यं द्वादशाब्दानिपञ्च च ।
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धनात् ॥७३॥

ब्राह्मणक्षत्रियविशः (विशा) स्तस्मादेते द्विजाः स्मृताः ।
उपवीते तु संगृह्य वर्णविद् गुरुमेव च ॥७४॥
तावत्त्रिगुणितं सूत्र(त्रं)पर्याप्तं तु पुनस्त्रिभिः ।
ब्राह्मणे दक्षिणे हस्ते चतुरंगुलिरावृते ॥७५॥
ब्रह्मपर्वस्तु विज्ञेयः मन्त्रार्थमाहरेद्द्विजः ।
एकेन ग्रथितस्तन्तुर्द्विगुणस्त्रिगुणस्तथा ॥७६॥
प्रवराग्रन्थिभेदश्च सूत्रे मेखलयोः सदा ।
सूत्रं (त्रं) सलोमकं विद्यात्पुनः कृत्वाद्विलोमकम् ॥७७॥
देवास्तत्र तु विन्यस्य ब्रह्मसूत्रे विधिः स्मृता ।
पृष्ठदेशे च नाभिं च धृते (धारिते)य द्विन्दते कटिम् ॥७८॥
तद्धार्यमुपवीतन्तु (?) अतिलम्बं नवोच्छ्रितम् ।
ॐ कारग्नि नागसोम पितरश्च प्रजापतिः ॥७९॥
वायुरर्कात्ष्ट(कं)तत नवमः सर्वदेवताः ।
अज्ञानेन तु विप्रस्य विना यज्ञोपवीतिना ॥८०॥
कृत्वा मूत्रपुरीषं च शुद्धिर्यातां निबोधत ।
एकरात्रं चरेन्मूत्रं पुरीषेण दिनद्वयम् ॥८१॥
स्त्रियम्विना अकामे वा द्विजो वा ब्रह्मचारणः ।
स्वप्ने स्वप्नाश्रवे शुक्रं शुद्धिस्तस्य वदाम्यहम् ॥८२॥
स्नात्वा तु सूर्यमर्च्चिष्य(त्वा)त्रिपुनश्च ऋचम्पठेत् ।
पुनन्तुमे जपेन्मन्त्रं अकामे श्राव शुद्ध्यति ॥८३॥
अवकीर्णी भवेद्ध्रुत्वा ब्रह्मचारी स योषिताम् ।
गर्दभम्पशुमालभ्य नैऋत्या स विशुद्ध्यति ॥८४॥

ब्रह्मचारी स्त्रियं गत्वाऽवकीर्णी भवेत्तु सः।
गर्दभं पशुमालभ्ययजेच्चैव चतुष्पथे ॥८५॥
अग्निं स्थाप्य विधानेन नैर्ऋत्यां देवतां यजेत्।
का(ला)य कामकाय(येभ्यः)श्च निर्ऋ तेभ्यस्तथैव च ॥८६॥
रक्षोभ्यो देवताभ्यश्च स्वाहान्ते जुहुयात्तदा।
गुर्व्वाचार्यद्विजांश्चैव परिधाप्य यथाविधि ॥८७॥
पात्राय संसमादायभैक्ष्यं सप्तगृहं चरेत्।
तेभ्यो लब्धेषु भैक्ष्येषु वर्त्तयत्येककालिकम् ॥८८॥
उपस्पृश्यत्रिषवणामब्देन स विशुद्धति।
गंगायां च ततो गत्वा गायत्रीं चायुतं जपेत् ॥८९॥
ब्रह्मचारी ततः शुद्धो वेदपाठी भवेत्पुनः।
यावद् ग्रहणं वेदस्यतावद्ब्रह्मचर्यं (?) चरेत् ॥९०॥
गुरुशुश्रूषणं नित्यं गुरुव्रतपरायणम्।
गुरुभक्तिसमायुक्तं गुरुवाक्यमनुस्मरन् ॥९१॥
व्रतत्रयसमायुक्तं स्नातकत्वं भवेत्स्फुटम्।
विद्या व्रतो व्रतो विद्या स्नातकास्त्रयः कीर्तिताः ॥९२॥
असमाप्य (प्त) वेदो यस्य समाप्य तु व्रतं तथा।
व्रतस्नातकः कथ्यन्ते (उच्यते)व्रतार्थी सोऽपि+उच्यते ॥९३
असमाप्तं (प्य) व्रतं यस्य समाप्य (प्तं) वेदपाठनम्।
विद्यास्नातकः सोऽन्यो विद्यार्थी प्रोच्यते बुधैः ॥९४॥
व्रतं वेदञ्चोभौ समाप्य उभयोः स्नातक उच्यते।
आषोडशाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ॥९५॥

ब्रह्मक्षत्रविशा काल औपनायनिक.परः ।
अतऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ॥९६॥
सावित्रीपतिता व्राता. सर्वस्तोमादृतेः क्रतोः ।
साम्य ( ? ) न प्रदातव्या पतिता परिकीर्तिताः ॥९७॥
येषा द्विजाना गायत्री कालातीते (ता)प्रमादतः ।
प्राजापत्यं ततः कुर्यात्तत उपनयनं स्मृतम् ॥९८॥
मीने रवौ हरेर्जीवे नष्टे शुक्रबृहस्पती ।
व्रतोपनयनं चरेत अवले चन्द्रभास्करे ॥९९॥
विद्यावन्तं यशस्वन्तं अग्निवा(?)विदुषः प्रियः ।
व्रतोपनयनं चैत्रे अवले चन्द्रभास्करे ॥१००॥
रोमाद्यं (?) च फाल्गुनेवापि चैत्रे वैशाख एव च ।
अभ्रच्छाया न कर्त्तव्यं यदि गर्ज ति तद्दिने ॥१०१॥
पौषादि चत्वारो (तुरो) मासास्तत्र वृष्टिरका(?)जलम् ।
व्रतादिकं न कर्त्तव्यं यदि गर्ज्जति (च्छाति) तद्दिने ॥१०२॥
हस्तत्रयेपुरेवत्यां मृगे पुष्यपुनर्वसौ ।
श्रवणाश्विधनिष्ठाया व्रतंविरमेत शुभे ॥१०३॥
पञ्चमी च तथा षष्ठी दशम्येकादशी तथा ।
द्वितीया द्वादशी वृद्धा(विद्धा शुक्रे ज(?)च रवे व्रतम् ॥१०४॥
शाखाधिपे वलोपेते उपनीतक्रिया हि तु ।
सर्वेषा वा गुरौ चन्द्रे सूर्ये च बलशालिनि ॥१०५॥
गुरु शुक्र कुज वुद्धं ऋग्यजु सामाथर्व्वणः ।
शाखाधिपश्च विज्ञेयमुपवीते वलं हि तु ॥१०६॥

सम्पूर्णे व्रतचर्यं च ह्यधीते च तथैव च ।
गुरुणा चा(भ्य) नुज्ञातः स्नानं कुर्यात्ततः परम ॥१८७॥
गुरोः पादोपसंगृह्य कुशास्तरण संस्थितः ।
वह्नेश्चोत्तरतः कुशानास्तीर्य ब्रह्मचारीमुपवेशयेत ॥१०८॥
अष्टानामुदकुम्भाना पुरतः (स्थापनं) स्थापयेत्क्रमान् ।
येष्वन्नरसमम्निश्च(?) आदायाभिमन्त्रयेत ॥१०६॥
ततोऽभिपचनंकुर्यान्मन्त्रविच्च पृथक् पृथक् ।
योरेवनेन मंत्रेण आपोहिष्ठान्तथैव च ॥११०॥
यो वः शिवतमोरमस्तस्मा अरंगमामवः ।
एकीकृत्य परिभि (न) स्तूष्णी येअश्वन्तभिमंत्रयेत ॥१११॥
ततोऽभिपचनं कुर्यादभिषिच्य पुनस्त्रिभिः ।
तूष्णीमभिषिच्य (च्याथ) नमस्कुर्याद्गुरोरपि ॥११२॥
उदुत्तमेतिमन्त्रेण उन्मुच्येन्मेखला तदा ।
निधायदण्डमग्रं तु वासोऽन्यत्परिधापयेत ॥११३॥
आदित्यमुपतिष्ठेत्तु उद्यन्नाजश्च (?) मंत्रवत ।
उत्थाय च पुनः स्नात्वालेपन्नासिकयो स्तथा ॥११४॥
मुखेचापगृहीते (तु) प्राणापानौ च तर्पयेत ।
चक्षुर्मे तर्पयश्चैव श्रोतंमेतर्पयन्तथा ॥११५॥
पितरः शुन्धध्वं कुर्यात्पाण्योरवनेजनम ।
स्मर्त्त(स्मार्त्त)सूत्रं ततोदद्यात द्वितीयं परिधापयेत ॥११६॥
दक्षिणाभिषिन्यश्चैव (?) तत्सुचक्षाहमेवच ।
अहतं वासा धौतं वा मंत्रवत्परिधापयेत ॥११७॥

परिस्पैतिमंत्रेण यशस्मामास्तथैव च ।
सुमनसः प्रतिगृण्हीयाद्यशसा च भगेन च ॥११८॥
अथाव वन्धीते यद्यशोऽप्सरसा मिन्दश्चकारविपुलं पृथुं
तेन संग्रथिताः सुमनस आवबन्धामि ।
उष्णीषेण शिरोवेष्ट्य (वेष्टयित्वा) युवा सुवासाश्च मंत्रवित्
अलङ्कार(श्च,श्चैव (विविधं ) भयोऽलङ्करणन्तथा ।
भूयासः कर्णवेष्टं तु अक्षणोंजनं ततः परं ॥११९॥
वृ सिकनीनस्य(?) अक्षणोऽजनं विधीयते ।
रोचिष्णुरसीत्यात्मानं आदर्शे प्रेक्षणन्तथा ॥१२०॥
वृह तेच्छदिरसिकन्नं (?) प्रतिगृह्णते ततः ।
पाप्मनोमामत्तर्द्धे हि पादौ युग्मोपधाप्येत ॥१२१॥
उपानहौ परिधाप्येवयुगपन्नयुगपत्तथा ।
वैणवंदण्डमादत्ते विश्वाभ्यो मात (मिति) मन्त्रवत् ॥१२२॥
दत्तप्रक्षालनादीनां छत्रोपानहमेव च ।
पूर्व्वाणि च जपेन्मन्त्रं परिधाप्य पुनः पुनः ॥१२३॥
स्नातस्य भोत्युत्तेत्यकुयोनि.(?) पितामहः ।
कामेतरेण गन्तव्यं नृत्यगीतं विवर्जयेत् ॥१२४॥
शूद्रश्च रायश्च (?) सदासंगति वर्जयेत् ।
वादित्राणि न कुर्वीत पटहादितथैव च ॥१२५॥
न गायेत्कामगीतानि वेष्णवं गीतमाचरेत् ।
रात्रौ न गम्यते क्षममक्षेमेनैव गम्यते ॥१२६॥

न धावेदुदपानार्थद्ध(न्न)त कर्म्मणि वर्जयेत ।
परस्त्रीगमनेवर्ज्यमुदयावेक्षणं (तथा) वर्ज्जयेत ॥१२७॥
वृक्षारोहणवर्ज्यञ्च फलप्रचयनन्तथा ।
सन्धिसर्पेऽपवर्ज्यन्तु नग्नं स्नानं विवर्जयेत ॥१२८॥
ऋतुमद्योपितालापं तथा निष्ठुरभाषणम् ।
अश्लीलवदनं चैव न कुर्वीत कदाचन ॥१२९॥
उदयास्तमने मध्ये नावलोकयते रविम् ।
स्नात्वा भिक्षां प्रगन्तव्यं वाग्यतः स्नानमाचरेत ॥१३०॥
वर्षत्येव न गन्तव्यं गन्तव्यं मन्त्रवज्जपेत ।
अयम्मे वज्रः पाप्मामपहनन् अनेन मंत्रेण व्रजेत ॥१३१॥
अप्स्वात्मानं नावेक्ष्येत कन्यादूपी च नो भवेत् ।
विपुं(वे) स्त्रिया न गच्छं तु प्रसूताकुचवर्जिता(?) ॥१३२॥
प्रत्युपोपिताश्चैव तथा पिंडं च नो हसेत् (?) ।
षण्मासानि समतीतानि गर्भं सहितयोपिता ॥१३३॥
सा स्त्रीगर्भिणी प्रोक्ता न रमेत कदाचन ।
परं वन्ध्या न गन्तव्या त्यजेद्वन्ध्या परस्त्रियः ॥१३४॥
ज्ञानेनैव तु वक्तव्यं सकुलं न कुलं तथा ।
भगालं(?)च कपालञ्च प्रसिद्धौ वाच्यता(म)पि ॥१३५॥
आखण्डलधनुश्चैव न निरीक्षेत कदाचन ।
सौरभी च परस्मं च चोपमाना न वाच्यताम् ॥१३६॥
तिष्ठन्मनो न कुर्वीत तथा मूत्रपुरीषयोः ।
स्वयं शीर्णेन काष्ठेन गुदद्वारं प्रमृज्यताम् ॥१३७॥

दृढ़वतो (८) वधत्रम्यात्सर्वपा मित्रभि ।
तिस्रो रात्रिव्रतं कुर्यादमामाशीर्भवेत्सदा ॥१३८॥
न भवेत्स्वाभृन्मयपायी मद्यपा इति वर्ज्जयेत् ।
न स्नात्वा नैवपीत्वा तु मर्यतप्तं न वारिणा ॥१३९॥
ऋतुस्नाता स्त्रियाः श्चैव सुरापी शूद्र(ग्व)व च ।
काकस्य च शुनश्चैव स्पशवादं विवर्ज्जयेत ॥१४०॥
परचिन्ता न(च)कर्त्तव्या आत्मचिन्ता तु नित्यशः ।
अतीतं नैव शोच्येत न तु चिन्त्यमनागतम् ॥१४१॥
वर्तमानेन वर्त्तेत (त्तितव्ये) धर्मबुद्धि समाचरेत् ।
श्रुति स्मृतिरतो नित्यं दानाध्ययनतत्परः ॥१४२॥
पितृमातृगुरुविप्रनम्रीभूतं भवेत्सदा ।
मिथ्याव्रतं न कर्त्तव्यं मिथ्यादीक्षा विवर्जयेत् ॥१४३॥
समाप्ते ब्रह्मचर्यं च वेदेऽधीते तथैव च ।
उपयेमे ततः कन्या ब्रा(ह्म,लक्षण संयुताम् ॥१४४॥
अतो विवाहयेत्कन्या पितृमातृरामुद्भवाम् ।
सुशीला गुणवतीञ्चैव दक्षा वा मितभाषिणीम् ॥१४५॥
पितृस्वसा च भगिनी भागिनेयी दुहितापतिः ।
एवं मातृपु विज्ञेया बान्धवाः परिकीर्त्तिताः ॥१४६॥
सप्तमी पितृतोज्ञेया पञ्चमी मातृतः परम् ।
पितृमातृस्वबन्धूना दारकर्मणि वर्ज्जयेत् ॥१४७॥
पितुः पितृश्वसुः पुत्राः पितृमातृश्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥१४८॥

मातुः पितृश्वसुः पुत्रा मातुर्मातुश्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥१४९॥
यस्मिन्देशेषु ये विप्रा याव (ती) यत्रैव मृत्तिका ।
तेनैव ते पालनीया न ते दुःखाः कदाचन ॥१५०॥
कुलीनस्फीता सुचाख्याताः वृद्धज्ञातिसमुद्भवान् ।
त्रीणि यस्य प्रलम्बन्ति ललाटमुदरं कटिम ॥१५१॥
कुलक्षयिणी ज्ञेया स्वकर्म्मणि वर्ज्जयेत् ।
यथा पुत्री पत्नास्त्र(तथापुत्रं) निरीक्षन्ति ततो वरः ॥१५२॥
सम्परीक्ष्यो विशेषेण दशदोषविवर्ज्जितः ।
अधमः किल्विषी कुष्ठी पतितः क्लीब एवच ॥१५३॥
तज(अलक्ष्मीक)श्च मायावी रागान्धो मूर्खोऽपि यः ।
अपस्मारी कुलोच्छन्नः कन्यादानेषु वर्जयेत् ॥१५४॥
कन्यां दातुं पिता योग्यः अभावे मातृका (तरं) तथा ।
भ्रातरं मृततो दद्याद् गोत्रिणस्तु ततः परम ॥१५५॥
तथा दोषवतीकन्या न योज्या दारकर्मणि ।
लम्बोदरीं लम्बशिरा(रां)कां तथाचैव कटेवरीम् ॥१५६॥
अति लोम्नीं च निर्लोम्नीमतिगौरां च पाण्डुराम् ।
देववृक्षनदीनाम्नीं तथा नक्षत्रनामिकाम् । ॥१५७॥
न श्मश्रुर्व्य जनमर्त्ते अगुष्ठाद्य (?) द्घोरः स्वरा ।
हास्ये च कूपगंडांगीच(?)दोषाश्च षोडश ॥१५८॥
यचा (वाचा) दत्ती (त्ता) मनोदत्ता कृतकौतुकमंगला ।
उदक्याच तथा पाणि गृहीती प्रसवान्विती ॥१५९॥

अग्निं परिगताचैवपुनर्भूः सप्तधा मता ।
सर्वासान्तु कुमारीणां गौरी शस्ता प्रयत्नतः ॥१६०॥
तामुद्वहेद् भेद सूर्यः(?)पितॄणां वाञ्छितः सुतः ।
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ॥१६१॥
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।
दशाब्दां कन्यकातीतां न वराय प्रयच्छति ॥१६२॥
मासि मासि रजस्तस्य पिता पिबति शोणितम् ।
दत्वैकस्मिन्गृहेकन्यामन्यस्मै तु प्रयच्छति ॥१६३॥
स्व(तन)कुलं नरकं याति यावदाभूतसंप्लवम् ।
परदत्तां प्रदुष्टां वा (त्वथ वा)छद्मना हृताम् ॥१६४॥
रोहिणीं दण्डिनीयस्य शोनाख्याय युयच्छति(?) (प्रयच्छति) ।
बलादुपहृतां कन्यां कोवा कस्मै प्रयच्छति ॥१६५॥
अप्रमाणस्तु (णातु) सा ज्ञेया वरमन्यम्प्रदापयेत् ।
छलेनापहृता कन्या चोरैर्यदि विवाहिता ॥१६६॥
अन्यस्मै विधिवद्देया यथाकन्या तथैव सा ।
नोच्यते चवयिः(चपतिः)सद्भिःश्छलेनापि विवाहिता ॥१६७
पितृदत्तातुयाकन्या पाणिग्राहणिकोच्यते ।
विवाहोऽष्टविधः प्रोक्तो ब्रह्मणा परमेष्ठिना ॥१६८॥
ब्राह्मो दैवस्तथाचार्षः प्राजापत्यस्तथापरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥१६९॥
आहूयालङ्कृतांदद्याद्विवाहो ब्राह्म उच्यते ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥१७०॥

यज्ञस्थः ऋत्विजः कन्यांयोऽलङ्कृत्य प्रदास्यति ।
सदैव तु भवेद्दैवो पुनात्युभयतो नरः ॥१७१॥
गृहीत्वा गोद्वयं कन्यां आर्षश्च परिकीर्त्तितः ।
विवाहः पुरुषस्तज्जः पुनात्युभयतो दश ॥१७२॥
इत्यर्थिने समभ्यर्च्य प्रयच्छेद्यः सहाग्निकाम् ।
प्राजापत्यः सविज्ञेयः पुनाति सप्तचोभयोः ॥१७३॥
नार्थेनन्द्रविणादानाद्विवाहआसुरो मतः ।
राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ॥१७४॥
गान्धर्वादि विवाहेषु पुनर्वैवाहिको द्विजः ।
चत्वारः प्रथमं शस्ता विवाहाः विप्रजातिषु ॥१७५॥
क्षत्रियस्य द्वयञ्चैव शस्तौ गान्धर्वराक्षसौ ।
ययोरेवसमंयक्तियो श्चैव समंकुलम् ॥१७६॥
गान्धर्वस्तु स विज्ञेयो विवाहः क्षत्रियोमतः ।
आसुरो गदितस्तत्र विरुद्राणामुभावपि (?) ॥१७७॥
पैशाचश्चाष्टमः सर्वै न कर्तव्योऽधमो यतः ।
पैत्म(तृ)दत्तां पराग्राह्यां परिवर्त्तनं करोति यः ॥१७८॥
तेषान्तु नरके घोरे पितृणां सहितान्तथा ।
दत्वा (त्ता) येन विवाहेषु आत्मीया च परासुता ॥१७९॥
आत्मा विवाहितायेन(ते)न भागिनेय(श्चतत्सुतः)भगिनी यः ।
ज्येष्ठेन ज्येष्ठयोः कार्यं नृनार्यो पाणिपीडनम् ॥१८०॥
तयोरेकान्तरं ज्येष्ठं ज्येष्ठं न च विरुध्यते ।
हिते गुरौ धने सूर्ये नष्टे शुक्रबृहस्पती ॥१८१॥

विवाहादौ न कर्त्तव्यं कुर्याद्वं कुण्ठपौष्टिकम ।
संसज्जने प्राशने च नारायणवलिः क्रियाः ॥१८२॥
वैष्णवोद्यापनञ्चैव सीमन्तं कारयेच्छिशोः (शिशुम) ।
द्वादशेचाष्टमे वर्षे देवाचार्यौ चतुर्थके ॥१८३॥
सपृज्ये वा अपृज्ये वा हितं प्राणनाशनम ।
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ॥१८४॥
वृद्धत्वे पुत्रगोत्री वा न स्त्री स्वातन्त्र्यमर्हति ।
कुविवाहैः क्रियालोपैः वेदानध्ययनेन च ॥१८५॥
कुलान्यकुलतां यान्ति संतानश्चैव शूद्रताम ।
तत्रादौ मधुपर्कस्य विधिं ब्रह्मण्य नोदिता ॥१८६॥
अर्च्चयामि भवान्साधुः साधुवार्च्येर्च्चयः परम ।
विष्टरग्रहणं चैव त्रिरुक्तमपिमान्वयम (?) ॥१८७॥
कुशपञ्चाशको ब्रह्मा तदर्धं विष्टरं स्मृतम ।
तदर्धमासनं प्रोक्तं तदर्धमर्घ्यं विन्यसेन ॥१८८॥
पाद्यं सुखोपविष्टश्च पादार्घ्यमुपकल्पयेत ।
दक्षिणं चरणं क्षाल्यविराजोदोहोऽसि मंत्रतः ॥१८९॥
योगीस्थ इदं श्रुत्वा पुनरूचुस्ततोद्विजाः ।
पाद्यं चैव विराजश्च तथाऽर्घ्यं विधिना विभो ॥१९०॥
मधुपर्क विधानं च ये मंत्रा याश्च ओषधीः ।
काश्चधेनुर्विराजश्च विराजः कथमुच्यते ॥१९१॥
गायत्र्या गृह्णीयाल्लाजाः गन्धद्वारेतिकुंकुमम् ।
पुष्पं पुष्पवती चैव प्रतद्विष्णुस्तुतण्डुलान् ॥१९२॥

या ओषधी सर्वौषधी मंत्रवच्च विनिक्षिपेत ।
धर्मो धेनुर्द्विजोवत्सः कन्य (?) दुग्धेन दुह्यताम् ॥१९३॥
धेनुस्तस्य विराजश्च तद्विराजं भवेत्स्फुटम् ।
आपक्षीर कुशाग्राणि दधि च तिल तण्डुलम् ॥१९४॥
यव सिद्धार्थकाश्चैव अर्घ्यो (र्घ्य) मष्टांगमुच्यते ।
पात्रं पश्चिमदिग्भागे दधि(?)चाप्यायेत्पापनिक्षिपेत॥१९५
पयः पृथिव्यां तु पयः क्षीरं दक्षिणतः क्षिपेत ।
कुश उत्तरतो ग्राह्यो देवस्यत्वोक्तवानि च ॥१९६॥
पात्रेण पूर्वतश्चैव दधिक्राव्णेति मन्त्रवत ।
तिलोऽसि पितृदैवत्यां पात्रवायव्यतोतत्वाः(न्यसेत्) ॥१९७
आममन्नपतेश्चैव ईशाने तण्डुलान्क्षिपेत् ।
मानस्तोकेति मंत्रेण+आग्नेय्यां सर्षपांस्तथा ॥१९८॥
यवोऽसियवांश्चैव नैर्ऋत्पते च क्षपेद्धविः ।
आपस्थश्चैवयुष्माभिः अर्घ्यं गृहीत्वाति वै ततः ॥१९९॥
सर्व्वाकामेति मंत्रेणार्घ्यपात्रं समाहरेत ।
निनधंनभिमंत्रयते अरिष्टा(?)अस्माकं वधत् ॥२००॥
तदर्थं शिरसा कुर्यान्नमस्कारं विधानतः ।
परिवार्य करौ (रयौ) श्चैव चरणोर्ध्वं विनिक्षिपेत ॥२०१॥
कांस्यपात्रे समायुक्तं दधिमधुघृतैर्युतम ।
मधुपर्क्कः सविज्ञेयः मित्रस्यत्वा प्रतीक्षणी ॥२०२॥
पलमेकं घृतं ग्राह्यं द्विपलं दधि उच्यते ।
पलैकन्तु मधुचैव अधोर्ध्वं कांस्यसंस्थितम् ॥२०३॥

देशस्यत्वेति गृण्हीयात्सव्येपाणौ निधापयेत् ।
दक्षिणस्यानामिकायाभि प्रयूतिश्वमंत्रवित ॥२०४॥
नमः श्वावास्याया नाशने धत्त आविद्धतः ।
तत्तं नि.ष्क्रममाणम्तु मंत्रोऽयं परिकीर्त्तितः ॥२०५॥
अनामिकांगुष्ठाधो गौरिर्त्रिन्निरीक्ष्यघति(च) तथा ।
मधुपर्क्कं ततः कुर्यात्रिः प्राश्यातिविधानतः ॥२०६॥
यन्मधुनेति मंत्रेण मधुमतीर्वा ऋचंप्रति ।
ऋचं मधुमती प्राश्यऋत्विजो यज्ञकर्मणि ॥२०७॥
प्राशयेन प्रधन्वेन यन्मनोद्दद्यावाह्यकः (?) ।
उच्छिष्टन्तु ततोदद्यात्पुत्रान्ते वासिनामपि ॥२०८॥
शिष्याय ऋत्विजोदद्य पुत्रनृपप्रियै.(पुत्राय च पितातथा) ।
आमीनाद्यः ददेक्षौरिः(?)स्नातकश्चोत्तरंदिशि ॥२०९॥
वरं प्राशयते सर्वं मर्वं वा पूर्वं निक्षिपेत ।
उच्छिष्टमपि कर्त्तव्यं पाणी संमृशते ततः ॥२१०॥
वाङ्मआस्येनमोश्चक्षुकर्णाधोश्रोत्रमेव च ।
वाह्वोर्म्मेवत्वमूर्व्वे ॐ जोरिव्यानिमेतथा ॥२११॥
अंगानि व तन्श्चैव तन्वामे सहमेव च ।
आचान्तः शासमादायशासं शासन उच्यते ॥२१२॥
तदर्थंतुगवालम्भं गौरितित्रिः प्रहार्धताम ।
गावोऽपिशासनं प्रोक्तं गावश्चत्रिभिर्वाच्यताम ॥२१३॥
माता चैव तु रुद्राणां वसूनां दुहिता तथा ।
आदित्यानां स्वसा चैवत्यभिस्यामृतमेव च ॥२१४॥

प्रनू वाचं चिकितुषे मागामनागामदितिं वधिष्ठि-
ममायुष्यवधोः पापं उभयोस्त्वंपाप्माहतः ॥

ॐ उत्सृजं तु तृणाश्चेति मधुपर्क विधोच्यते ।
हुतन्तु वैश्वदेवेभ्याद् हुतं जातकर्म च ।
सुहुतं त्वक्षहोमादि प्राशितं पितृतर्पणम ॥२१५॥
चत्वारः पाकयज्ञाश्चबहिः शात्वावपंच च(?) ।
विवाहश्चूडाकरणं व्रतोपनयनन्तथा ॥२१६॥
सीमन्तश्चैव केशान्तं कर्त्तव्यं विधिपूर्वकम ।
आपूर्यमाणपक्षे च पुण्याहमवत्वोकथेन(वाचनंचरेत) २१७
स्वातौ मृगेऽथरौहिण्यांत्रिपुचैवोत्तरोदिपु ।
पंचधाभूमिं संस्कुर्यादग्निं स्थाप्य(स्थापयित्वा)यथाविधि ॥
निर्मथ्य स्थापयेद्वन्हिं अग्न्यर्थेवन्हिभक्तिमान ।
यथातथाअनग्निश्चजातवेदास्तनूनपान ॥२१६॥
तिस्रोवर्णानुपूर्वेण ब्राह्मणस्यविधीयते ।
राजन्यस्य च द्वौशस्तौएकोवैश्यस्यउच्यते ॥२२०॥
मन्त्रवर्ज्यस्तु शूद्राणां सर्वेषां कथ्यतामिति ।
ततोवस्त्रंगृहीत्वा तु परिधाप्यैव मंत्रवत ॥२२१॥
जरांगच्छजपेन्मन्त्रः परिधायासौविवाहकः ।
अथैनोवाजपेन्मन्त्रं समानाहृदयानितौ ॥२२२॥
पित्राप्रमात्रादाध (?) गृहीत्वानिष्क्रमणस्तथा ।
यदेषि मनसादूरं दिशोनुपवमानतः ॥२२३॥

हिरण्यवर्णोविंकर्णः (?) सत्वामन्ममांकरोत ।
असावितितमगण्हातु अर्थने च समीक्षयेत ॥२२४॥
उभावपि समालोक्य मन्त्रवच्चक्षुमेलकम ।
अव्वोख्वक्षुरपधिः मंत्रं जप्त्वा समादिशेत ॥२२५॥
द्विजोदधिसमालोक्य वाणं गृह्णातिवाहुजः ।
वैश्येप्रतोदमादायहस्तौशूद्रस्यमेलकः ॥२२६॥
ततोदर्भंगृहीत्वादग्ने दक्षिणत स्थितः ।
अग्नेः प्रदक्षिणं कृत्वा तर्जनीवा(वी) कटाविशेत(?)॥२२७॥
अन्वारब्धौ तथाघारौआज्यभागौ तथैव च ।
महाव्याहृतयश्चैव पंचवानुकणन्तथा ॥२२८॥
जाग्न्यमृद्वादशांहुत्वा वितीनां च त्रयोदश ।
अच्छादशाग्निभूतानां पञ्चानामग्निरंतुकाः ॥२२९॥
लाजाहुतीदशप्रोक्ताः प्राजापत्यमतः परम ।
वामे पत्नीसमादाय त्रिधाभिमुखं व्रजेत ॥२३०॥
सप्तकूटानिधान्यानि मन्त्रंजप्त्वाव(च) रोहणम ।
एकामषेद्वे ऊर्ज्जेत्रीणिरायस्पोषाय ग्व च ॥२३१॥
मयोमवायचत्वारिपशुभ्यः पञ्चमुच्चरेत ।
षड्ऋतुभ्यः सख्वः सप्तसामामनुव्रता भव ॥२३२॥
निष्क्रम्यकल्पितं कुम्भं उदकेनाभिषेचनम ।
आपः शिवेतिमन्त्रेण आपोहिष्ठातथैव च ॥२३३॥
तथासूर्यमुदीक्ष्यै व तच्चक्षुर्म्मंत्रंविवर्ज्जयेत ।
दक्षिणांसेनमालभ्यममव्रतेत्युदाहरेत ॥२३४॥

सुमंगलीरियंवधूरिमाः समेतपश्यता ।
सौभाग्यमस्यैदत्त्वा वृद्धास्त्री विरमेत्ततः ॥२३५॥
तोन्द्रढ़पुरुपोम्मथ्य(?)अर्केनादाय वैततः ।
अनुगुप्तं तडागारं प्राच्योवोदीच्यमेव च ॥२३६॥
द्रढ़ोत्संगे समादाय अनद्धी च(?)रोहिते ।
उपविश्यतु तत्रैव सपत्नीकामभीष्टतः ॥२३७॥
इहगावो निपीदन्तु मंत्रोऽयं समुदीरयेत ।
पृषान्ते स्विष्टकृदीज्ये ग्रामवचन शुभोच्यते ॥२३८॥
वरदानं ततः प्रोक्तं ध्रुवदर्शनमेव च ।
प्राशनंमार्जनं दानं विवाहाय जुहोम्यतः ॥२३९॥
कर्मान्ते च प्रदातव्या आहुतीनां चतुर्दश ।
आचार्यः सर्वकर्म्मसु आत्मनः श्रेयमिच्छति ॥२४०॥
आचतुर्थे तु सम्पूर्णं विवाहादौ तथैव च ।
भू शुद्धिः प्रथमंकुर्यात्कुशात्रयसमूहनम ॥२४१॥
अंगुष्ठानामिकाभ्यां च गृहीत्वा तु कुशात्रयम ।
दक्षिणेवोत्तरं कुर्यात्परि समूहविधो(धिरुच्यते)च्यते ॥२४२
गोमयेन ततो लिप्य तिस्रोलिख्य (खित्वा) विधानतः ।
तर्ज्जन्यंगुष्ठयोगेन उद्धृत्योद्धृत्य संस्थितः ॥२४३॥
उदकेनाभिमन्त्र्याथाग्न्याधानं ततः परम् ।
मंत्रविद् ब्रह्मसंस्थाप्याग्निर्दक्षिणतः सदा ॥२४४॥
निरस्तः परावसे महमधावसौः सदने सीदामीत्युप विशेत ।
तत्र ब्रह्मोपवेशनं अग्नेरुत्तरतः स्थाप्य प्रणीतासन वाग्यतः ॥

द्वयुनर्विश्रामसंस्थाप्य(?)प्रणीतापात्र दारुजम ।
आत्मामनं ततोदद्यात्प्रणीताकरसंस्थिता ॥२४६॥
तत उदकं ममादाय गायत्र्या चाभिमंत्रितम ।
प्रणीता पूरणं तत्रदर्भैराच्छादयेत्ततः ॥२४७॥
विश्रामासनं मंस्थाप्य प्रणीताल्म्भनं ततः ।
ब्रह्मणोमुखमालोक्य निधार्योत्तर एव च ॥२४८॥
वाग्यतः परिस्तीर्य्य प्रवलादेशतः कुशः ।
हव्यवाहनवस्त्रोऽयं त्रिवाचश्च चतुर्दिशम ॥२४९॥
वस्त्रहीनेन यः कुर्याज्जातवेदास्तनूनपान ।
विपरीत(?)फलन्तस्य आह् तत्रवै ध्रुवम ॥२५०॥
पात्राणासादनं(?)तत्र आदौदर्भत्रयन्तथा ।
द्विदर्भं प्रोक्षणीपात्रं आज्यस्थाली ततः परम ॥२५१॥
चरुस्थाली ततः स्थाप्यसंमा पात्रन्तु वर्जयेत ।
सव्येनोदक संस्पर्शः प्रणवोच्चारतत्परः ॥२५२॥
अग्रे कुशपश्च उपयमनकुशाः सप्तादेशात्समिधस्त्रिभिः ।
खादिरेणस्रुवः स्थाप्य स आज्यं स्थाप्य विधानतः ॥
तण्डुलावैश्वदेवान्नं पूर्णपात्रन्तु विन्यसेत ।
अवमुष्टि भवेत्किञ्चिदष्टौ च पुष्कलः ॥२५३॥
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ।
तत्र त्रीन् कुशानास्तीर्य्यैक देशोर्द्ध्वं कुशद्वयम् ॥२५४॥
अथार्द्धौधद्वयं कुर्यात्त्रीणि त्रय कृतोऽच्छिनत् ।
कुशैः कुशावच्छिन्नन्ति द्वे कुर्यात्तु पवित्रकम् ॥२५५॥

द्वे दर्भे प्रोक्षणी स्थाप्य हस्तेनादाय वै ततः ।
प्रणीताप्रोक्षणीपूर्य उत्पूर्येङ्गुष्ठानामिके ॥२५६॥
भूमौ त्रीणि ततोत्पूय सप्तोद्य गे शिरेतथा ।
दद्यात्तत्रैव सम्प्रोक्ष्यपारणि(?) पृथक् पृथक् ॥२५७॥
पर्युक्ष्याग्नि प्रणीताग्रं अन्तरे प्रोक्षणींन्यसेत ।
अथाचम्य तु विधिवद्देवीवाचममुच्चरेत ॥२५८॥
ततोत्थाप्य तु संप्रोक्ष निर्व्वपेत्याज्यतण्डलौ ।
चतुर्मुष्टि ममाकुर्यात्त्रिःप्रक्षालिततण्डलैः ॥२५९॥
अन्तरं कुशविन्यस्य तूष्णीं ब्रह्माज्य वै श्रयेत ।
आ(चा)चीर्य स्वयमीश्रप्य देवं कम्म(मीक्ष्यैव)मिदंस्मरेत २६०
उभयो र्ब्रह्मणोचार्य (?) पर्यग्निकरणं ततः ।
आदायोल्मुकन्तस्त्वत्तरवर्ज्जयेत् (?) ॥२६१॥
सव्येनोदकसंस्पर्शः प्रणवोच्चारतत्परः ।
ता अर्द्ध शतंच ह्याहुत्वा(त्वी)त्र्वप्रतपनं ततः ॥२६२॥
संमीग्र कुशम्मृज्य सुवादं द्रस्तु(?) मूर्द्ध गम ।
समाग्र (त्र् वाग्र)मूलं सम्मृज्य सुवास्तु च बाह्यतः ॥२६३॥
कुशाग्रे मूलसमृज्य कुशमूले त्वधस्तथा ।
प्रोक्षण्योदकं सम्प्रोक्ष्य पुनः प्रतपनं श्रुवः ॥२६४॥
अग्रे प्रदक्षिणं कृत्वा निधायात्मनि दक्षिणे ।
आज्यो द्वास्य तथैशाने उत्तरेण ततोन्यसेत् ॥२६५॥
पश्चिमेन ततः स्थाप्य मध्ये स्वर्णं विनिक्षिपेत ।
चरोभिगारणं(?)कुर्याच्चरो द्वास्य ततः परम् ॥२६६॥

वरो दास्यति पूर्वेण प्रणीयोनरवन्हिना ।
अग्निराज्यन्तरं कुर्यात्स्थापयेच्चोत्तरे दिशि ॥२६७॥
प्रणीतापश्चिमेन्यस्य आज्यवन्हि तथान्तरे ।
उत्तरेचाप्य संस्थाप्य आज्यमुत्पवनन्ततः ॥२६८॥
आलिखेत पवित्रे च प्रोक्षण्योत्प (ण्युत्पवनं) वनंविधिः ।
आज्यावेक्षणं संस्कुर्यादपद्रव्यनिरासनम ॥२६९॥
उपयमनकुशानादाय दक्षिणं कटि विन्यसेत ।
उत्तिष्ठसमिधंक्षिप्य ग्पाते अग्रे समित ॥२७०॥
प्रणीताकुशमादाय यद्मात्राह्मं ण (?) चेततः ।
अन्वारम्भन्ततः कुर्यादाचार्यः ब्रह्म वाग्यतः ॥२७१॥
प्रोक्षण्योदकमम्प्रोक्ष्य स्रुवहोमं समाचरेत ।
द्रुहिणेन इदं प्रोक्तं अग्निस्थापनकं विधिः ॥२७२॥
प्राजापत्योत्तरेन्द्राग्ने दक्षिणेन्द्रीश मिन्द्री (द्र) य ।
आग्नेयेऽग्निमुखौ दद्यादीशाने सोमचक्षुपी ॥२७३॥
अग्निं स्थाप्यविधानेन दशाङ्गाग्निकलायुतम ।
धूम्राचनीलवर्णा च कपिला विस्फुलिंगिनी ॥२७४॥
ज्वाला हविष्मती चैव कव्यवाहव्यवाहिनी ।
रौद्री संहारिणी चैव वैश्वानरकला दश ॥२७५॥
विवाहे च तथा क्षौरे चतुर्थीदीक्षणे शुभे ।
गृहयोगे शुभे कर्म्मणि दशांगं वन्हि विन्यसेत ॥२७६॥
कव्यवाट् पूर्वं विन्यस्य हव्यवाट् दक्षिणेन्यसेत् ।
ज्वाला च पश्चिमे न्यस्य अर्च्चिष्मां उत्तरे तथा ॥२७७॥

पड्वलामूर्ध्नि विन्यस्यदद्यादाज्याहुती स्ततः ।
पूर्वां दद्यादाघारौ आज्यभागौ तथोत्तरे ॥२७८॥
अग्नेर्वायाप्रायश्चित्ते सूर्यश्चन्द्रस्तथैव च ।
गन्धर्व प्रायश्चिते तु पतिघ्नी प्रजाघ्नी स्तथा ॥२७९॥
पशुघ्नी च गृहघ्नी च यशोघ्नी च क्रमेण तु ।
प्राजापत्ये स्विष्टकृदे स्थालीपाकं जुहोति च ॥२८०॥
व्याहृतिश्चतत आज्ये हुत्वापश्चवारुणकन्तथा ।
हुतशेषं चरुस्थाली पाकं (कृत्वा) विधानतः ॥२८१॥
हुत्वा स्त्रिया मुखंतत्रमंत्रणानेनवं ततः ।
प्राणैस्ते प्राणान्संदधाम्यस्थिभिस्थीन्येव च ॥२८२॥
मासं चैव मांसेन त्वचान्वचमिति क्रमात् ।
हृदयालम्भनं कुर्यात्सु(?)शीचन्द्रमेव च ॥२८३॥
पश्येमशरदः शतम्पठेन्मत्रं द्विजोत्तमः ।
गर्भाधानंस्त्रियं वक्ष्ये पुष्पवत्यास्तथैव च ॥२८४॥
चतुर्थ्याउर्ध्वं सा स्नाता न गर्भं दधाति यदि ।
मिह्याक्षुद्रिणीश्वेता (?) दुपोप्या तु विधानतः ॥२८५॥
पुष्येन (ण) मूल मुत्थाप्य चतुर्थ्ये स्नानपूर्वकम ।
निशायामुदके पिण्प(? नश्यं कुर्याद्यथोचितम ॥२८६॥
दक्षिणस्यानासिकया सिश्चतीत्योपधी त्रया ।
इयमोपधीत्रामात्री(?)सहेमाना सरस्वती ॥२८७॥
अस्या अहं वृहत्याश्वपुत्र पितुरिव तथा ।
पितुरिव नाम जग्राह ..ऋतुस्थाने प्रकीर्त्तितम् ॥२८८॥

स्त्रीणां सर्वक्रियारम्भे ऋतुगोचरतः शुभम ।
शुद्राभर्त्तरि शुद्रा वा गर्भाधानादि कर्म्मसु ॥२८९॥
युग्मारात्रिषु कृतस्नाना कृतमाल्यविभूषणा ।
भुस्त्वाकदायक(कंदर्पक)ञ्चैव स्वकान्तकामिनी व्रजेन २९०
ऋतुस्वभाविनी स्त्रीणां रात्रयः षोडशस्मृताः ।
चतुर्थ्यां जायते पुत्रःस्वगु(?)र्गुणवर्जितः ॥२९१॥
विद्यादारपरिभ्रष्टोदारिद्र्यं क्लेशभागिनः ।
पञ्चमे पुत्रिणीकन्या षष्ठे पुत्रश्च पुत्रवान ॥२९२॥
सप्तमे शुभगा कन्या अष्टमे ईश्वरः सुतः ।
नवमे अप्रजा कन्या दशमे पुरुषोत्तमः ॥२९३॥
एकादशे भवेत्पुत्री द्वादशे पुत्रधर्म्मिणः ।
त्रयोदशे भवेत्कन्या वहुदुःखभयप्रदा ॥२९४॥
धर्म्मज्ञश्च कृतज्ञश्च शास्त्रज्ञश्च महीपतिः ।
जायते चतुर्दशान्ते सर्वभोगरतो नरः ॥२९५॥
राजपत्नी महाभागा राजवत्सकरी शुभा ।
जायते पञ्च दशांते (च) बहु भोगा पतिव्रता ॥२९६॥
विद्याविनीतः सम्पन्नो भोगवान्सुकृती नरः ।
जायते षोडश्यां रात्रौ सत्यवादी जितेन्द्रियः ॥२९७॥
अष्टमी नवमी चैव चतुर्दशी च पूर्णिमा ।
एतास्तु तिथयो वर्ज्या शेषाः श्रेष्ठोत्तमाः स्मृताः ॥२९८॥
मघामूलाश्विनी ज्येष्ठा अश्लेषा रेवती स्तथा ।
रतिकाले सदावर्ज्य (र्ज्या) ऋतुस्नाने विशेषतः ॥२९९॥

यस्मिनृक्षे च आधानं ऋतुकालप्रपोपणम् ।
तस्यादौ दशमे ऋक्षं प्रसूति भवति स्फुटम् ॥३००॥
हीनांगोवधिरो मूकोवकः पङ्गुश्च वामनः ।
गर्भाधानेऽपि जायन्ते वैकल्पं मानसं यदि ॥३०१॥
सत्वंत्यमौन(?)अधिकं न किञ्चित्
क्लीबत्वभावं प्रतियाति गर्भः ।
अन्ये तु पिण्डावपनप्रभेदः
विधि प्रकार युगलाश(?)त्रीरमू(री)॥३०२॥

इति रजलक्षणः—

अथातः पुंसवनम्—

पुरास्यन्दनकर्म्मणि—

मासे द्वितीये तृतीये वा पुंसानक्षत्रहं यदि ।
चन्द्रमापूज्यमानस्तु समुपोष्या यथा विधि ॥३०३॥
आप्लाव्याहतेवस्त्रं परिधाप्य विधानतः ।
न्यग्रोधावरोहे छुङ्गानिशायामु(?) पवेपणम् ॥३०४॥
आसेचनम्पूर्ववत्कुर्याद्धिरण्याद्भ्य संभृतम् ।
एताभ्यां कुशकण्ठेन सोमः सिञ्चयेत्तथा ॥३०५॥
कूर्म्मपित्तयोअस्थेकु(?)यदिकामतोऽपिवा ।
वीर्यवान्स्यादितिचक्रतेनैवाभिमंत्रयेत ॥३०६॥
सूपर्णोऽसीति(?)ष्णु क्रमं परिकल्पयेत् ।
प्रथमे गर्भेऽष्टमे मासि पष्ठे वा स्थाप्य वन्दिता ॥३०७॥
तिल तण्डुलमुद्गाश्च मिश्रिताः स्थाप्य वै द्विजः ।
स्थालीपाकं ततः कुर्याद्यथा पूर्वं विधानतः ॥३०८॥

प्रजापत्येस्विष्टकृते प्राशनान्ते ततः परम् ।
भद्रपीठोपविष्टः मामटायुग्मनो(?)दुम्बरी ॥३०६॥
त्रयोदर्भाश्च पिञ्जुल्या शलल्या. कण्टकन्तथा ।
वीरतरुशंकुनाश्चैव पूर्णपात्रं तथैव च ॥३१०॥
एकीकृत्य चैतेषां महारंगेन वेष्टयेत् ।
महाव्याहृतिभिश्चैव सीमन्ते मूर्ध्नि एव च ॥३११॥
कुर्याद्विनयनं तत्र उर्जीव फलिनी भवेत् ।
अथाह्वीणाजथितौ राजानः समायताम् ॥३१२॥
नदीसानामं गृह्णाति ततो ब्राह्मण भोजनम् ।
राजतैदशमाश्चैवगर्भेजरिपुणा (?) सह ॥३१३॥
एकादश ऋचां जप्त्वा अच्छित्प्राज्ञ(?)एव च ।
सुवर्णान्तर्हित घृते प्राश्य वै शिशुम ॥३१४॥
मन्त्रेणानेन वै तत्र भूर्भुवः स्वस्तथैव च ।
नाभ्या(मौ)न्वा दक्षिणं कर्णं आयुष्यं मंत्र विज्जपेत् ॥३१५॥
अग्निः सोम स्तथावायुर्ब्रह्मादयो देवास्तथैव च ।
ऋषयश्च पितरश्चैव यज्ञसाग (र) वै जपेत् ॥३१६॥
वनस्पत्योपधीश्चब्राह्मणेभ्यस्तथैव च ।
अमृते(ने)त्रते स्वधा. चैव दक्षिणा सत्रवं तिषु(?)॥३१७॥
आयुष्यकरणं प्रोक्तं ब्रह्मणा परमेष्ठिना ।
स यदि कामयेच्चैव सर्वमायुरियादिति ॥३१८॥
वात्के प्रेणी ततोजप्त्वा अनुवाक्कादिवं स्वती ।
पञ्च ब्राह्मणानुत्थाप्य पूर्वदक्षिणा पश्चिमे ॥३१६॥

उत्तरे वोर्ध्वतश्चैव अवेक्ष्ये ब्रुव(?)माणतः ।
पाणेऽपाने तथाव्याने उदाने तु समानतः ॥३२०॥
स्वयं वा अपि कर्त्तव्या तु परिक्रामतस्तथा ।
यस्मिन्देशेभवे जातोऽभिमन्त्र्य पुनः पुनः ॥३२१॥
वेदते भूमि हृदयं दिवि चन्द्रमसिश्सितम ।
वेदाहमेतं तन्मातद्विद्यात्पश्येम शरदः शतम ॥३२२॥
अथैनामभिमृश चैवं अश्माभवपरशुर्भवेत् ।
हिरण्यमः स्तत(?)भव आत्मावै पुत्र नामासि ॥३२३॥
स(त्वं) जीवशरदश्चैव नामधेयं करोति च ।
वेदोऽसीति ततो वेदाः मातरं अभिमन्त्रयेत ॥३२४॥
इडासि मैत्रीवरुणी वीरेवीरमजीजनथाः ।
सात्वं वीरवती भवयास्मिन्वीरवन्तस्तथा ॥३२५॥
यस्ते स्तनमित्येव प्रक्षाल्य दक्षिणं स्तनम् ।
इमंस्तनमित्युक्त्वा बालकाय स्तनं द (द्यात्) दौ ॥३२६॥
उद पात्रं शिरः स्थाप्य आपोदेवेषु जाग्रथः ।
द्वारदेशे सूतिकाग्निं स्थापयेद्विधिपूर्वकम ॥३२७॥
सन्धिवेलाद्वि आहुत्यौ(?) सर्षपोडनग्नावपति ।
सिद्धार्थास्तण्डुलाकण्डा मंत्रेणानेन यत्नतः ॥३२८॥
शण्डामर्क उपवीरः शौण्डिकेय उलूखलः ।
भृलि(मलि)म्लुचोद्रोणासथ(?)अवनो नश्यतादिति ॥३२९॥
आलिप(उनिप)न्निमिषं श्चैव किं वदन्ती उपश्रुतिः ।
हर्यक्षः कुम्भीशत्रुश्च पात्रपाणिस्तु कर्म्मणि ॥३३०॥

सर्षपावरुणा चैव स्वाहान्ते च उभावपि ।
कुमारो पदवेद्यस्तु जातेनाच्छादितस्ततः ॥३३१॥
पिता स्वांके समादाय जपेन्मत्र(न्तु) स्तुकूर्कुरम् ।
कूर्क रः स कूक्कुरश्चपत्तं देवा विरमं विदुः ॥
त त्वं कुमारमेववावृणीथा स्तथैव च ।
चेच्चेच्चपुनश्वेर्छं श्याम शवलौ प्रकीर्त्तितौ ॥
अनागमन्नरोदिष्टे यत्र वाभि मृशांमसीति ।
दशमेऽहनिसमुत्थाप्य पितानाम करोति च ॥३३२॥
द्विरक्षरं चतुर्व्वापि घोप पदाद्य(वाद्या)नन्तरतस्तथा ।
दीर्घाभिन भिनष्टानं न(?) कृतं कुर्यान्नतद्धितम् ॥३३३॥
आयुश्च चिरमाचारं तत्र स्त्रिया न तद्धितम् ।
शर्म्मेति ब्राह्मणोत्र्याद्वर्म्मक्षत्रिय एव च ॥३३४॥
गुप्तेति वैश्येविज्ञेयं ततो ब्राह्मणभोजनम् ।
मासे चतुर्थे निष्क्रम्य सूर्यमुद्वीक्षयेत ततः ॥३३५॥
तच्चक्षुश्च ऋचां जप्त्वा प्रोक्ष्यरश्मनोदकरश्मिषु ।
गृहानुपयतो तिष्ठं ततो ब्राह्मणभोजनम् ॥३३६॥
अन्नप्राशनं (तु) विज्ञेयं मासि षष्ठे तथैव च ।
पूर्व्ववदग्निं संस्थाप्य स्थालीपाकं समाचरेत् ॥३३७॥
आघारावाज्यभागौ च तथा हुत्वा उभावपि ।
देवीवाचमजनयन्त वाजोना अद्यएवच ॥३३८॥
स्थालीपाकं ततो हुत्वा चतस्र आहुतयस्तथा ।
प्राणेनामशीयश्च अपाने नगधमेव (?) च ॥३३९॥

चक्षुपा रूपाण्यः श्चैव श्रोत्रेण यशोमशीय ।
प्राजापत्ये स्विष्टकृते व्याहृतीं पञ्चवारुणीं ॥३४०॥
स्थालीपाकं ततः शस्तं हन्तकारश्च पूर्वकम् ।
सर्वेषां तु रसान्पञ्च मत्स्यमांसं विशेषतः ॥३४१॥
एकीकृत्य ततः प्राश्य अन्नपर्याय उच्यते ।
भारद्वाजोवाऽप्रमारः आद्यश्चैवकपिञ्जलः ॥३४२॥
कृक खा (लाप) या आयुः कामः मत्स्यैर्जवनकस्तथा ।
ब्रह्मवर्चं स आद्याश्च सर्व्वस्य(?)काम्यकम् ॥३४३॥
अन्नप्राशनं विज्ञेयं ततो ब्राह्मणभोजनम् ।
सम्वत्सरे तृतीये वा चूडाकर्म विधीयते ॥३४४॥
मातृणां पूजनम्पूर्वं ब्राह्मणान्भोजयेत्ततः ।
अग्निस्थाप्य यथाप्रोक्तं दद्यादाघारमाहुतीः ॥३४५॥
आज्याहुतिना संस्कृत्य वारुणान्तश्च चिन्हिता ।
परिधाप्याहतं वस्त्रं आप्लवं वासमी तथा ॥३४६॥
माता कुमारमादाय पश्चाद्दाने(स्थाने)रूप(उप)वेशयेत् ।
पुनराज्याहुतीर्दद्यात ब्रह्मणा परिकीर्त्तिताः ॥३४७॥
शीतोदकं तु संस्कृत्य उष्णेनैव तु वारिणा ।
मन्त्रेणानेन वै तत्र शीतोष्णं कारयेत्ततः ॥३४८॥
उष्णेनवाप्युदके (?) रुदकेनह्यदितकेशान्वपेत् ।
नवनीतं घृतं वापि दधि वा प्राश्यमेव च ॥३४९॥
गोदा(?)दक्षिणमादाय उन्दनं मन्त्रवित्ततः ।
सवित्रा प्रसूदभर्त्ता दैव्या आ उन्दन्तु ते तन् ॥

दीर्घाइत्वाय चर्व्वमोशलल्पा कण्टकं श्वेनं विनीनं ।
यत्रि वाच्यनाम अमल्य (मंगल्यदर्व) दर्भस्तु ॥
पिञ्जल्यं औपधय. केशमस्पृशेत् ।
लोहक्षरं समादाय शिवो नामेति मंत्रवान ॥३५०॥
विनिवर्त्तयामितिवयं येना वयत्सविता तथा ।
येना वपत्सविताक्षुरेण सोमस्य राज्ञोवरुणस्य ॥
विद्वां तनब्रह्माणो वयन्ते दमस्यायुष्यं जरदष्टिर्यथासत्
उन्दनेकेशमूलेतुमध्ये विनयनं स्मृतम् छेदनं नापस्तु पूर्ववत्
गोदा पश्चिममादाय उन्दनादि प्रकारयेत् ।
छन्दनं च (चैव) आयुष्यं वैदिके न प्रकारतः ॥३५१॥
तत्रैव च द्वयं तूष्णीमुन्दनादि विधि तथा ।
उत्तर गोदां संगृह्य उन्दनादि यथोचितम् ॥३५२॥
येन भूरिश्चरान्छिद्यात्ल्लीचापरत द्वयम् ।
येन भूरिश्वरा दिवज्यो कुपश्चाधि सूर्यतने ॥
ते वपाभि ब्रह्मजीवजीवनाय सुश्लो स्यगस्वस्त्ययइति ।
यक्षुरेण मज्जयता सुपेक्षसा वप्त्वा परिहार्यताम् ॥
यक्षुरेण मज्जयता सुपेशसा वप्त्वा वावपति ।
केशांश्छिन्धि शिनामासायु प्रमोपधीम्सु खमिति च केशान्ते
ताभिरद्भिः शिरोमुद्यन्नापिताय क्षुरं ददौ ।
आक्षरं वपतीति प्रेष. वपामितित्तु नापितः ॥
यथामंगलकेशाश्च केशशेपं प्रकारयेत् ।
अनुगुप्तमेतत्केशा गोमयेपिण्डसन्निधौ ॥३५३॥

गोष्ठे वा पल्वलेवापि उदकान्ते निधापयेत् ।
आचार्यः पिवरं(?) बद्धा केशान्ते च तथैव हि ॥३५४॥
पुष्येचाश्विनिरेवत्यां मृगेवाप्युत्तरायणम् ।
हस्तविष्णुधनिष्ठाश्च क्षौरकर्म्मणि पुनर्वसु ॥३५५॥
अथकर्णवेधं (धः) वर्षे तृतीये पञ्चमे तथा ।
पुष्येन्दुरेवतीचित्रा हरिऋक्षे तथैव च ॥३५६॥
प्राङ्मुखश्चैव पूर्वाण्हे उपविश्य यथाविधि ।
तत्रादौ दक्षिणं कर्णमभिमन्त्र्य तु मंत्रवित ॥३५७॥
भद्रं कर्णेभिः संविद्यात्सक्षाय ततः परम् ।
मन्त्रवत्कर्णौसञ्छिद्य पूर्वं ब्राह्मणभोजनम् ॥३५८॥
गर्भाधानं पुसवनं स्यन्दनं च निमित्तकम् ।
जातकर्म च नाम च सूर्यावेक्षणकन्तथा ॥३५९॥
अन्नप्राशन चूडा च कर्णवेधस्तथैव च ।
ब्रह्मसूत्रोपनयनं व्रत विसर्जन (र्ग) मतः परम् ॥३६०॥
केशान्तश्च विवाहश्च चतुर्थीकर्म एव च ।
अग्नि संग्रहणश्चैव संस्काराणि च षोडश ॥३६१॥

इति श्रीब्रह्मप्रणीते याज्ञवल्क्येधर्मशास्त्रे संस्कारप्रकरणम्नाम
अष्टमोऽध्यायः ।

---

# अथ नवमोऽध्यायः

## तिथिनिर्णयवर्णनम्

गृहस्थस्य व्रतं वक्ष्ये सर्वाभीष्टफलप्रदम् ।
स्त्रियाश्च पुरुषस्यैव यथाते (?) ब्रह्मचारिणः ॥१॥
प्रतिपत्सु द्वितीया स्यात् द्वितीया प्रतिपद्युता ।
कार्या द्वितीया सार्द्धन्तु तृतीया न कदाचन ॥२॥
चतुर्थी संयुताकार्या तृतीया च चतुर्थीका ।
पञ्चमी च चतुर्थी च कार्या षष्ठ्या न संयुता ॥३॥
नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता ।
नवमी सह कर्तव्या अष्टमी नवमी तथा ॥४॥
युगाग्निर्युगभूतानि षण्मुनिर्वसुरन्ध्रयोः ।
द्वादश्येकादशी युक्ता चतुर्दश्या तु पौर्णिमा (पूर्णिमा) ॥५॥
प्रतिपच्च अमावास्यातिथियुग्मंमहाफलम् ।
योदेवानागमेद्द्यात्पितृन्दद्याच्च निर्गमे ॥६॥
स नरः क्षुत्पिपासार्त्तो भवेज्जन्मनि जन्मनि ।
यां तिथि समनुप्रा य याति चास्तं दिवाकरः ॥७॥
सा तिथिः सकलाज्ञेया पितृदेवेषु सर्वदा ।
मुहूर्त्तद्वादशी न स्यात् तत्रयोदश्यां यदामुने ॥८॥
उपोष्य द्वादशीमिश्रो सदोपोष्यैकादशीमता ।
न पक्ष भक्षये तृप्तिर्विदेहं च पत्रिणः ॥९॥

एकादशीं परित्यज्य नोपवासफलं लभेत् ।
यथा बहुमनुष्याणां मध्ये पिण्डं समाश्रयम् ॥१०॥
द्वादशी दशमीतद्वज्जीवमेकादशी व्रतम् ।
एकादशी दिनं यत्र निराहारं भवेत्सदा ॥११॥
यानि कानीह पापानि अन्नमाश्रित्य तिष्ठति ।
द्वादश्यामुपवासन्तु ये प्रकुर्वन्ति मानवाः ॥१२॥
ते विष्णुं नैव जानन्ति वृथा विष्णुपरायणाः ।
एकादश्या विना मूढ़ैर्ये कृतं द्वादशीव्रतम् ॥१३॥
भुक्तं चान्नं त्रयोदश्यां तैः कृतः कोटिगोवधः ।
द्वादशी तु यदोपोष्या विना एकादशीम्मुने ॥१४॥
पारणं च त्रयोदश्यां हन्ति पुण्यं पुराकृतम् ।
केवला द्वादशी हन्ति पुण्यं द्वादशवार्षिकम् ॥१५॥
रविचक्रार्धमात्रोऽपि तत्रोपोष्यं परं दिनम् ।
घटिका घटिका वृद्धिर्दशम्येकादशी युता ॥१६॥
एकार्णवेन यत्प्रोक्ता मार्कण्डेयस्य विष्णुना ।
वैष्णवं च तथादित्ये प्राजापत्यं तथैव च ॥१७॥
बार्हस्पत्यञ्च मैत्रञ्च तथैन्द्रो ह्यष्यसंयुता ।
दशम्येकादशी शुक्ला तथानक्षत्र संयुता ॥१८॥
ममवल्लभ या चैताः न वाच्यं(?)कस्य चिन्मय ।
एक द्वित्रि ततः पञ्च षष्ठ सप्त तथाष्टभिः ॥१९॥
दशम्येकादशी दग्धाज्जपादौ परिकीर्त्तिता ।
जया च विजया चैव जयन्ती पापनाशिनी ॥२०॥

उन्मीलिनीवञ्जुलिनी त्रिस्पृशापक्षवर्द्धिनी ।
एकादशी द्वादशी च रात्रि शेषे त्रयोदशी ॥२१॥
त्रि स्पृशानाम सा प्रोक्ता सर्वपापापहारिणी ।
आभाकासितपक्षेषु मैत्रःश्रवणरेवती ॥२२॥
संगमे न हि भोक्तव्यं दशद्वादशी (फलं) हरेन ।
संयुक्ता द्वादशश्लानि (?) मैत्रः श्रवण रेवती ॥२३॥
आवासेनापि भोक्तव्यं विंशत्त्रिंशद्घटी त्यजेत् ।
तिथिनक्षत्रसंयोगान्न कुर्यात्पारणं मुने ॥२४॥
तावत्तत्र न भोक्तव्यं यावद्क्षान्तिको भवेत् ।
तिथिक्षयेषु योऽश्नाति स भवेद् ग्रामशूकरः ॥२५॥
अपत्यानि विनश्यन्ति जपं वा पारणं स्मृतम् ।
तावत्तत्रन भोक्तव्यं यावन्नक्षत्र संक्षयः ॥२६॥
तिथिक्षयेषुयोभुङ्क्ते स भवेत्किल्विषी सदा ।
अष्टौ तानि व्रतघ्नानि आपोमूलफलं पयः ॥२७॥
हविर्ब्राह्मणकामाय गुरोर्वचनमौषधम् ।
हानि संततिच्छेदं च दौर्भाग्यं च समाप्नुयात् ॥२८॥
महाहानि करा ह्येषा द्वादशीलंघिता नृणाम् ।
न च दण्ड समायुक्ता दशम्येकादशी दिने ॥२९॥
तथावेधं विजानीयान्न कर्त्तव्या कदाचन ।
सुरया विन्दुमात्रेण गांगतोयं यथात्यजेत् ॥३०॥
दशमीवेधसंविद्धा तदा एकादशी त्यजेत् ।
दशमीशेषसंयुक्ता गांधारी साह्युपोषिता ॥३१॥

तस्याः पुत्रशतं नष्टं सर्वथा परिवर्ज्जयेत् ।
दशमी शेप संयुक्ता केवला द्वादशी तथा ॥३२॥
उपौष्यैकादशीं मोहाद् ब्रह्महा फलमश्नुते ।
उदये नवमी यत्र परतो दशमी भवेत ॥३३॥
एकादशी यत्रपूर्णा नोपोष्या द्वादशीफला ।
एकादश्यांच पञ्चाशद्भिर्भ द्वादश्याद्याहीनताच क्रमेण ।
तत्रोपोष्यैकादशी पुण्यवृद्धिर्नि.सन्दिग्धं जल्पितं
ब्रह्मणा च ॥ इति एकादशीनिर्णयः ।
जन्माष्टमी तथाशोकी श्रियष्टम्था महाष्टमी ।
एताः सुसंमुखा कार्या अष्टम्यन्तुष्ट(?)विनाशिनी ॥३५॥
अर्थिका निशिवेधेन धनपुत्रविनाशिनी ।
अष्टमी च तृतीया च षाठी वैकादशी तथा ॥३६॥
पूर्वविद्धा न कर्त्तव्या शेषा पूर्वातु वा स्मृता ।
चतुर्दशी चतुर्यामेऽअमा यत्र न विद्यते ॥३७॥
अमान्ते प्रतिपदा यत्र तत्र ग्राह्याचतुर्द्दशी ।
षष्ठ्येकादश्यमावास्या पूर्वविद्धातथाष्टमी ॥३८॥
सप्तमीविद्धा च नो(नोपोष्या)पोष्या तिथिः पञ्चमी ।
गौरी सौरी तथा हर्वा दुर्गा व्यक्रामहेश्वरी ॥३९॥
पूर्व्वविद्धां पदाकृत्वा नरोधर्म्मं निकृन्तति ।
नागविद्धातुयाषष्ठी दशम्येकादशी तथा ॥४०॥
भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् ।
तृतीयैकादशी षष्ठी अष्टमी च चतुर्द्दशी ॥४१॥

पूर्वविद्धैव कुर्वीत धनापत्यहरा स्मृता ।
सिनीवाली द्विजातीनां येषामग्निपरिग्रहः ॥४२॥
अन्येषामग्निहीनानां कुहू च परिकीर्त्तितः ।
चतुर्दशी चतुर्यामा अमा यत्र न विद्यते ॥४३॥
आयाति प्रतिपद्यत्रतत्रग्राह्याचतुर्दशी ।
शाकुन्ये पद्मरोमांगी कुलांगीकुलवर्द्धिनी ॥४४॥
पौर्णिमा(पूर्णिमा) पूजयिष्यामि सर्वकामफलप्रदा ।
ऋग्वेदे श्रवणं पूज्यं यजुर्वेदे(तु)षु पौर्णिमा(पू) ॥४५॥
सामगा हस्तनक्षत्रं अथर्वाअपिपौर्णिमा ।
सप्तम्या मुदिते सूर्ये दिनान्ते वाष्टमी भवेत् ॥४६॥
मूलेन षष्ठी संयोगात्पूजनीयाप्रयत्नतः ।
यदाष्टमीमनुप्राप्य चास्तं याति दिवाकरः ॥४७॥
तत्र दुर्गोत्सवं कुर्यात्पूजार्थेषु विशेषतः ।
यदाष्टमी न पूज्येत पूज्या तत्र न मिश्रिता ॥४८॥
दुर्भिक्षं भूतपीडा च आयुस्तेषां प्रहीयते ।
दशमीवेधं हतो जीवनन्दावेधहुताशनी ॥४९॥
द्वितीयावेधगोक्रीड़ा सर्वथा परिवर्ज्जयेत् ।
चन्द्रे दृष्टेप्यदृष्टे वा द्वितीया यत्रदृश्यते ॥५०॥
गोक्रीडां न च कुर्वीतेत्यब्रवीत्स्वायंभुवो मनुः ।
गवांक्रीडादिने यत्र सायंदृश्येत चन्द्रमा ॥५१॥
गवां गर्भी(र्भ)विपत्तिःस्यात्पशूनां च क्षयो भवेत् ।
नन्दा भद्रा जया रिक्ता कुहू च प्रतिपद्युते ॥५२॥

गो रुत्सवं वाप्यमावास्यां दीपं दद्यात्तु पक्षिणी ।
न नन्दायांबध्यते रक्षा न पूर्णा बालकर्मसु ॥५३॥
न भद्रायां गवां क्रीडा देशभंगोऽपिजायते ।
चिरं स्वातीगते चन्द्रे वन्हिर्द्धातामसादिता ॥५४॥
यमदीपंत्रयोदश्यां देताविन्त्र्यं (?) चतुर्दश्याम ।
नंदाया दर्शने रक्षा बलिदानं च मृत्यवे ।
गवां क्रीडास्तुभद्रायां वन्हौ वन्हिर्विवर्ज्जयेत ॥५५॥

इति श्रीब्रह्मोक्ते याज्ञवल्क्ये तिथिप्रकरणमनाम नवमोऽध्यायः ।

---

# अथ दशमोऽध्यायः

## विनायकादिशान्तिवर्णनम

शान्त्यर्थैशान्ति कुर्यात्सर्वारिष्टप्रशान्तयेत ।
विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजयेत ॥ १ ॥
गणानामाधिपत्ये च रुद्रेण ब्रह्मणाकृते ।
ते नोपविष्टो यस्तस्य लक्षणानि निवोधत ॥ २ ॥
स्वप्नेऽवगाहयेत्यर्थं जलंमुण्डांश्चपश्यति ।
कषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ ३ ॥
अन्त्यजैर्गर्द्धभैस्तुष्टे महिषैश्च तथैव च ।
सहैकत्रावतिष्ठन्ति युध्यात्मानस्तु निर्ज्जितः ॥ ४ ॥

व्रजमानंतथात्मानंमन्यते तु गतं परैः ।
विमना विफला रम्या स सीदन्ति निमित्तकाः ॥ ५ ॥
तेनोपतिष्टेल्लभते न राज्यं राज्यनन्दनः ।
कुमारी न च भर्त्तारमपत्यं गर्भमेव च ॥ ६ ॥
आचार्यत्वंश्रोत्रियत्वं न शिष्येऽध्ययनंतथा ।
वणिक्लाभं न चाप्नोति कृपि चैव कृपीवलाः ॥ ७ ॥
स्नापनं तस्यकर्त्तव्यं पुण्येऽन्हि विधिपूर्वकम् ।
गौरसर्पपकल्केन माज्येनाच्छादितेन तु ॥ ८ ॥
सर्वौपधैः सर्वगन्धैर्विलिप्तशिरसम्तथा ।
भद्रासनोपविष्टस्यस्वस्तिवाच्यंद्विजैः शुभैः ॥ ६ ॥
अश्वस्थानाद्धतस्थानाद्वल्मीकात्संगमान्मृदा ।
मृदंगोरोचनातगंधान्गुग्गुलं चाप्सुनिक्षिपेत ॥१०॥
स्त्रियाहृताश्चैकवर्णा न शिष्यैः सह संयुता ।
नानालङ्कारसंयुक्ता चतुर्भिः कलशैर्ह्रदात ॥११॥
चर्म्मण्य(नडुहः)स्थाप्यं स्वस्तिभद्रासनन्तथा ।
सहस्राक्षं शतधारं च ऋृपिभिः पावनं कृतम् ॥१२॥
तेनमामभिपिञ्चामि पावमान्यः पुनन्तुमाम् ।
भगंते वरुणोराजा भगं सूर्यो बृहस्पतिः ॥१३॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयोविदुः ।
यत्तेकेशेषुदौर्भाग्यं सीमन्ते चैव मूर्द्धनि ॥१४॥
ललाटे कर्णयोरक्ष्णोः रापस्तं घ्नन्तुमेसदा ।
स्नातस्य सर्षपं तैलं स्रुवेणौदुम्बरेण च ॥१५॥

जुहुयान्मूर्द्ध निकुशा सव्ये न परिगृह्य च ।
मितश्च सम्मितश्चैव तथा शालकटंकटैः ॥१६॥
कूष्माण्डं राजपुत्रैश्चेत्येतेस्वाहा समन्विते ।
दद्याच्चतुष्पथेसूर्ये कुशानास्तीर्य सर्वतः ॥१७॥
कृताकृतांस्तण्डुलांश्च पललोदनमेव च ।
मत्स्यान्पक्कांस्तथैवामां मांसमेतावदेव तु ॥१७॥
पुष्पं सितं सुगन्धेनत्रिविधमपिमूलकम् ।
पूरिकापूपास्तथैवेडंरिकाम्रजः (?) ॥१८॥
दध्यान्नपयसा चैव गुड़पिष्टं समोदकैः ।
विनायकस्यजननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥१६॥
दूर्वा सर्षपपुष्पाणि दत्वार्घ्यं पूर्णमञ्जलिम् ।
रूपंदेहि जयंदेहि भगं भवति देहिमे ॥२०॥
पुत्रान्देहि धनं देहि सर्वकामांश्च देहिमे ।
ततः शुक्लाम्बरः(धरः)शुक्लमाल्यानुलेपनः ॥२१॥
ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रयुग्मंगुरोरपि ।
एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ॥२२॥
कर्म्मणाम्फलमाप्नोति श्रियं प्राप्नोत्यनुत्तमाम् ।
आदित्यस्तु सदा पूज्यस्तिलकं स्वामिनस्य(श्च)सः ॥२३॥
महागणपतेश्चैव सिद्धिकुर्वन्समाप्नुयात् ।
श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ॥२४॥
वृष्ट्यायुः पुत्रकामो वा तथैवाभिचरः(न्पु)पुनः ।
मण्डले पृथिव्या आव्हानं स समुद्रां सपर्वताम् ॥२५॥

मेरुरुत्तरतः स्थाप्य यवैर्वा चन्दनेन वा।
तण्डुलैर्वापि संस्थाप्य सवीर्या देवतान्यसेत् ॥२६॥
श्रुत्वायोगीश्वरंवाक्यं पृच्छन्तिमुनयस्तदा।
कियत्प्रमाणं पृथिवी दिशश्चविदिशस्तथा ॥२७॥
कियन्मात्राणि देवानां पूर्वादि दिशिविन्यसेत्।
कस्य देवस्य किम्बीजं यथावत्कथयस्वमे ॥२८॥
हन्तते कथयिष्यामि प्रमाणं पृथिव्यामुने।
दिशांचोपदिशां चैव यथा नौरिव संस्थितः ॥२९॥
लक्षंद्वादशकं चैव कोटीनां षड्भिरेव च।
प्रमाणं पूर्वा विज्ञेयं कथितं तत्त्ववादिभिः ॥३०॥
लक्षं चैकादशं चैव चतुःकोटिस्तथैव च।
आग्नेयान्तुमितिः प्रोक्ता प्रमाणंश्रूयताम्मुने ॥३१॥
(?) च नैऋत्यां वः प्रकीर्त्तिताः।
मात्राणिगदितापूर्वं यथोक्तं मुनिसत्तमाः ॥३२॥
लक्षद्वादशसंज्ञञ्च कोटीनां सप्त तथैव च।
वारुण्यां दिशि विज्ञेयं प्रमाणं गदितम्पुरा ॥३३॥
लक्षश्चैकादशप्रोक्ताश्चतुः कोटिस्तथैव च।
वायव्यां तु प्रमाणंस्यात्पुरातत्र न संशयः ॥३४॥
अष्टादश च लक्षाणां कोटिश्चैकादशैव तु।
उदीच्यां तु मितिः प्रोक्ता ब्रह्मणा परमेष्ठिना ॥३५॥
द्विषड् लक्षप्रमाणं च पञ्चकोट्यस्तथैव च।
ऐशान्यां तु मितिः प्रोक्तागदिता तत्र वै मुने ॥३६॥

लक्षं ब्रह्मकटाहं च क्षितिश्चाकाशमन्तरम् ।
रत्नगर्भमिति प्रोक्ता समुद्राः सप्तपर्वताः ॥३७॥
ततोवन्हिं तु संस्थाप्य होमार्थे हव्यवाहनम ।
भू शुद्धिः प्रथमं कुर्याद्वननायूरणादपि(?) ॥३८॥
वृष्ट्यम्बलेपनाश्चैव गौभिरक्रमणन्तथा ।
समूहाभ्युक्षणाप्रोक्ताभूमिः शुध्यति सप्तधा ॥३९॥
ततोवन्हि तु संस्थाप्य कलादशसमन्विताम ।
धूम्रा च नील वर्णा च कपिला विस्फुलिङ्गिनी ॥४०॥
ज्वालाचार्चिष्मती चैव कव्य वा हव्यवाहिनी ।
रौद्रसंहारिणी चैव वैश्वानरकलादश ॥४१॥
कव्यवाहपूर्वं विन्यस्य हव्यवाहं पश्चिमेन्यसेत ।
ज्वाला च दक्षिणेन्यस्य चर्चिष्मती उत्तरेतथा ॥४२॥
कलां या मूर्ध्निविन्यस्य दशांगज्वलनंस्मृतम ।
स्थाप्यवन्हिमयन्तेजोदद्यान्मंत्राहुतीस्तथा ॥४३॥
देवतास्तत्र विन्यस्य तथा प्रत्यधिदेवताः ।
गणपतिश्चतथाब्रह्माविष्णुशङ्करमेव च ॥४४॥
लक्ष्मी सरस्वती चैव ङुम्रवि (दुर्गा च) क्षेत्रपालकः ।
मोदकैर्गणपतिंस्थाप्य ब्रह्माणं स्थापयेद्धरिम् ॥४५॥
कुंकुमे स्थापयेद्विष्णुं पञ्चमंशंकरन्तथा ।
जाती फलैस्तथादूर्वाश्वेतपुष्पैः सरस्वतीम् ॥४६॥
रक्तपुष्पैस्तथादुर्गा क्षेत्रपालस्तथैव च ।
गाणपत्यं ब्रह्मयज्ञं ललाटं विष्णुपूर्वकम् ॥४७॥

शम्भवायनमः पूर्वं श्रीश्चते लक्ष्मीस्तथा ।
पञ्चनद्यः सरस्वत्यां देवस्त्र तौ दुर्गास्तथा ॥४८॥
न हि स्पृशं तथामन्त्रैर्मन्त्रन्यासाः प्रकीर्त्तिताः ।
सूर्यः सोमोभूमिपुत्रः सोमपुत्रोबृहस्पतिः ॥४९॥
शुक्रः शनैश्चरो राहुः केतुश्चेतिग्रहा स्मृताः ।
प्रणवंबीजपूर्वञ्च स्थाप्य देवं दिवाकरम ॥५०॥
कंकुमेन लिखेत्ताम्रं बीजितोऽसौ रविर्भवेत ।
आकृष्णेनेति मंत्रेण कलाद्वादशभिर्युतम ॥५१॥
आदित्यं तत्र संस्थाप्य सर्व्वसिद्धिप्रदायकम ।
सोमं बीजस्थमोंकारं स्थाप्यदेवं निशाकरम ॥५२॥
चन्दनस्फटिकेलिख्य बीजितोशशिपूजकः ।
इमन्देवेतिमन्त्रेण कलाषोडशभिर्युतम ॥५३॥
सोमन्तत्रैवविन्यस्य शान्तिकुर्वन्तु नित्यशः ।
ब्रह्म(बीजस्थमोङ्कारं)बीजे स्थाप्यदेवन्तु मङ्गलम् ॥५४॥
तदनेरुणरक्तांगं भौमबीजं लिखेत्सदा ।
अग्निर्मूर्द्धेति मन्त्रेण कलादशममाद्यतम ॥५५॥
तत्रैवागारकं स्थाप्य दशांगं बीजसंयुनम ।
ॐकारं(बीजपूर्वञ्च)बीजश्चतुर्थस्थाप्यसदाबुधः ॥५६॥
हार्दिकं च लिखेत्स्वर्गे बीजितो बुधम्पूजयेत् ।
उद्बुध्यस्वेति च ऋचा कला अष्टसमाकुलम् ॥५७॥
बुधन्तत्र समारोप्य सवीर्यफलदायकः ।
प्रणवौ वायुबीजञ्चन्यसेत्तत्र बृहस्पतिम् ॥५८॥

काञ्चने चन्दने लिख्य पूजयेद्वाक्पतिंसदा ।
बृहस्पते पठेन्मन्त्रं कलापं च दशाबृतम् ॥५६॥
बृहस्पतिं समाहूय यज्ञसिद्धिप्रदायकम् ।
प्रणवन्तु समाद्बीजं स्थापयेद्भार्गवन्तथा ॥६०॥
राजते चन्दने लिख्य शुक्रपूजाविधौसदा ।
अन्नात्परिस्तु मंत्रेणस्थापयेद्भार्गवन्तथा ॥६१॥
राजतेचन्दनेलिख्य शुक्रपूजा विधौ सदा ।
अन्नात्परिस्तु मन्त्रेण अष्टादशकलान्विता ॥६२॥
शुक्रं तत्रैव विन्यस्य श्रियं कुर्वन्तु नित्यशः ।
सप्रणवं वन्हिबीजं सूर्यपुत्रं न्यसेत्सदा ॥६३॥
सीसके चासितेलिख्य सौरिः पूज्यात्सुखी भवेत् ।
शन्नोदेवीं समुच्चार्य कलादशविधानतः ॥६४॥
शनैश्चरन्तु संस्थाप्य शान्तिकर्मणि सर्वदा ।
ओंकारं व्योम बीजं च राहुः केतुस्तथैव च ॥६५॥
धूमकेतुं लिखेत्कांस्ये तौ देवौ परिपूजयेत् ।
कयानश्च केतुं कृण्वं कला अष्ट समावृतौ ॥६६॥
राहुं केतुन्तु विन्यस्य मंत्रसंस्कारं शृणु ।
अग्नि दूतं तथाश्वन्नत्स्योनापृथिवी नो भव ॥६७॥
इदं विष्णुर्महां इन्द्र शुक्रज्योतिस्तथैव च ।
प्रजापते सु आयंगौः ब्रह्मयज्ञानमेव च ॥६८॥
मंत्रसंस्कारविज्ञेयः ग्रहाश्चैव विधानतः ।
तपनी तापनी चैव शोधनी शोषणी तथा ॥६९॥

कल्याणी (?) ग्राम्या वरेण्या कर्पणी तथा ।
सुषुम्ला (म्णा) वृष्टिधान्या जेष्ठा चैव हिरण्यदा ॥७०॥
द्वादशैताः कला दिव्या रविमण्डलसंस्थिता ।
पूषायशासुमनसा रतिः प्रीतिकरी तथा ॥७१॥
धृतिवृद्धिकरा ( सा च ) मरीची अंशुमालिनी ।
अङ्गिरा शशिनी चैव तथा सम्पूर्णमण्डला ॥७२॥
तुष्टिश्च परमाख्याता अमृतापोडशीस्मृता ।
कलाचन्द्रस्यविज्ञेयाः शान्ति कुवन्तुनित्यशः ॥७३॥
अरुणाचारुणाख्याना लोल लाक्ष्या च रौरवा ।
घोराघोरप्रिया धात्री भीमा चैव कपर्दिनी ॥७४॥
स्थाप्य भौमकला युक्तं दशांगं च कलायुतम ।
हार्द्रा सौम्या तथा शुभ्रा तारातारसामाथि(समाधि)नी ॥७५॥
गुणागुणवतीचन्द्रा बुधस्याष्टकलाः स्मृता ।
पीतापीतप्रिया हंसा सुवना(शोभना)वनमालिनी ॥७६॥
यया रामेश्वरी तारा सरसाजीव संयुता ।
स्वाहा देवप्रियादेवी तथैन्द्री धरणीस्मृता ॥७७॥
कलाः पञ्चदश प्रोक्ता मण्डलां गिरसंस्थिता ।
शुक्ला सौमनसा चैव पीयूषापयदायिनी ॥७८॥
पद्मापद्मावती गौरी कन्याख्या च सरस्वती ।
चण्डाचण्डी जपा रुद्रा पूर्वप्रीता च भार्गवी ॥७९॥
अर्था च वरुणा प्रीता तथान्या कनकास्मृता ।
अष्टादशकलाः प्रोक्ता भृगुमण्डलसंस्थिता ॥८०॥

कृष्णावभ्रथ्यथकपिला भीमाभीमभयानका ।
कपालमालिनी प्रोक्ता दुर्गनामारनो(णी)तथा ॥८०॥
शनैश्चरकला दिव्या कलाष्टशनिसंयुता ।
नीलानील प्रिया कुम्भा कृष्णावदनवर्द्धिनी ॥८१॥
अवशापा(खा)दिनी क्लीबा राहुकेतु कलाःस्मृताः ।
गौरी सरस्वती लक्ष्मी तथैन्द्री च चतुर्थिका ॥८२॥
अन्ये ये मण्डले देवाः कलाश्चपरिविन्यसेत् ।
ईश्वरो गिरिजास्कन्दः कृष्णब्रह्मेन्द्रमन्त्रकृत् ॥८३॥
कालश्च(ञ्च)चित्रगुप्तञ्च(श्च)स्थापयेद्ग्रहदेवताम् ।
दधिदुग्धशिवंस्थाप्य मृत्तिकास्थाप्यपार्वती ॥८४॥
स्कन्दश्चदुग्धेविन्यस्य हविः स्थाप्यचतुर्मुखम् ।
इन्द्रञ्च गोमयेन पिण्डेन अन्तकं स्थापयेत्तिलैः ॥८५॥
कालञ्च आयसं स्थाप्य चित्रगुप्तं तिलैर्यवैः ।
ग्रहदेवाश्च विन्यस्य ब्रह्मबोजे न बीजितः ॥८६॥
मध्ये ब्रह्ममारोप्य मन्त्रन्यासन्ततः परम् ।
त्र्यम्बकंयजामहे श्रीश्चते लक्ष्मीस्तथा ॥८७॥
यदक्रन्दविष्णोरराटमाब्रह्मब्रह्ममेव च ।
सजोषा च यमायत्वा कार्षी धानक्तत(?) ॥८८॥
मण्डलेन तु संस्थाप्य मन्त्रन्यासाः प्रकीर्त्तिताः ।
काञ्चनं वेद्यां विन्यस्य आपोराजस्तथैव च ॥८९॥
मृत्तिका पृथिवीन्यस्य कुंकुमं स्वर्णमेकेश्चव(केशव)म् ।
इन्द्रश्चगोमयं पिण्डं पुलोमामपिगोमयाम् ॥९०॥

प्रजापतिं च वै स्थाप्य सर्वं च तिलतण्डुलैः।
पिण्डं संस्थापयेद्ब्रह्मा पुनर्ब्रह्माणबीजिताः ॥६१॥
सर्वं ब्रह्मसमारोप्य सर्वीर्या बीजसंयुता।
सनः पितत्पयो अद्यां महीद्यौः पृथिवीस्तथा ॥६२॥
इदं विष्णुर्महा इन्द्र इन्द्रदेवीस्तथैव च।
प्रजापते नमोस्तर्प्य ब्रह्मयज्ञानमेव च ॥६३॥
मंत्रसंस्कार विज्ञेया सबीजाब्रह्मसंयुता।
गणपतिं तथा चण्डीं वायुमन्तरिक्षदिग्गजान् ॥६४॥
देवताः पञ्चविन्यस्य ॐकारेणैव बीजिताः।
गणानांत्वा जातवेदा प्रयो(प्रजापते)पेतथैव च ॥६५॥
घृतं घृतपावानश्च प्रजापतये च वायवे।
मंत्रसंस्कार विज्ञेया मण्डले पूजयेत्सदा ॥६६॥
मध्ये तु भास्करं स्थाप्य आग्नेय्यां च निशाकरम।
भौमन्तुदक्षिणेन्यस्य ईशाने तु बुधंन्यसेत ॥६७॥
पश्चिमे तु शनिस्थाप्यवायव्यां राहुमेव च।
केतुंस्थाप्य तु नैर्ऋत्यां एवं स्थाप्यनवग्रहान् ॥६८॥
ततस्तु देवताःस्थाप्य अधिदेवांस्ततः परम्।
पञ्चदेवांस्तु विन्यस्य ततः प्रत्यधिदेवताः ॥६९॥
इन्द्रोऽग्नियमानैर्ऋत्यां जलं वायुंकुबेरकम्।
इशानेकेशवेन्द्राणी स्थापयेत्पञ्चपल्लवैः ॥१००॥
गोमयेनस्थापयेदिन्द्रमग्निस्थाप्यघृतेन च।
माक्षिकेन यमंस्थाप्य दध्नास्थाप्य तु नैर्ऋते ॥१०१॥

मृत्तिकयास्थाप्यवरुणं वायुं स्थाप्य तु निक्षिपेत्(विन्यसेत) ।
क्षीरेणस्थापयेत्सोमं कृष्णं चन्दनकाञ्चनम् ॥१०२॥
ईशानं धान्यमध्ये तु एवं संस्थाप्य सत्तमाः ।
त्रातारमग्नि दृतश्च यमायत्वेष नैर्ऋते ॥१०३॥
इमम्मे वरुणं चैव वा (?) वदावित ।
ईशानोपब्रह्मङ्कं प्रतद्विष्णुस्तथैव च ॥१०४॥
मंत्र संस्कारेण (वै) प्रोक्ताः ये च प्रत्यधिदेवताः ।
ये पार्श्ववर्त्तिनोदेवा ये वै स्थापनमुत्तमाः ॥१०५॥
मध्ये स्थाप्य चतुर्वेदान्तद्वच्चैव तु राशयः ।
तद्बाह्ये स्थापयेद्योगा ऋक्षाःस्थाप्यास्तत.परम् ॥१०६॥
गायत्रीमेपपर्णी च योगे योगेतवस्तरम ।
अश्विनातेजस्यश्चैव मन्त्रन्यासेन पूजयेत् ॥१०७॥
इन्द्रे शानयोर्मध्ये लोकपालान्प्रपूजयेत ।
वायव्यसोमयोर्मध्येवसवानष्टौ नियोजयेत ॥१०८॥
ध्रवोध्रवश्च सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥१०९॥
शतधारेणविन्यस्य मन्त्रवत्पूजयेत्ततः ।
ईशानोत्तरमध्ये तु ऋषीन्सप्तप्रविन्यसेत ॥११०॥
गौतमोऽथभरद्वाजो विश्वामित्रोऽथकश्यपः ।
जमदग्निर्वशिष्ठश्च अत्रिश्चैव ततः परम ॥१११॥
सप्तऋषींश्च विन्यस्य सवीर्यान्पूजयेत्सदा ।
ईशानइन्द्रयोर्म्मध्ये रुद्रानेकादश न्यसेत ॥११२॥

अजैकपादहिर्बुध्न्य विरूपाश्च तथैव हि ।
हरश्चबहुरूपश्चत्र्यम्बकश्चसुरेश्वरः ॥११३॥
सविता च जयन्तश्चपिनाकी नीललोहितः ।
रुद्राएकादशप्रोक्ता एतान्संन्यसेत्सदा ॥११४॥
रुद्राग्नेययोर्मध्ये द्वादशादित्यान्न्यसेत्सदा ।
इन्द्रोधाता भगः पूषा सविता विष्णुरेव च ॥११६॥
त्वष्टा मित्रोऽर्यमश्चैव आदित्याद्वादशस्मृताः ।
सवितारं प्रथमे न्यस्य मन्त्रन्यासं यथोचितम ॥१२०॥
दक्षिणाग्नेययोर्मध्ये विश्वेदेवाष्टमातरः ।
कामः कालो धृतिश्चैव पूर्वमेवप्रकीर्त्तिताः ॥१२१॥
अदितिद्यौरितिसंस्कृत्य पूज्या पार्श्ववर्त्तिनः ।
ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा ॥१२२॥
वाराही च महेन्द्राणी चामुण्डा च तथाश्रिया ।
क्षेत्रपालसहा पूज्यास्तथा ईशानसंयुता ॥१२३॥
ब्रह्माणी मे शर्म्मा(सरमा)श्चैव(?)नृत्या एण्यन्द्रमेव च ।
खड्गो इन्द्रपत्नी च जातवेदा लक्ष्मी तथा ॥१२४॥
न हि स्पृशसमुच्चार्य मन्त्रसंस्कार उच्यते ।
याम्य नैर्ऋतयोर्मध्ये स्थापयेत्पितृगणैः सह ॥१२५॥
कव्यवाडनलंसोमं यममर्यमणं तथा ।
अग्निश्वात्तावर्हिषदो ऊष्मामरीच्य(च्यादय): ॥१२६॥
मधुपाः सोमपाश्चैव नमोवश्च पितॄन्यसेत् ।
वरुण नैर्ऋतयोर्मध्येस्थापयेत्सप्तसागरान् ॥१२७॥

लवणेक्षुसुरासर्पिदधिदुग्धसमज्जलैः ।
शुक्त सागर संस्कृत्य अद्भ्यः सूक्तेन विन्यसेत ॥१२८॥
वरुणवायव्ययोर्मध्ये नागानष्टकुलान्यसेत ।
अनन्तं वासुकितक्षकं कर्कोटकधनञ्जयौ ॥१२९॥
पद्मं चैव महापद्मं शंखं च कुलिकं तथा ।
सर्पसूक्तेन विन्यस्य पूजयेच्च सरीसृपान ॥१३०॥
वारिराजं दिशामध्ये पञ्चभूतात्मवैन्यसेत ।
पृथिव्यापश्चतेजश्च वायुराकाशमेव च ॥१३१॥
पूर्वभागे षड्ऋतून वसन्तादीन्प्रपूजयेत ।
दक्षिणे च पितृन्देवान्ध्रुवश्चोत्तरे पूजयेत ॥१३२॥
अगस्त्यो दक्षिणे पूज्यः पृथग्मन्त्रैश्चमंत्रवत ।
भूतायत्वा वसन्ताय नमोवः पितरस्तथा ॥१३३॥
ध्रुवः क्षितिः स्वन(ना)मानः मंत्रन्यासाः प्रकीर्त्तिताः ।
आपो देवीति मंत्रेण सर्वदेवाः समागताः ॥१३४॥
आगतान सर्वदेवाश्च पूर्वादिदिशि विन्यसेत ।
चतुः कोटिस्तु पूर्वेण द्विकोटि वन्हौ विन्यसेत ॥१३५॥
चतुः कोटिस्तुयाम्यां च चतुःकोटि स्तु नैर्ऋते ।
स्थिताः कोटिस्तु वारुण्यां सकृद्वायव्यमेव च ॥१३६॥
उत्तरेण चतुःकोटि रीशाने त्रितयं स्मृतम ।
ऊर्ध्वं चैव त्रिकोटिस्यात्त्रिकोटि च अधोन्यसेत् ॥१३७॥
मरुत्मण्डलमध्यस्थात्रिशङ्कैः परिपूजयेत ।
पूज्या च बीजसंयुक्ता सर्वकामफलप्रदा ॥१३८॥

होमे च शान्तिके चैव वैष्णवे शुभकर्मणि।
वैकुण्ठे पौष्टिकेयज्ञेवरुणं पत्र(त)पूजयेत् ॥१३९॥

सवीर्याः सफलाः पूज्यानिर्वीयाः निःष्फलाः सदा।
वीजहीनेन यद्द वं(?) संकुर्यात्कर्मसिद्धयति ॥१४०॥

अर्केण (?) पुष्पाञ्जलिः पुष्पं नैवद्य पायसन्तथा।
आदित्यस्तु यदापूज्याः वास्तुपूजयेत्सदाशुभम ॥१४१॥

विल्वपत्रं तथा पत्री(त्रं)जातीपुष्पंतथैव च।
नैवेद्यं गोपयश्चैव वास्तुश्चन्द्रम्प्रपूजयेत् ॥१४२॥

ब्रह्मपुष्पं तु पुष्पंस्याद्यवागृन्नानिवेदयेत।
पूजयेद्धरणीपुत्रं वासुस्थः स्वस्थोभवेत्सदा ॥१४३॥

पीतपुष्पं तथा पत्री(त्रं)तुलस्या वा तथैव च।
गोधूमान्नं च नैवेद्यं बुधपूजाविध्युच्यते ॥१४४॥

मृ(भृं)गराजं पीतपुष्पं नैवद्यश्चयप्रो(वो)दनम्।
वाक्पतिं पूजयेद्द्वास्थः शान्तिकुर्यात्सनित्यशः॥१४५॥

जातीफलं तथामल्लीयवान्नंदुग्धसंयुतम।
भार्गवं पूजयेन्नित्यं सर्वसिद्धिप्रदायकम ॥१४६॥

तिलौदनं च नैवद्यं राजसेनां च पत्रिका।
वास्तुपूज्येऽवनिन्देवं(?)फलं स्वस्थं प्रदापयेत् ॥१४७॥

भू कदम्बं च कल्हारी परीदद्यात्तुतौग्रहौ।
माषोदनेन(दनं)च नैवेद्येन(वेद्यं) राहुकेतुम्प्रपूजयेत ॥१४८॥

नैवेद्यं सघृतं कुर्याद्ग्रहाणां च विशेपतः।
अन्येपां सर्वदेवानां नैवेद्यंपायसं स्मृतम ॥१४६॥

पूजयेन्मंत्रसंयुक्तं धूपदीपैश्चगुग्गुलैः ।
यवैश्चैव तथा कुर्यात्थापनं सर्व देवता( नाम ) ॥१५०॥

अर्कः पलाशखदिरापामार्गोऽथपिप्पलः।
औदुम्बरः शमीदूर्वाः कुशाश्चसमिधः क्रमात् ॥१५१॥

अष्टाग्निकश्चाष्टशतं अष्टविंशतिमेव च।
होतव्यामधुसर्पिभ्र्यां दध्ना क्षीरघृताप्लुताः ॥१५२॥

गुडोदनं पायसं च हविष्यक्षीरमिष्टकम।
दध्योदनं हविश्वर्ण मांसं(मापं)चित्राण्यनेकधा ॥१५३॥

दद्याद्ग्रहा क्रमादेतद्द्विजेभ्यो भोजनं तथा।
होतव्या सूर्यसंयुक्ता रात्रौ नैव च नैव च ॥१५४॥

स्वाध्यायं भोजनं होमं महादानांगमम्लवम।
एतद्रात्रौ न कुर्व्वीत ब्रवीत्स्वायंभुवः पुरा ॥१५५॥

क्रूर( क्र )सग्रे(ग्रहे)तथारात्रौ चाण्डालेम्लेच्छदर्शने।
होमं दानं तथा श्राद्धं नैमित्तं तत्रवर्ज्जयेत् ॥१५६॥

उपरागे गुरुर्दीक्षे पुत्रे जाते तु सङ्क्रमे।
स्नानं दानं तथा होमं रात्रौ कुर्याच्चबुद्धिमान् ॥१५७॥

धेनुः शंखस्तथाऽनड्वान्हेमवासो हयः क्रमात्।
कृष्णागौरायसंछागं एतावै दक्षिणाः स्मृताः ॥१५८॥

यस्य यस्यभवेद्द्राम्थः तं तं यत्नेन पूजयेत् ।
ब्रह्मणैपवरोदत्तः पूजिताः पूजयिष्यथ ॥१५६॥
ग्रहाधीना नरेन्द्राणामुछ्रायपतनानि च ।
भावाभावोऽपि जगतस्तस्मात्पूज्यतमाग्रहाः ॥१६०॥
इति श्री ब्रह्मप्रणीते याज्ञवल्क्येधर्मशास्त्रे यज्ञविधाने
गणपतियागग्रहशान्तिःनाम दशमोऽध्यायः ।

---

# अथ एकादशोऽध्यायः

## तत्रादौदानविधिवर्णनम

अथातः संप्रक्ष्यामि दानकर्मणियद्विधिः ।
त्रिणपात्राग्रतः (?) स्पांवुविड्वच्चचलोयतः ॥१॥
जीवितव्ये च तद्विप्रा. तस्माद्देयं सदा बुधैः ।
दुलर्भं भारतेवर्षे जन्मयस्मान्मनुष्यता ॥२॥
मनुष्यान्मध्यमानुष्यं ब्राह्मणत्वं हि दुर्लभं ।
यत्रक्षेत्रे च काले च वीजवप्तमनेकधा ॥३॥
पात्रपूर्वंतु यद्दत्तं सकलं धर्म्मलक्षणं ।
स्याद्वर्त्तितैल योगेन दीपोदीपनध (?) कृद्याया ॥४॥
विघातयोगेन विप्रोद्धरण (?) कृत्तथा ।
दानं तु त्रिविधं प्रोक्तं सत्वराजसतामसं ॥५॥

तत्प्रवक्ष्यतु संदिग्धं गुणं भेदानुवर्तय ।
श्रद्धया सुवलिना भावं कृत्वा हृदिजनार्द्नं ॥६॥
कालपात्रं वसद्भावं गुप्तं सात्विक उच्यते ।
हृदिकृत्वाद्विधावुद्धिर्दीयते ख्यातिहेतवे ॥७॥
यदाश्रिताय साय(व)ज्ञं दानं तद्राजसंस्मृते ।
क्रुद्धस्खलितवित्तेपु दीयते यद्यतस्ततः ॥८॥
तं ज्ञेय तामसं स्वल्पं यदाख्यापयते बहुः ।
गामेकस्यापि सत्वेन सहस्रं राजसेन तु ॥९॥
दीयते तमसालक्ष्यं समंदानं तदुच्यते ।
विमाने परमारूढो दिव्यभोगविभूपितः ॥१०॥
योगंतदिष्टन्यने स्वर्गासगोदानं प्रयच्छति ।
सुशीलां लक्षणवतीं युवतींवत्स संयुतां ॥११॥
बहुदुग्धदां स्निग्धांच धेनुं दद्याद्विचक्षणः ।
विवत्सां रोगिणीं दुष्टांस्थविरांश्रृङ्गभीपणीं ॥१२॥
क्षीणां क्षीरसरीरांगांदद्याद्दोपमवाप्नुयात् ।
रौप्य हेम समायुक्तामन्न पात्र विधानतः ॥१३॥
कांस्यदोहन संयुक्तां श्रेष्टावस्त्रयुगावृता ।
पुष्पमालोचिता सूता घंटाभरणभूपिता ॥१४॥
त्रिपलं हेमसंयुक्ता शिरश्रृङ्गे अलंकृतं ।
रौप्यंचाष्टपले प्रोक्तं क्षुराणामप्यलंकृता ॥१५॥
तथा ताम्रषष्टिपलं प्रोक्तं पृष्ठिदेशे निधापयेत् ।
कांस्यदोहन संयुक्ता पलानां सप्त सप्ततिः ॥१६॥

दीयते पुच्छ संगृह्यमत्पात्रे दक्षिणान्वितं।
दद्यान्मन्त्रं ममुच्चार्य चतुर्वर्गफलप्रदा ॥१७॥
सौवर्ण रौप्यमहिपी वृपमं च यथाविधिः।
पृथग्मंत्रं समुच्चार्य तथान्ये परमात्मने ॥१८॥
तरुणारूप संपन्ना सुशीला च पयस्विनी।
न्यायार्ज्जिता सवत्मा च सादेया ब्राह्मणाय गौः ॥१६॥
आदित्यदुहिताधेनुः सर्व्वदानोत्तमोत्तमः।
अनेनगौः प्रदानेन गोविन्दः प्रीयताम्मम ॥२०॥
गावो मे अग्रतः स्थातु गावोमे संतुपृष्ठतः।
गावो मे गात्रतः संतु गवाम्मध्येवसाम्यहं ॥२१॥

इति धेनु गोदान संकल्पः

दत्वैवं दिव्यभोगानि दिव्यस्त्रीवृंद संवृतः।
गोवत्स गोमतुल्यानि वर्पाणि दिवि मोदते ॥२२॥
यावद्वत्समुखं योनौ दृश्यते गोमुखामुखी।
यावन्न जायते धेनुस्तावद्भूमकलामता ॥२३॥
अलंकृत्योक्तविधिना सुवर्ण त्रिपलान्विता।
दत्वातु पुरुपः स्वर्गे वसत्यमरपूजितः ॥२४॥
गोदानविधि संयुक्तं प्रदद्यान्महिपी शुभा।
विश्वामित्र कुलोद्भूता सौरभी पयसंयुता ॥२५॥
दुस्तरातरणे दाने सूर्य्यजः प्रीयतां मम।
नदी वैतरणीनाम यममार्गे भयावहा।
तस्याहं तरणार्थाय महिपीश्च ददाम्यहं ॥२६॥

### इति महिषीदान संकल्पः

यम द्वारे पथेक्षेत्रे कृष्णावैतरणीं नदी ।
तर्त्तुकामः प्रयच्छामि कृष्णवैतरणीं च गाम् ॥२७॥
ऋणं च सर्वदा नित्यं यहणं च मया कृतम् ।
ऋणधेनु प्रयच्छामि(प्रदास्यामि) प्रीयताम्मे जनार्दन ॥२८॥
यन्मेवा चापि सकल्पं वेश्मनो भविता मम ।
तस्य सङ्कल्प सिद्ध्यर्थं गवां दत्वा द्विजोत्तमः ॥२९॥
वृष युग्मं वृषं वापि दत्वा गत्वेश्वरालयम् ।
भुक्त्वा भोगान्यनेकानिद्विगुणो युग्मदानतः ॥३०॥
दशधेनु समोऽनड्वानेकश्चैव धुरन्धरः ।
धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ॥३१॥
तस्माद्वृषं प्रदास्यामि धर्म्मः प्रीणातु नित्यशः ।

### इति वृषभ सङ्कल्पः

श्रेष्ठाच्छ्रेष्ठतरंलोके भूमिदानं द्विजातिभिः ।
दत्त्वा तु पुरुषः स्वर्गे पूज्यते त्रिदशोत्तमैः ॥३३॥
वाञ्छन्तिपितरो नित्यं स्वर्गे वसति नित्यशः ।
यश्चास्मत्कुलजः कश्चिद्भवत्यवनिदानकृत ॥३४॥
नरकस्थामलु(मुं)लोका स्वर्गस्था परमं पदम् ।
धरणीसर्वजीवानां सर्वदानोत्तमोत्तमा ॥३५॥
रत्नगर्भाधरा प्रोक्ता काश्यपी शस्यमालिनी ।
अनेन भूमिदानेन शस्येन परिसंयुता ।
प्रीयताम्मे सदा नित्यं रुद्रविष्णुप्रजापतिः ॥३६॥

### इति भूमिदान सङ्कल्पः

षष्टिप्रस्थ तिलानां च स्वर्णं पल चतुष्टयम ।
रूप्यं(रौप्यं) चाष्टपलं प्रोक्तं ताम्रं षष्टिशतंफलम् ॥३७॥
तिलं द्विगुणकं प्रोक्तं तिलपात्रं विधीयते ।
देवाशनं तिलाः प्रोक्ताः पितृणां सर्वकर्मसु ।
स्वर्णरौप्यतिला(न)दत्त्वा सर्वदेवाः प्रसीदन्तु ॥३८॥

### इति तिलपात्र सङ्कल्पः

अन्नात्प्राणाः समुत्पन्नास्तस्मादन्नम्प्रदापयेत ।
अन्ने दत्ते मनुष्यस्य प्राणदाताभवत्यलम ॥३९॥
अन्नदः सुखमाप्नोति तथापो(चो)त्पन्नदः(?) ।
इदमन्नं मया दत्तं प्रीयतां पितृदेवताः ॥४०॥

### इति अन्नदान सङ्कल्पः

स्वर्णरौप्यं च गौर्भूमिरन्नंवस्त्रंतथातिलाः ।
दत्तैस्तैर्विष्णुसदनं यातिभूत्वा च विष्णुवत् ॥४१॥
अन्नदस्तु सुखंयाति लोकत्रयसुदुर्लभम ।
कल्पायुश्च भवेद्भोगी वसते ब्रह्ममण्डले ॥४२॥
धातूनामुत्तमं यस्माद्धाटकं सुखल्लभम ।
तस्माद्धेमं प्रदास्यामि हेमगर्भः प्रसीदतु ॥४३॥

### इति स्वर्णदान सङ्कल्पः

शिवनेत्रसमुत्पन्न रौप्यं पितृगणप्रियम ।
तस्माद्रौप्यप्रदानेन प्रीयतां रुक्मिणीपतिः ॥४४॥

## इति रौप्यदान सङ्कल्पः

गोपुच्छेषुशिरादासी अश्वं कर्णेकरे करि ।
महिषीशृंगे वृपस्कन्धं गृहस्तम्भे परेभुवि ॥४७॥
हलाग्रकोटी रथचक्रमध्ये पत्नीहृदेनाभि अयाविकाश्च ।
उष्णश्च ग्रीवाखर पादयोश्च शेपानिदानानि च विप्रहस्ते ॥
आस्फोटयन्ति पितरोनन्दयन्ति पितामहाः ।
भूमि दानात् कुले जाता(तो)म(स)नस्त्राता भविष्यति ॥४६॥
वसन्तिब्रह्म लोकेषु शीतामलजलप्रदा ।
जलधेनुश्च यो दद्याद्विप्रेभ्यस्तु कमण्डलुम् ॥५०॥
दिव्यं वर्ष सहस्राणि सुरसुन्दरिसम्भृतः ।
ब्रह्मलोकमवाप्नोति पितृगोत्रसमन्वितः ॥५१॥
ग्रीष्मप्रवेशमणिकंददाति द्विजवेश्मनि ।
सकूपफलमाप्नोति स्वर्गलोके महीयते ॥५२॥
अम्बु पूर्णघटं यस्तु दद्याद् ब्राह्मण वेश्मनि ।
स सौभाग्यमवाप्नोति तड़ागसुकृतंफलम् ॥५३॥
स तोयां पथिके विप्रे यो दद्यात्करपत्रि(त्रि)काम् ।
फलं सकूपा चान्तस्य नूनमाप्नोति मानवः ॥५४॥
ॐ रंग(?)मांग सपूर्णं यो ददाति द्विजातये ।
स गत्वा कालसभुंक्ते भोगाभोगमनेकधा ॥५५॥
पञ्चेष्टकफलं पञ्चधान्याढ्वाः(?) पूर्णदो ब्रह्ममन्दिरम् ।
विश्वकर्म कृतंभुङ्क्ते प्रसीदन्तु सुवर्णकम् ॥५६॥

मृण्मयं गृहमम्पूर्णं स्तम्भ तोरण संयुतम ।
उत्तमांग समायुक्तं तथादालकराजितम ॥५७॥
सर्वधान्य समायुक्तं पुष्पवस्त्रसमावृतम ।
मुवर्ण राजतं ताम्रं कांस्य द्रव्यसमन्वितम ॥५८॥
लघुं गुरुं वा यो दद्याद् ब्राह्मणेषु प्रयत्नतः ।
ब्रह्मलोकमवाप्नोति दिव्यस्त्री चारुसेवित ॥५९॥
त्रिंशद्युगसहस्राणि भुक्त्वा भोगान्यनेकशः ।
म प्राप्नोति शुभं गेहं धनधान्यसमाकुलम ॥६०॥
पुत्र पौत्र समायुक्तं दिव्यस्त्री चारु शोभितम ।
छत्रादि छायया चैव उपानहौददाति यः ॥६१॥
दीपज्योतिरिवान्तश्च भवेन्मार्ज्जनकृन्नरः ।
चन्दनं तालवृन्तं च फलानि कुसुमानि च ॥६२॥
ताम्बूलमासनं शय्यां दत्वाऽत्यन्तं सुखी भवेत ।
प्रिया (यं) वा निर्म्मलं चेतोऽभिमानावमानितम् ॥६३॥
आत्त प्राणाकृतं यज्ञः कलां नार्हन्ति षोडशीम ।
समुद्धरन्तिये विप्रं सीदन्तं मत्परायणम ॥६४॥
स तरिष्यत्यचिरादापद्भ्यो नौरिवार्णवम ।
पूर्वोक्तविधिदानेभ्यो विद्या दानं विशिष्यते ॥६५॥
महादानं विदानं यद्विद्यादानं परम्परम् ।
नरकादुद्धरते विद्या तथा मोक्षप्रदायिका ॥६६॥
स्वर्गं मौक्षञ्च कीर्त्तिञ्च विद्यायालभतेनरः ।
कर्म्मणा मनसा वाचा सर्वेषांहितमाचरेत् ॥६७॥

यादृक्तादृगवस्थासु ब्राह्मणं न प्रकोपयेत् ।
यथा कुम्भो नदी तीरे यथाऽग्नि स्तृणाश्रये ॥६८॥
सन्तुष्टस्तारये दुर्गं दुष्टो हन्ति च तत्कुलम् ।
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ॥६९॥
शूलपाणिश्च भगवान्नभिवन्दन्ति भूमिदम् ।

इति श्रीब्रह्मप्रणीते याज्ञवल्क्ये धर्मशास्त्रे दानप्रकरणम नाम एकादशोध्यायः ।

---

# अथ द्वादशोऽध्यायः

दत्त्वा द्रव्यञ्च यः सम्यक्पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम ॥१॥
अदेयमथदेयं वा दत्तंवाऽदत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥२॥
तत्रहाष्टाव देयानि देयमेकविधं स्मृतम ।
दत्तं सप्तविधं विद्याददत्तं षोडशात्मकम् ॥३॥
अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपं पुत्र दारश्च सर्वस्वं चान्वये सति ॥४॥

आपत्स्वपिहि कष्टासु वर्त्तमानेनि देहिना ।
अदेयान्याहुराचार्यो यच्चान्येभ्यः प्रतिश्रुतम् ॥५॥
आपत्स्वपिहियद्दत्तं यद्दत्तमधिसाक्षिकम् ।
अधः प्रतिग्रहेक्रीते पूर्व्वं च बलवत्क्रिया ॥६॥
अन्येषु च विवादेषु उत्तरा बलवत्क्रिया ।
आपद्गतेषु दानेषु तद्दानं प्राक्त(श्रेष्ठ) मर्हति ॥७॥
न तत्पूर्वमवाप्नोति मनुः स्वायम्भुवोऽब्रवीत् ।
गोत्र साधारणी वृत्तिर्नदाने न च विक्रये ॥८॥
आपत्स्वपि हि देया सा तत्र गोत्रमकारणम् ।
समानो गोत्रयोर्ज्ञेयो सपिण्डो वापि गोत्रजः ॥९॥
सूते (तके) तेन स्पर्शः(?) गोत्रिणस्तु न उच्यते ।
आपत्स्वपि हि यद्दत्तं वन्यावावृत्तिमेवच ॥१०॥
द्रुहिणेन तदा प्रोक्तं नैव तैः प्राप्यते धनं ।
गये गांगेऽपि यद्दत्तं यद्दत्तं राहुदशने ॥११॥
दानमन्यच्च यद्दत्तं देवब्राह्मण सन्निधौ ।
पुनर्न समवाप्नोति आयुः स्वायंभुवः पुरा ॥१२॥
गये गांगेऽपि यद्दत्तं पितॄनुद्दिश्य(द्धृत्य)भक्षयम् (यत्कृतम्)।
आपत्स्वपि हि यद्दत्तमुद्धरेत्स स्वमन्वयम् ॥१३॥
आत्मदत्तेपु दानेषु योऽन्यस्मै दातुमिच्छति ।
यो ददाति दापयति व्रजेतां निरयन्तु तौ ॥१४॥
भुज्यमानं यदा ह्यन्नं न पुनर्भुज्यते यथा ।
जलपूर्णं तथा दानं न पुनर्लब्धुमर्हति ॥१५॥

अप्रवक्तारमाचार्यमनधीयान मृत्विजम ।
गृह कामं तु गोपालं घनकामन्तु नापितम ॥१६॥
पडेते गुरुषोजह्याद्भिन्नानांवमिवाम्भसि ।
उल्काहस्तोऽग्निदोऽग्रे यः शस्त्रपाणिस्तु घातकः ॥१७॥
अचौरैश्चौरतां याति माण्डव्यव्यवहारतः ।
उत्क्रम्य वृत्ति यं स्यास(?)यस्य घातोगवादिभिः ॥१८॥
गोपालस्तुवद(?) प्रोवैसेवेधन्दिनम्वारयेत् ।
समूले शस्यनाशे तु भक्षानीति समाप्नुयात् ॥१६॥
गोपालस्तत्रचै वान्यो अन्यः स्वामीयथाविधः ।
गौः प्रसूतादशाहात्तु समानक्षापिकुञ्जरः ॥२०॥
निवार्य तत्प्रयत्नेन तेषां स्वामी न दण्डभाक् ।
अदम्याहस्तिनो अश्वा प्राजा (?) हितेस्मृताः ॥२१॥
अदम्या गर्भिणी गौश्च सूतिकाचातिभारणी ।
प्रोक्तस्तु द्विगुणं दम्य (?) श्चतुर्गुणम् ॥२२॥
प्रत्यक्षवारक्याणातु दम्यश्चौर(?)प्रकार· ।
या नष्टा पल दोषेण (?) क्षेत्रमन्यंसमाश्रिता ॥२३॥
न तत्र गोपिनोदण्ड्याः पालकोदण्डमर्हति ।
राजग्रहगृहीतोवा वज्राशनिमृतोऽपिवा ॥२४॥
अथ सर्पेण वा दष्टो गर्त्तपंके निपातिताः ।
नात्र पालकदोपः स्यानैव दोषोऽस्ति गोपके ॥२५॥
सुधानवगृहस्थस्य इष्टयानियमेन तु ।
नव कर्म्माणि तस्यैव विकर्म्माणि नवैव तु ॥२६॥

प्रस्थवाभि(?)नवान्यानि प्रकाशानि नवस्तथा।
सकलानि नवान्यानि फलानि च पुनर्नवा ॥२७॥
अदेयानि नवान्यानि वस्त्रजातानि सर्वदा।
नवकानवनिर्द्दिष्टा ग्रहस्थो ह्यनतिकारका: ॥२८॥
सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम ॥२६॥
अभ्युत्थानानि वक्ष्यामि विशिष्टे गृहमागते।
न मिहागस्थ पूर्वालापः (?) प्रियान्वितः ॥३०॥
उपासनमनुव्रज्यातूकायान्नव सुधास्मृताः।
इष्टानां कथयिष्यामि भूमिरापस्तृणानि च ॥३१॥
पादशौचं तथाभ्यं (गं) वाश्रमं शयनं(भाषणं) तथा।
किञ्चिच्चान्नं यथाशक्ति इष्टान्येतानि कीर्तिता (नि) ॥३२॥
सन्ध्या स्नानं जपोहोमः स्वाध्यायो देवतार्च्चनम्।
वैश्वदेवेक्षणातिथ्यमृद्ध्‌तं चापि शक्तितः ॥३३॥
पितृदेवमनुष्याणां दीनानां च तपस्विनः।
मातृपितृगुरूणांच संविभागोऽथ कस्यचित् ॥३४॥
एतानि नवकर्माणि विकर्माणि निबोधतत्।
अनृतं परदारत्वं (च) असत्यस्य च भाषणम् ॥३५॥
अगम्यागमनं स्तेयं पेयापेयंच हिं सनम्।
अश्रौत्रकर्माचरणं मैत्रधर्म्मबहिष्कृतम् ॥३६॥
नवैतानि विकर्माणि तानि सर्वाणि वर्ज्जयेत्।
आयुर्वित्तंगृहच्छिद्रं मंत्रमैथुनमौषधम् ॥३७॥

तपो दा(मा)नापमानञ्च नव गोप्यानि सर्वदा ।
प्रायोऽप्यमृणशुद्धिः स्याद्दानधर्म्मं विशुद्ध्यति ॥३८॥
पात्रे धनं वार्धुषितं दत्वा शुद्धिमवाप्नुयात् ।
आदातुश्चैन्द्र शुद्धार्थमिष्टे वश्चिनरी(?)स्मृतः ॥३६॥
लोमभ्यः स्वाहेत्यवैहि लोमभ्यश्च तदैतनु ।
मन्त्रान्तं जुहुयाद्वापि मन्त्रवीर्यं यथाक्रमम ॥३६॥
संग्रामे वा हतोलक्षः भूयः शुद्धिमवाप्नुयात् ।
अरण्ये प्रान्तरे जप्त्वा त्रिः कृत्वो वेदसंहिताम् ॥४०॥
शुद्ध्यते चाम्यता शीस्यात्प्रतिस्त्रोत्पांतां (?) सरस्वती ।
वाल(बालं)वासा जटीवास्याद्ब्रह्महत्याव्रतं चरेत् ॥४१॥
पिण्याकंवा कणान्नं वा भक्षयेच्च समाहितः ।
गायत्र्याश्च जपेत्कोटि ब्रह्महत्यां व्यपोहति ॥४२॥
गायत्रीलक्षपष्ठ्या च मुच्यते गुरुतल्पगः ।
ब्रह्महा ब्राह्मणत्राणाद्गां दद्याच्च तथा युताम् ॥४३॥
घ पाणं (?) तु दशाब्दे कर्म्म कीर्त्तयेत् ।
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥४४॥
क्षेत्रदारापहारी च षडेतेह्याततायिनः ।
शस्त्रपाणिं समायान्तं यदि विप्रः षडंगवित् ॥४५॥
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महाभवेत् ।
अताडितमनक्लेशं न वियोगो धनस्य च ॥४६॥
म्रियते च परार्थेषु न दोषः परिविद्यते ।
वृषमेकं सहस्रं गाः दद्यात्क्षण(विप्र)वधे पुमान् ॥४७॥

ब्रह्महत्याव्रतंचापि वत्सरत्रितयं चरेत ।
वैश्यहाब्दं चरेदेतद्दद्यादेकशतंगवाम ॥४८॥
शूद्रहन्ता च षण्मासं व्रतं चरेद्दारुणम ।
गवां च दशकं दद्याच्छूद्रहन्ताविशेषतः ॥४६॥
अप्रदुष्टां प्रियां हत्वाशूद्रहत्याव्रतं चरेत ।
प्रमादेन हतं (तो) येन बालको मुनिसत्तमः ॥५०॥
गोमूत्रं यावकाहारं स्पृष्ट्वाकेदार(?)शुद्धयति ।
अविज्ञाततं(?) बालं संज्ञाभावात्कथञ्चन ॥५१॥
सज्ञाता ज्ञातवा पापी (?) ज्ञातार्तोर्थेन शुद्धति ।
प्रमादेऽवा प्रमादेवा वाले (?) निपातिते ॥५२॥
गङ्गा स्नानं च केदारं प्राजापत्यव्रतं चरेत ।
विश्वनाथं च केदारं हरिं भागीरथीं तथा ॥५३॥
स्नात्वा वै संस्पृशेल्लिङ्गं बालघाती विशुद्धयति ।
अयोनौ च वियोनौ च पशुयोनौ तथैवच ॥५४॥
समुत्सृजंते ( ति ) ये शुक्रं ब्रह्महाफलमश्नुते ।
भार्यासखी कुमारी च कुजीवी(चा)न्त्यजा सुता ॥५४॥
स्वगोत्री (त्रा) स्वसुताश्चैव गत्वा स गुरुतल्पगः ।
पितृष्वसां मातुलानीं स्नुषां मातृस्नुषामपि ॥५६॥
मातुःपत्नीं स्वभगिनीमाचार्यतनयां तथा ।
आचार्यपत्नीं स्वसखीं गत्वा स गुरुतल्पगः ॥५७॥
छित्वालिङ्गं वधस्तस्य मुखेदद्यादुल्मुकंतथा ।
द्वादशाङ्गुलमात्रंतु लौहशंकुस्तथैवच ॥५८॥

मुखे तस्य प्रदातव्य जीवः शुद्धो भवेत्ततः ।
दिन(?) शास्तमते राजादेवो राज्ञश्च शासकः ॥५६॥
भार्यागोधात्त्वनकुल मल्दृकश्च(मूपकं च) तथैवच ।
हत्वा त्र्यहं पिवेत्क्षीरं पादकृच्छ्रं समाचरेत ॥६०॥
उरगेत्यायमो दण्डः पचकत्रयमासकः ।
काले घृतघटो देयः उष्णगुंजाहकेशुकम ॥६१॥
एकवर्षे हते वत्से कृच्छ्रपादो विधीयते ।
अबुद्धि पूर्वं संस्पृष्ट्वा सूर्यरश्मिपु शुद्ध्यति ॥६२॥
मृतकञ्च श्वपाकं च उदक्या पतितं तथा ।
मद्यपम्लेच्छचाण्डलं स्पृष्ट्वा स्नानं सहाम्बरैः ॥६३॥

इति श्रीब्रह्मोक्ते याज्ञवल्क्येधर्मशास्त्रे शुद्धि प्रकरणम्नाम
द्वादशोऽध्यायः ।

---

# अथ त्रयोदशोऽध्यायः

## आशौचवर्णनम

शुद्ध्यते द्विचतुर्मासै स्वल्प गभ (?) विनिसृतौ ।
अहोभि· शुद्ध्यते शेपैः (?) अर्थाभवति नाशने ॥१॥
दासी दासे तथा कन्या सूयते म्रियते यदि ।
त्रिरात्रंसूतकंतस्य भापितं च प्रजापतिः ॥२॥
अप्रदत्ता भवेकाह प्रदत्तामुभयत्रयः ।
विवाहिता तु या कन्या सूतकं श्वसुरगृहे ॥३॥
शवसूति समुत्पन्ने सूतकं तु यदा भवेत् ।
शवेन शुद्ध्यते सूती न सूता शवशोधिनी ॥४॥
शवसूती समुत्पन्ने पुत्रजन्मयदा भवेत् ।
कुर्यात्तात्कालिकीशुद्धिरशुद्धि पुनरेवहि ॥५॥
आत्रिपक्षात्त्रिरात्रं स्यादाषण्मासाच्च पक्षिणी ।
अहः सम्वत्सरादर्वाक्पूर्णो दत्तोदकं शुचिः ॥६॥
पितरौ चेन्मृतौ स्यातां कथन्तु सूतकम्भवेत् ।
श्रुत्वातद्दिनमारभ्य दशाहं सूतकी भवेत् ॥७॥
आ (अ) दत्त जनात्सद्योआचूड़ान्नैषिकीस्मृतः ।
त्रिरात्रमव्रतादेशे दशरात्रमतःपरम् ॥८॥
द्वे सन्ध्ये सद्यमित्याहुर्द्वे दिने नैषिकीस्मृता ।
दिनद्वयं तु रात्र्यैका पक्षिणी तु विधीयते ॥ ९ ॥

दन्तजातानुखातोवाकृतचूडस्तु कर्म्मणि ।
त्रिरात्रं सूतकं तस्य भाषितं ब्रह्मणापुरा ॥१०॥
गर्भमध्ये विपत्तिःस्याद्दशाहं सूतकम्भवेत् ।
जीवेजाते ततो मृत्युः सद्यः शौचं विधीयते ॥११॥
द्विवर्षे निक्षिपेद्भूमौ त्रिवर्षे दाहमुच्यते ।
जीवंजातोरक्तिपाकर्म(?)समाचरेत् ॥१२॥
अन्तर्द्दशाहे स्याचेत्पुनर्मरणजन्मनि ।
तावत्स्यादशुचिर्विप्रो यावदस्य दिनांन्दश ॥१३॥
अन्ते वै दिवसेतस्मादधिकं तु दिनद्वयम् ।
रात्रिशेषेण च द्वाभ्यां प्रभाते त्रिभिरेव च ॥१४॥
दिवाकरोदयात्पूर्वं मृतकं मृतकम्भवेत् ।
एकविंशत्यहे यज्ञे विवाहे दशवासरे ॥१५॥
त्रिरात्रव्रतवन्ध्यं (न्धं) स्याच्छ्राद्धं तदहउच्यते ।
अभ्यंगादिविवाहेषुयज्ञेषु वा रणे कृते ॥१६॥
श्राद्धं द्धन्तं(?) समुत्पन्ने नाशौचं मृतसूतके ।
यज्ञदीक्षान्तविप्रस्य यज्ञस्थाना तु ऋत्विजः ॥१७॥
यतीनां ब्रह्मयज्ञविदुषो नाक्षु(शु)द्धिर्ब्रह्मचारिणः ।
सत्र याची (गी) च यो नित्यं गरुड़ध्वजपूजकः ॥१८॥
ब्रह्मचारी यतिश्चैव सर्वे ते त्यक्तसूतकाः ।
शुद्ध्यते प्रसवे धेनुर्दिवसे दशमे सदा ॥१९॥
अजाविका(श्च)श्चमहिषी शुद्ध्यन्तेविंशतिभिर्दिनैः ।
एकाहात्छुद्धते विप्रो योऽग्निर्वेदसमन्वितः ॥२०॥

अहा (ह्नः) त्केवलवेदस्तु अन्येपांदशभिर्दिनैः ।
दशाहं गोत्र शुद्धिःस्याद्धिशाहं पुत्रमात्रिकः ॥२१॥
त्रिंशाहं कन्यकामाता एकाहंचाप्यग्निवान ।
स्नानमन्ध्यात्रयं हीनः मप्ताहं शूद्रवद्द्विजः ॥२२॥
संध्यास्नानत्रयं तस्मात्सूतकेऽपिनसंत्यजेत ।
आचतुर्थात्तु मम्पूर्ण पञ्चाहः पञ्चशाखिनाम ॥२३॥
त्रिदिनं पट्शाखोनां सप्तशाखी दिनद्वयम ।
अष्टमीचाहोरात्रमेकाहन्नवमी तथा ॥२४॥
दशमी(म्यां) स्नानमात्रेण शाखयासूतकम्भवेत ।
शाखामेकादशीति(ती)र्तन्नवृत्तिर्न च सूतकम ॥२५॥
भोजना च(?)मनान्नं(मंत्र) परिग्रहपाकादिकम् ।
सङ्कर्पणं तथागायांत्यजेत्सूतिकिनासह ।
यो न पूजयते नित्यं विष्णुवैश्वानरातिथिम ॥२६॥
स्नानसन्ध्याविहीनाश्चा मदा ते सूतकान्विताः ।
प्रत्य(?) या मूर्खाः भि (भी) ष्टवर्णानिवाह्यका ॥२७॥
आचाररहिता ये च सदाते सूतकान्विताः ।
व्याधितस्यकदर्यस्य ऋणग्रस्तस्य चैव हि ॥२८॥
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ।
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥२९॥
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकम्भवेत् ।
ममरात्रं तु काषाये गोमूत्रे वा तथैव च ॥३०॥
त्रिफलात्र्यहसंयुक्ता गोचर्म्मं नैव दुःष्यति ।

प्र (प्र) क्षाम्रजम्बूचलपरधात्री
जटाधरोः(?) दुवकाकषायः ।
फलत्रं यस्मनि(?) मृत्तिकच-
राप्तन्तिमेकाहनिचर्मशुद्धिः ॥३१॥

घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ।
आम्रचर्म मयं पात्रं सप्तधौतेन शुद्ध्यति ॥३२॥

इति श्रीब्रह्मोक्ते याज्ञवल्क्येधम्मशास्त्रे सूतकशुद्धिप्रकरणम
नाम त्रयोदशोऽध्यायः ।

समाप्तश्चायं ब्रह्मोक्तयाज्ञवल्क्य धर्मशास्त्रम

---

॥ ॐ नमः शिवाय ॥

अथ

# * काश्यपस्मृतिः *

प्रायश्चित्तवर्णनम्

## अथ काश्यपीयान् गृहस्थधर्मान् व्याख्यास्यामः

आहिताग्निः स्वदारनिरतोऽध्यायश्च्यग्निहोत्री स्नातामृतुकालगामी देवपितृमनुष्यभूतब्रह्मयज्ञानुसेवमानः एकद्वित्रिचतुर्णां ब्राह्मणान् कुर्वाणो व्रतनियमहोमजाप्यपरो मातृपितृभक्तो दारापत्यपोषकः शेषानुभोजी उपवासी त्रैवर्णिकमेदकसूतकान्नपरिहरमाणोऽलांगलवृत्तिः। तत्र च भूम्यपोढने वृक्षच्छेदने नास्यधर्मोभवति। कूपसेतुतड़ागविप्रदेवतायतनभेदने प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य चतस्रआहुतीर्जुहुयात्।

इदं विष्णुरिति प्रथमा, मानस्तोक इति द्वितीया, स्ववासा इति तृतीया, दंष्ट्राभ्यामिति चतुर्थीरत्यस्रपोढयेत् तस्यैव देवतायै पूर्णाहुतिं जुहुयात्।

अथ गोबलीवर्दमहिषधूर्याविकहिंसावाप्तौ प्रायश्चित्तकामकारतामित्येके। दोग्धृदमनपर्यस्तपाषघट्टनघंटाभरणभूषणयोजन तैलमंडौषधभेषज्यत्रितयमाणे व्यापन्नानामकामावाप्त्यै (प्तौ) प्रायश्चित्तं-

ब्राह्मणेभ्यो निवेद्य सशिरक्षुरवपनं कृत्वा प्राजापत्यं कृच्छ्रमाचरेत। चीर्णांते गां दद्यात्। तिलधेनुं जलधेनुं चेतिकाश्यपः।

अथ मृगमहिषगंडुकवराहशरभऋक्षसिंहव्याघ्रमंडूकशूकर मत्स्यग्राहशिशुमारादीनां वधेष्वहोरात्रं। चीर्णांते गां दद्यात। मेष स त्रिरात्रं चीर्णान्ते हिरण्यं दद्यात्।

अथ काक-वलाक-हंस-सारस-कारण्डव-चक्रवाक-गृध्रश्येन-खंजरीट-टिट्टिभोलूक-शुक सारिकामयूरकाक-मद्र कलविक-कपोत कपिंजलादीनां वधेष्वहोरात्रं। चीर्णान्ते तिलान्दद्यात।

अथातः श्व-जम्बूक-विडाल-ऋषभरक्षुवासतोष्ट्र शूद्रवधे त्रिरात्रं च प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य प्राजापत्यं कृच्छ्रं चरेत। चीर्णान्ते सव्रीहीन् दद्यात।

कृकलास-सर्पनकुल-विडालगोजावधं त्रिरात्रं चीर्णान्ते लोहं दद्यात।

येषां व्यापादने प्रायश्चित्तमुक्तं तेषामेवोच्छिष्टभोजने प्राणायामशतंकृत्वा घृतं प्राश्य शुद्धः स्यात्।

जातमृतकसूतके ब्राह्मणो दशरात्रेण, क्षत्रियः पंचदशकेन, वैश्योविंशतिरात्रेण, शूद्रो मासेन शुद्ध्यति। तच्चेदंतःपुरवापतंति तत्समेन शुध्यावस्वहः। अब्राह्मणो न जायते, नाधीयीत, नाध्यापयेत्, न दद्यात् न प्रतिगृह्णीयात्। अशुचिर्द्विपदे चतुष्पदे। नादितदहः।

अथानशनमृतानामशनिहतानां वा अग्निप्रविष्टानां भृगुपतनसंग्रामदेशांतरमृतानां वा गर्भविनिःसृतानां त्रिरात्रेण शुद्धिरुच्यते।

अथ लशुन-पलांडुगृञ्जन-कुंभीकुक्कुटभक्षणं सुरासीधुमधुमद्यपाने अयाज्ययाजने पतितसावित्र्युपनयने तैः प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य यत्र ग्राममृगाणां पशूनां शब्दो न श्रूयते तस्मिन्प्रदेशे अग्निं प्रणिपरिसमुह्य पर्य्युपरिस्सर्य सशिखवपनं कृत्वा प्राक् प्रणीतेन विधिना पुनः संस्कारमर्हन्तीति ।

## अथ पंचमहापातकाः प्रवक्ष्यन्ते—

ब्राह्मणो नैव हन्तव्यः स्वस्वप्रक्षेपया द्विजैः ।
सुवर्णहरणं चैव कर्तव्यं न कथंचन ॥ १ ॥
गुरुपत्नीं न गच्छेत संस्पर्शश्च न तैश्चरेत् ।
महापातकसंज्ञया निर्दिष्टानां मनीषिभिः ॥ २ ॥
वत्सरत्रितयं कुर्यात् नरः कृच्छ्रं विशुद्धये ।
आत्मतुल्यसुवर्णं च दद्याद्वाविप्रतुष्टिकृत् ॥ ३ ॥

आत्रेयीगर्भं राजन्यवैश्यौ यज्ञगतौ हत्वा एतदेवकुर्यात् ।

## अथाकालि(क)व्याख्यास्यन्नाह—

अविनिरटकविद्य तवज्रनिर्घातप्रपतने भूमिचलने चैवाथ-निम्नोत्तरे चैव प्रायश्चित्तं ब्राह्मणेभ्योनिवेद्य समीमयीनां समिध मधुदधिघृताक्तानामष्टसाहस्रं जुहुयात् । शन्नोदेवीति काश्यपः ।

यत्र वेश्मनि उलूकोनिपतति । गृहं गोधाकपोतः प्रविशति । कृष्टः शकुनिः श्येनो वा रथभुज्ये(ध्वजे)वानिपतति । वल्मीक दीपिकागृहे पुरो ददति । शृगापुरोहणे कपाटघंटापुरोहणे चैव प्रायश्चित्तं

ब्राह्मणेभ्यो निवेद्य शमीमयीनां समिधदधिमधुघृताक्तानामष्ट-सहस्रं जुहुयात्, वास्तोस्पते इति काश्यपः ।

## अथ नैमित्तिकानि व्याख्यास्यामः—

क्षीरभाण्डभेदने मंथने भंजने पुरोहलल्लांगल गलचक्रतूपपतने रथविपर्य्यासने अश्व(अस्त्र)भंजने रजस्वला-शवस्पर्शने आदित्यास्तमने संदमंदंदुःस्वप्रदर्शने कर्णकेशपतिपुरोहणे पृ(यू)पस्थलस्पर्शन मृतकसूतक भोजने चैव ब्राह्मणेभ्यो निवेद्य सचैले कृत्वा स्वप्रतिरथं जपेदिति काश्यपः ।

## अथातः पात्राणां शौचविधि व्याख्यास्यामः—

पलेखने(?)न दारुपत्रे भस्मनांकांस्यं शीश्रुतास्त्रायसानां सिकताभिः शौचं। दंतशंखमणिराजतसौवर्णानां घर्षणं। मृण्मयानां पुनर्दहनं। धान्यवासम्सां वहूनां प्रोक्षणं काष्ठ रज्जुत्वक्चर्म चीर वेणु विदलपत्रपर्णानां चलवच्छौचम् ।

## अथ पूर्व पापकर्मणां चिह्नं व्याख्यास्यामः—

अगम्यागामी दुश्चर्मा तस्मात्प्रायश्चित्तं वेदात्मविशुद्धये । एतान् श्राद्धे परिवर्जयेत् ये चान्ये पंक्तिदूषकाः । क्षट्टघटा चा घटानटा प्रव्रजितरंगारतानिदेवलकनक्षत्रजीवकग्रामयाजकपर्य्याहित-पर्य्याधारकविविंदकपौनर्भवानाश्नंति । अदन्तादेके नाश्नंति । भार्याजितस्य नगरग्रामयाजकेभ्यः अविश्रस्तघाती व्यंगोनक्षत्र सूचकाः ।

वर्जनीयाद्विजाह्येते श्राद्धकर्मसु नित्यशः ।
दाराधीनाः क्रियाः सर्वा दाराः स्वर्गस्य साधनं ।। ४ ।।

इत्येतत्ब्रह्मणाप्रोक्तं काश्यपस्यानुशासनम् ।
सप्त पौनर्भवा कन्या वर्जनीया कुलाधमाः ।। ५ ।।

वाचा दत्ता मनोदत्ता कृतमंगलकौतुका ।
उदकस्पर्शका या च या च पाणिग्रहीतिका ।। ६ ।।

अग्न्युपायं गता या च पुनर्वाह्यस्य वादिका ।
इत्येताः कश्यपप्रोक्ता दहेयुः कुलमग्निवत् ।। ७ ।।

प्ररोहत्यग्निमादाय पादपानां कुलंमहत् ।
न हि पुनर्भवादीनां कुलं तस्य प्ररोहति ।। ८ ।।

पिता वा यदि वा भ्राता माता वा यदिवेतरः ।
नरश्च कृतपापानां गति यां याति तां शृणु ।। ९ ।।

मनिवर्ती यथा श्येनो गच्छत्येव यमालयं ।
एवं च नरकं याति कन्या अमृतकारका ।।१०।।

पुनः सम्पद्यते नारी गतमात्मानमात्मनि ।
अस्थिमात्रं त्वचं भित्वा शुक्रं तेजोबलं तथा ।।११।।

शुद्धिं न ये प्रयच्छंति दुहितरं लोभमोहिताः ।
तेषां तु नरके घोरे याति वै सप्तमं कुलम् ।।१२।।

गमनागमनायोगात् एवं शुक्रे विधीयते ।
एवं ज्ञात्वा युक्तकन्यां विंदेत स तत्कुलात् ।।१३।।

नस्याद्दैवे च पित्र्ये च दासीस्यादथ संचिता।
क्रयक्रीता तु सा दासी न सा पत्नी विधीयते ॥१४॥

अग्निष्टोमातिरात्राणां शतं शतगुणी कृतम्।
प्राप्नोति पुरुषोदत्वा होममंत्रै रलंकृताम् ॥१५॥

यस्तु सात्यम(सात्विक)धर्मेण पिता समर्पयेत् सुताम्।
स प्रेत्य लभते स्थानं यथा दक्ष! प्रजापतिः ॥१६॥

इति काश्यप प्रणीतं धर्मशास्त्रं समाप्तम्।

---

॥ श्रीगणेशाय नमः ॥

# * व्याघ्रपादस्मृतिः *

## तत्रादौ स्मृतिमहत्त्ववर्णनम्

ऋषिमेकान्तमासीनं व्याघ्रं मतिमतां वरम् ।
पप्रच्छुर्मुनयः सर्वे धर्मशास्त्रकथानकम् ॥ १ ॥
हुताग्निहोत्रं विधिवत् व्याघ्रं वेदविदां वरम् ।
सर्वशास्त्रविधि ज्ञात्वा ऋषिभिश्चनमस्कृतम् ॥ २ ॥
नमस्कृत्य च ते सर्वे इदं वचनमब्रुवन् ।
हितार्थं सर्वलोकानां भगवन् कथयस्व नः ॥ ३ ॥
वेदतत्त्वार्थतत्त्वज्ञा यन्मा पृच्छथ संशये ।
ते सर्वे संप्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ४ ॥
सर्वतीर्थान्युपस्पृश्य सर्वान्वेदान्प्रणम्य च ।
जप्त्वा तु सवसूक्तानि सवशास्त्रानुसारतः ॥ ५ ॥
सर्वपापहरं दिव्यं सर्वसंशयनाशनम् ।
चतुर्णामपि वर्णानां व्याघ्रः शास्त्रमकल्पयत् ॥ ६ ॥
ये च पापकृतोलोके ये चान्ये धर्मदूपकाः ।
सर्वपापैः प्रमुच्यन्ते श्रुत्वेदं शास्त्रमुत्तमम् ॥ ७ ॥
तस्मादिदं वेदविद्भिरध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सवृत्तेभ्यश्चसर्वतः ॥ ८ ॥

आचारं चैव सर्वेषां कार्याणां च विनिर्णयम् ।
यथाक्रमं यथायोग्य वक्तुमर्हस्यशेषतः ॥ ६ ॥
भगवन् सर्ववर्णानां यथावदनुपूर्वशः ।
अन्तरं च प्रभावानां धर्मान्नो वक्तुमर्हसि ॥१०॥
युगेयुगे च सामर्थ्यं विशेषं मुनिभाषितम् ।
व्याघ्रेण च यथाप्रोक्तं प्रायश्चित्तं प्रदीप्यते ॥११॥
युगेयुगे च ये धर्मास्तेषु तेषु च ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥१२॥
अकृते वैश्वदेवे तु ये भुंजन्ति द्विजातयः ।
वृथा ते तेन पाकेन काकयोनिं व्रजन्ति वै ॥१३॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
एतेषां तु हितार्थाय व्याघ्रः शास्त्रमकल्पयत् ॥१४॥
योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥१५॥
भानौभौमे त्रयोदश्यां नंदाभृगुमघासु च ।
पिंडदानं मृदास्नानं न कुर्यात्तिलतर्पणम् ॥१६॥
पक्षयोरुभयोर्वापि सप्तम्यां निशि सन्ध्ययोः ।
विद्यापुत्रकलत्रार्थी तिलान् सप्तसु वर्जयेत् ॥१७॥
विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्धं तदर्धं वा नेत्येके तिलतर्पणम् ॥१८॥
वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणम् ।
तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ॥१९॥

निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ।
तिथितीर्थ विशेषे तु कार्यं प्रेते च सर्वदा ॥२०॥
देवानृषीनपितृंश्चैव तर्पयेत्तु समाहितः ।
आचम्य मार्जनं कुर्यात्ततः प्राणान्समापयेत ॥२१॥
अग्रजन्मगृहे प्राप्तं श्राद्धं सतिलकं भवेत् ।
तिलकेनविनाकार्यं पितृकर्म निरर्थकम ॥२२॥
अग्रजन्मैः सदाकार्यं श्राद्धं सतिलकं तथा ।
श्रौतस्मार्तानि कर्माणि तिलकेन समाचरेत ॥२३॥
मृत्तिका गोशकृत् दर्भा उपवीतोत्तरीयकम ।
दद्याद्विप्रत्वमाप्रोति श्राद्धकाले विशेषतः ॥२४॥
गोपीचन्दनखण्डांश्च यो दद्याद्ब्राह्मणे यदि ।
अपि सर्षपमात्रेण ब्रह्महत्यां व्यपोहति ॥२५॥
मृदं यज्ञोपवीतं च श्राद्धे दद्यात्प्रयत्नतः ।
उच्छिष्टं शिवनिर्माल्यं कुर्याच्छ्राद्धे विशेषतः ॥२६॥
निषिद्धानि च वाक्यानि शूद्राणां योषितां तथा ।
शून्यमुखेन कर्तव्यं श्राद्धं कर्म यथाविधि ॥२७॥
श्राद्धं कुर्यात्तु शूद्रोऽपि शून्यं कुर्याल्ललाटकम ।
ललाटेतिलकं दृष्ट्वा निराशाः पितरोगताः ॥२८॥
शूद्रेणतिलकं कृत्वा श्राद्धकर्मसु यत्कृतम् ।
निष्फलं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥२९॥
यो यस्यविहितो धर्मस्तेनधर्मेण कारयेत् ।
विपरीतं चरेद्यस्तु किल्विषी स निगद्यते ॥३०॥

देवानभ्यर्च्यगंधेन त्रिपुंड्ं पापनाशनम् ।
तिलकेन विना श्राद्धं तत्सर्वं निष्फलं भवेत् ॥३१॥
"तिलकेन विना सन्ध्या तिलकेन विना जपः ।"
अंगवंगकलिङ्गाश्च तैलङ्गा द्राविड़ास्तथा ।
सदा शून्यमुखा ज्ञेया देशधर्मानुसारतः ॥३२॥
अन्ये च बह्वोधर्मा देशेदेशे व्यवस्थिताः ।
ते ते धर्माः सदाकार्या व्याघ्रस्य वचनं यथा ॥३३॥
श्राद्धकाले तथा दाने होमे देवार्चने तथा ।
विधिवत्तिलकं कुर्यान्मृदा वा चन्दनेन वा ॥३४॥
धारयेदूर्ध्वपुंड्रं तु स्नानान्ते च विशेषतः ।
तर्पणे होमकाले च सायं प्रातः समाहितः ॥३५॥
तिर्यक्पुंड्ं न कुर्वीत यावद्धोमं समाचरेत् ।
शिलागन्धानुलेपेन मार्जारोच्छिष्टभोजनात् ॥३६॥
स्वरूपदर्शनादप्सु भाग्यहीनोभवेन्नरः ।
शुभ्रं वृतं विप्रैस्तु क्षयार्थे कुरुवीक्षणम् ॥३७॥
ललाटे यैः कृतं नित्यं मृदाचन्दनभस्मना ।
धारयेदूर्ध्वपुंड्ं तु स्नानान्ते च विशेषतः ॥३८॥
गृहानागत्य होमांते भस्मना च त्रिपुण्ड्रकम् ।
स्नात्वापुण्ड्ं मृदा कुयात् होमं कृत्वा तु भस्मना ॥३९॥
"देवानभ्यर्च्य गंधेन त्रिपुंड्ं पापनाशनम् ॥"
आशौचेपि न चाभ्यङ्गे विवाहे चन्दनादिना ।
ऊर्ध्वपुंड्ं सदाकार्यं श्रौते स्मार्ते च कर्मणि ॥४०॥

सूतके समनुप्राप्ते वर्जनीयः प्रयत्नतः ।
मृत्तिका चन्दनं भस्म तथा तोयं चतुर्थकम् ॥४१॥
एभिर्द्रव्यैर्यथाकालं तिलकं तु समाचरेत ।
देवानां च तथा शैवे नाभ्यंगे न च शूद्रतः ॥४२॥
अभ्यङ्गाद्धरते लक्ष्मीं शूद्रस्य नरकं ध्रुवम् ।
तर्जनीं रौप्यसंयुक्तां ब्रह्मग्रन्थियुतां शिखाम् ॥४३॥
भोजने मैथुने मूत्रे कृत्वा कृच्छ्रं समाचरेत ।
तर्जन्यां च धृतं रौप्यं ब्रह्मग्रन्थौ च मूर्द्धनि ॥४४॥
भोजने मैथुने मूत्रे कुर्वन्कृच्छ्रेण शुध्यति ।
शिखाबंधं विमुच्याथ हस्तप्रक्षालनं स्मृतम् ॥४५॥
न करोति स मूढात्मा तदन्नं केशदूषितम् ।
प्राङ्मुखोदङ्मुखो वापि कुर्यादाचमनं तदा ॥४६॥
पश्चिमे पुनराचम्य दक्षिणे स्नानमाचरेत् ।
गोकर्णकृतहस्तेन माषमात्रं जलं पिबेत् ॥४७॥
तन्न्यूनमधिकं चैव तज्जलं रुधिरं भवेत ।
अनुष्णाभिरफेनाभिरद्भिर्हृद्याभिरंततः ॥
ब्राह्मणो ब्रह्मतीर्थेन दृष्टिपूताभिराचमेत ॥४८॥
हृत्कण्ठतालुकाभिश्च यथासंख्यं द्विजातयः ।
स्त्रीशूद्रवास्यसंस्पर्शमात्रेणापि विशुद्ध्यति ॥४९॥
अंगुष्ठाग्रे तु संमृज्य मध्यमा मध्यपर्वसु ।
योजीताग्रेण हस्तेन स वै गोकर्णिकः स्मृतः ॥५०॥

मुक्ताङ्गुष्ठकनिष्ठाभ्यां त्रिः पिबेत ब्रह्मतीर्थतः ।
स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे ॥५१॥
आचान्तः पुनराचामेद् वासोऽपिपरिधाय च ।
ऊर्ध्वजानुस्तु नाचामेदेकपाण्याहृतेन च ॥५२॥
तथैव ब्रह्महस्तेन नापरिज्ञातहस्ततः ।
आपः स्पर्शनकाले तु तर्जन्यां तु स्पृशेज्जलम् ॥
तज्जलं च पिबेद्विप्रः सोमपानसमं भवेत ॥५३॥
आपः करनखैः स्पृष्ट्वा तेनाचामति यो द्विजः ।
सुरां पिबति वै व्यक्तं व्याघ्रस्य वचनं यथा ॥५४॥
पीतोच्छिष्टं पादशौचं शौचशेषं तु यज्जलम् ।
तज्जलं तु सुरातुल्यं पर्यग्निकरणं विना ॥५५॥
कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोपि न कदाचन शुध्यति ॥५६॥
कटिमंडलमावृत्य नाभ्यन्तर्दक्षिणोत्तरे ।
कच्छं द्वादशपिंजूलं पुरापश्चात्प्रयुंज्यते ॥५७॥
एकराशिगतौ स्यातां यदा गुरुनिशाकरौ ।
सा पौर्णमासी महती सर्वपापहरा स्मृता ॥५८॥
आब्दिके समनुप्राप्ते आशौचं यदि जायते ।
आशौचे तु व्यतिक्रान्ते तत्र श्राद्धं प्रदीयते ॥५९॥
अनपत्या च या नारी भर्तृपिंडेन योजयेत् ।
यदि जीवति भर्तारं श्वश्र्वयादिभिर्योजयेत् ॥६०॥

पितामहाश्चजीवंति तत्पिता म्रियते यदि ।
देहमात्रत्रयः पिण्डान प्रपितामहपूर्वकम् ॥६१॥
जीवन् पिनामहोयस्य पिता यत्र न विद्यते ।
द्वौपिंडावेकनामानौ एकस्मिन्प्रपितामहे ॥६२॥
चत्वारि अर्घ्यपात्राणि गंधमाल्यैस्ततोऽर्चयेत् ।
ये समानि ऋचामेतत्पात्रस्थापो नयेत्त्रिषु ॥६३॥
पक्षश्राद्धं तु निवृत्य तर्पणं तु दिनेदिने ।
सकृन्महालये श्राद्धे परेऽहनि तिलोदकम् ॥६४॥
दर्शश्राद्धं गयाश्राद्धे श्राद्धे चापरपक्षगे ।
ताम्बूल चर्वणं दोषो व्याघ्रस्य वचनं यथा ॥६५॥
वृद्धावादौ क्षयेचान्ते दर्शे मध्ये तथैव च ।
महालये च पिण्डान्ते वैश्वदेवं चतुर्विधम् ॥६६॥
श्राद्धं कृत्वा तु विधिवत् वैश्वदेवादिकं ततः ।
ब्रह्मयज्ञं ततः कुर्यात्तर्पणं तु तिलैर्विना ॥६७॥
स्नात्वातीरं समागत्य उपविश्य कुशासने ।
संतर्पयेत पितॄन्सर्वान् स्नात्वा वस्त्रं च धारयेत् ॥६८॥
सहोदर समुत्पन्नां कुर्याद्देवपितॄंस्तथा ।
एकमेकं तु गोत्राणां कुर्याद् ब्राह्मणजो भवेत् ॥६९॥
सहगोत्रजा ब्राह्मणानां न कुर्यात्सवतो द्विजः ।
याज्ञवल्क्यं तु कार्याणि वर्जनीया प्रयत्नतः ॥७०॥
वेदज्ञातो द्विजातीनां कुर्याद्ब्राह्मणतो भवेत् ।
एकगोत्रं द्वितीयं तु तृतीयाग्निस्तथैव च ॥७१॥

एकगोत्र ब्राह्मणानां पृथक् गोत्रस्तथैव च।
कुर्याच्छ्राद्धादि कार्याणि महालयां तु सिद्धये ॥७२॥
वानप्रस्थयतीनां तु ब्रह्मचारिस्तथैव च।
कुर्याच्छ्राद्धादिकं तस्य व्याघ्रस्य वचनं यथा ॥७३॥
पूर्वेद्युः क्षणितोविप्रो ब्राह्मणः कर्तृकं यथा।
अनुज्ञायतां कार्याणि कृपां कर्तुं यथाविधि ॥७४॥
पूर्वेद्युः क्षणितं विप्रं यजुः शास्त्रं तथैव च।
गोत्रं नाम समुच्चार्य व्याघ्रस्य वचनं यथा ॥७५॥
गायत्र्याः स्थानमास्यं च मंडलं म विधीयते।
गायत्र्या गोमयं तस्य मंडलं कारयेद्ध्रुवम् ॥७६॥
गायत्र्या वत्सप्रस्थानं मंडलं कुरुते यदि।
मंडलं तोयमादाय कुशातिलैस्तथैव च ॥७७॥
मंडलं बाहुमात्रं च कुर्याद्वै श्राद्धकर्मणि।
देवकार्येषु सर्वत्रारत्निमात्रं प्रशस्यते ॥७८॥
गृहस्योत्तरतोभागे कुर्याद् गोमयमंडलम्।
उत्तरे मंडले देवा दक्षिणे पितरस्तथा ॥७९॥
हस्तस्यव्यवधानेन मंडले द्वे च कारयेत्।

पूर्वप्लवं वृद्धिकरं नराणां,
तथोत्तरं चैव धनप्रदं च॥
धनक्षयं पश्चिमतप्लवेन,
आयुःक्षयं दक्षिणतप्लवेन ॥८०॥

पादप्रक्षालनार्थाय द्वौविप्रौ प्राङ्मुखस्थितौ ।
उदङ्मुखास्त्रयोविप्रा स्वयं वै दक्षिणामुखः ॥८१॥
पादप्रभृति मूर्द्धपर्यन्तं देवानां पुष्पपूजनम् ।
शिरःप्रभृतिपादान्तं पितृणां पुष्पपूजनम् ॥८२॥
श्राद्धकाले यदा पत्नीं वामे वारिप्रदापयेत् ।
पितरस्तस्य गृह्णीयात् यावद्वर्षशतं समाः ॥८३॥
कन्यादाने विवाहे च प्रतिष्ठायज्ञकर्मणि ।
सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्मृता ॥८४॥
दक्षिणे वसति पत्नी हवने देवतार्चने ।
शुश्रूषा रतिकाले च वामभागे प्रशस्यते ॥८५॥
जातकर्मादि कर्म्मणां कर्मकर्तुश्चदक्षिणे ।
तिष्ठेद्वरस्य वामे च विप्राशीर्वचनं यथा ॥८६॥
त्रिषु स्थानेषु सा पत्नी वामभागे प्रशस्यते ।
पादशौचे पितृणां च रथारोहे ऋतौ तथा ॥८७॥
श्राद्धे पत्नी च वामांगे पादप्रक्षालने तथा ।
नान्दीश्राद्धे च सोमे च मधुपर्के च दक्षिणे ॥८८॥
आमन्त्रितस्तु यो विप्रो भुक्त्वा अन्यत्रगच्छति ।
नरकाणां शतं भुक्त्वा चांडालेष्वपि जायते ॥८९॥
एकवस्त्रा तु या नारी मुक्तकेशा तथैव च ।
ललाटे कुंकुमं दृष्ट्वा निराशाः पितरो गताः ॥९०॥
मुक्तकेशा तु या नारी रक्तवस्त्रं कथंचन ।
हसते वदते चैव निराशाः पितरो गताः ॥९१॥

श्राद्धे यज्ञे जपे होमे वैश्वदेवे शिवार्चने ।
त्रिपुंड्रं धारयेद्यस्तु निराशाः पितरोगताः ॥९२॥
अगम्यागमनोपेता अनृतामत्यरताश्च ये ।
नानाविधेषु पापेषु रता नित्यं मदोद्धताः ॥९३॥
आसीमांतन पूर्वेण ताम्बूलं भक्षये द्विजः ।
त्रयस्ते नरकं यान्ति दाताभोक्ता पिता तथा ॥९४॥
शिलातले पटे पात्रे गोमकूपे तथा भुवि ।
ते तिलाः कृमिणा तुल्याः तत्तोयं रूधिरं भवेत ॥९५॥
अंगुष्ठमूलमध्ये तु वामभागेऽग्रभागिनाम् ।
नत्तिलं मेरूणातुल्यं तत्तोयं सागरोपमम् ॥९६॥
आपः कृष्णतिलैर्दद्यान्मात्रापित्रोः क्षयेऽहनि ।
आदौ च यजुषां दद्यात पश्चाद्बह्वृच सामगाः ॥९७॥
मकारे सूतकं विद्याद्धकारे रिपुवर्द्धनं ।
हकारे ब्रह्महत्यायां आहुतिः कुत्र दीयते ॥९८॥
वर्णत्रयं समुच्चार्य दीर्घे दद्याद्द्विजोत्तमः ।
आयुरारोग्यमैश्वर्यं लभते काममीप्सितम ॥९९॥
स्नानं तौ वरूणः शक्तिर्जुह्वतोऽग्निधनक्षयम् ।
जपतः क्षीणमायुष्यं तस्मान्मौनं त्रिपु स्मृतम ॥१००॥
श्राद्धे यज्ञे विवाहे च दीक्षायामागते गुरौ ।
तिष्ठत क्षालनं कुर्यान्निराशाः पितरोगताः ॥१०१॥
तिष्ठन्प्रक्षालयेत्पादौ देवे पित्र्ये च कर्मणि ।
देवा हविर्न गृह्णन्ति कव्यं च पितरस्तथा ॥१०२॥

मंडलस्योत्तरे भागे कुर्यादाचमनं बुधः ।
उत्तरे जाह्नवीतोयं अन्यत्र रुधिरं भवेत ॥१०३॥
मण्डलान्पूर्वतो देवा पितृविप्रंस्तथोत्तरे ।
कर्ता कुर्वीत ईशाने श्राद्ध आचमनं स्मृतम ॥१०४॥
हस्तप्रक्षालनादूर्ध्वं पाणिभ्यां पात्रधारणम ।
संकल्पे दक्षिणं त्याज्यं भुक्त्वा वामं विमुत्सृजेत ॥१०५॥
ब्राह्मणानामनं वस्त्रं तिलमिश्रं तथैव च ।
पितृश्चानि(?)देवादि काष्टामनानि वर्जयेत ॥१०६॥
सव्यं तु देवमस्थानमर्चयेत्पश्चिमामुखम ।
अपसव्यं पितृस्थानमर्चयेद्दक्षिणस्तथा ॥१०७॥
श्राद्धरम्भेऽवसाने च पादशौचे तथार्चने ।
विकरे पिण्डदाने च पट्सु आचमनं स्मृतम ॥१०८॥
स्वागते स्वस्तिवचने गोत्रशेषे प्रदक्षिणे ।
अर्घ्ये च दक्षिणादाने पट्सु सव्यं विधीयते ॥१०९॥
प्रातःकाले शुचिः स्नात्वा पाकनिष्पतितो यदा ।
गृह्णन्तु पितृकार्याणि मुनीनां सर्वतोद्विजः ॥११०॥
अपुत्रा म्रियते भर्तुः गोत्रजानाननाशयत ।
स्त्रीणां च कुरुते श्राद्धं पुत्राभावेति सर्वथा ॥१११॥
स्त्रीणां कुरुते श्राद्धं गोत्रमुच्चारणं कथम ।
अमुकगोत्राय भर्तुश्च पिताप्रपितामहाय च ॥११२॥
उत्तरीयाभावे च वस्त्रं सव्यापसव्यकर्मणि ।
गोत्रनामस्वधाकारैः भर्तुः श्राद्धं तु कारयेत् ॥११३॥

अपुत्राम्रियते भार्या भर्ता कुर्याद्यथाविधि ।
गोत्रनामसमुच्चार्य सरस्वतीनाम चोत्तरे ॥११४॥
प्रथमं सरस्वतीनाम्नी द्वितीयं गौतमी तथा ।
तृतीयं यमुनानाम्नी कुर्याच्छ्राद्धं सभर्तृकः ॥११५॥
पितामहा च वर्तते पिता च म्रियते यदि ।
द्वौ पिण्डौ चैकनामानौ एकं तु प्रपितामहे ॥११६॥
अपुत्रस्यपितृव्यस्य ज्येष्ठस्य भ्रातुरेव च ।
कुर्यात्त्रिपुरुषं श्राद्धं एकोद्दिष्टं कदाचन ॥११७॥
आसनावाहनौ चैव द्विजांगुष्ठस्तथैव च ।
अर्घ्यं गन्धानुसंकल्पं देवपूर्वाणि षट्सु च ॥११८॥
विप्रप्रदक्षिणा याचूत्वा जपासि स्वस्तिवाचनम् ।
श्राद्धं च दक्षिणादानं षट्सव्यं च प्रचक्षते ॥११९॥
अपसव्येत्यनुज्ञातः सव्येनैव तु होमयेत् ।
अपसव्यं पुनः कृत्वा पितृपात्रेषु दीयते ॥१२०॥
कुशेरूत्तानपाणिस्तु आहुती द्वे घृताप्लुते ।
शेषं देवाय दातव्यं पितृभ्यस्तदनंतरम् ॥१२१॥
सव्येपृच्छत्यनुज्ञातो स्वल्पं च जुहुते हविः ।
साग्निरग्निमुखेदद्यान्निरग्निर्द्विजपाणये ॥१२२॥
साग्निकैरग्निपूर्वं तु पितृपूर्वमनग्निकैः ।
अग्नौकरणशेषं तु विश्वेदेवाय हूयते ॥१२३॥
निरग्निरग्नौकरणं कुर्यान्मुख्ये च पैतृके ।
तदन्नं देवायदातव्यं पितॄणां तदनन्तरं ॥१२४॥

अग्नौकरण शेषं तु पितृपात्रेषु दीयते ।
प्रतिपाद्यपितॄणां तु नो दद्याद्वैश्वदेविके ॥१२५॥
यत्तुपाणितले दत्तं पूर्वमश्र्यं(?)तु सिद्धयः ।
पितरस्तन्न गृह्णंति शेपान्नं न लभन्ति च ॥१२६॥
अर्घ्यपात्रस्थिता दर्भाः ब्राह्मणो ज्ञानदुर्बलः ।
स्वयं गृह्णन् क्षिपेद्यस्तु स भवेत्पितृघातकः ॥१२७॥
पाणौ होमस्य ये दर्भा पात्राधस्तु विनिक्षिपेत् ।
पुनरग्नौ च तानहुत्वा दहंति पितरस्तथा ॥१२८॥
न जीवत्पितृकः कुर्याच्छ्राद्धं मातृक्षयादृते ।
क्रान्ते च नवमी श्राद्धं मृते चैव विलुप्यते ॥१२९॥
न छाया भार्गवे दीने मातापित्रो.क्षयेऽहनि ।
तिलैस्तु तर्पणं कुर्यात् पितृहासोऽपि जायते ॥१३०॥
कन्यायां तु गते भानौ पितरो यान्ति स्वं गृहम् ।
पितृलोकं परित्यज्य यावद्वृश्चिकदर्शनात् ॥१३१॥
चन्दनागरुकर्पूरं कुंकुमं च प्रदापयेत् ।
अश्वमेधफलं तस्य पितॄणां च विलेपनम् ॥१३२॥
रविशुक्रत्रयोदश्यां सप्तम्यां निशिसंध्ययोः ।
तिलतर्पणसंयोगात्तज्जलं रुधिरं भवेत् ॥१३३॥
क्षयाहे पातसंक्रान्ते ग्रहणे शशिभास्करे ।
न वारतिथिदोपो न कुर्याच्चतिलतर्पणं ॥१३४॥
घृतं गुग्गुलु धूपं च पितॄणां यः प्रयच्छति ।
अश्वमेध फलं तस्य धूपदानस्तथैव च ॥१३५॥

आवाहनाग्नौकरणं विकरं पात्रपूरणम् ।
तृप्तिप्रश्नं न कुर्वीत आमे होमे कथंचन ॥१३६॥
मातापित्रोरेकदिवसे पृष्ट्वा पाकं प्रयत्नतः ।
प्रथमं पितृकार्याणि द्वितीयं मातरस्तथा ॥१३७॥
अग्नौकरणमेकं स्यात् पिंडदानस्तथैव च ।
त्रयं त्रयं च पिंडानां मातापित्रोः क्षयेऽहनि ॥१३८॥
यद्येककर्तृकं श्राद्धमनेकोऽपि विधीयते ।
वैश्वदेवे न तंत्रंस्यात् पृथक् पाको न विद्यते ॥१३९॥
असंकल्पितं च पश्चान्नं पाणिना स्पर्शते यदि ।
त्रयस्ते नरकं यान्ति दाता भोक्ता च पूर्वजाः ॥१४०॥
मृण्मयेषु पात्रेषु मृत्तिका चन्दनेन वा ।
घृतेनैव कृतं धूपं निराशाः पितरोगताः ॥१४१॥
भोजनोत्तिष्ठ(च्छिष्ट)पात्रे च स्वस्ति कुर्वन्ति ये द्विजाः ।
भ्रमन्ति पितरस्तेषां षण्मासोच्छिष्टभोजिनः ॥१४२॥
अकृत्वा भस्ममर्यादां यः कुर्यात्पाणिशोधनम् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥१४३॥
माषाः सर्वत्रयोज्याः स्युः पितृपिंडेषु वर्जयेत् ।
ब्राह्मणानां यथा मद्यं तथामाषान्नपिंडयोः ॥१४४॥
पूर्वमापोशनं ग्राह्यं पिंडदानं तथैव च ।
कुर्याद्वैमातृकं श्राद्धं नरक्यां सहितो सुतः ॥१४५॥
विकरं निक्षिपेद्भूमौ ब्राह्मणानामनुज्ञया ।
कुर्यात्पिडं तत्सुतानां नरक्यां ब्राह्मणो भवेत् ॥१४६॥

हस्तप्रक्षालनादूर्ध्वं द्वौ हस्तौ पात्रधारिणौ।
आपोशाने दक्षिणंत्याज्यं भोजनान्ते वाममुत्सृजेत ॥१४७॥
अपोशनिक्षिपेत्पाणौ पिंडदानं तथैव च।
यजुः शाखा तु देवानां पितृणां प्रीतिवर्द्धनम ॥१४८॥
यजुः शाखा पूर्वतो पिण्डं ऋक्शाखा तु दक्षिणम।
सामवेदस्तु भोज्यं च श्राद्धं तु कुरुते यदा ॥१४९॥
वस्त्रयुग्मं ततोदद्यादेकैकं वा पृथक् पृथक्।
आशाया दीयते चाल्पं किंचिच्छ्रत्तयानुसारतः ॥१५०॥
पूर्ववद् विकरेद् भूमौ पिंडदानं तथैव च।
कुर्याच्छ्राद्धविधिं तस्य निराशाः पितरोगताः ॥१५१॥
मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया।
मोहाद्वा कुरुते यस्तु स विप्रो नरकं व्रजेत ॥१५२॥
उष्णोदकं वृथास्नानं वृथा जाप्यमवैदिकम।
मूर्खस्य तु वृथादानं वृथाश्राद्धमदक्षिणम ॥१५३॥
दशकृत्वः पिवेदापः गायत्र्याः श्राद्धभुक्द्विजः।
ततः संध्यामुपासीत तज्जपाज्जुहुयादपि ॥१५४॥
दन्तधावन ताम्बूलं स्नेहस्नानमभोजनम।
रसौषध परान्नं च श्राद्धकृत्सप्त वर्जयेत ॥१५५॥
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम।
दानं प्रतिग्रहो होमः श्राद्धभुगष्टवर्जयेत् ॥१५६॥
पितृक्षये अमावास्यां मंथानं कुरुते यदि।
घृतं गोमांसवत्प्रोक्तं तक्रं चापि सुरासमम् ॥१५७॥

दधितक्रकणाभिक्षा लवणं व्यञ्जनादयः ।
सुविरोग्निर्नदातव्यं यावत्पिण्डान्ननिर्वपेत् ॥१५८॥
भागिनेयं भगिनीभर्ता दौहित्रं दुहितापतिः ।
प्रत्यासनमतिक्रान्तं मुनिदत्तं विनाभवेत् ॥१५९॥
भागिनेयं दशविप्रेषु दौहित्रः शतमुच्यते ।
भगिनीभर्ता सहस्रेषु अनन्तं दुहितापतिः ॥१६०॥
वेदपूर्णं मुखं विप्रं सभुक्तमपि भोजयेत् ।
न तु मूर्खं निराहारं षड्रात्रश्चोपवासिनम् ॥१६१॥
स्वगोत्रे प्रवरेभिन्ने विधुरे ग्राम याचके ।
पितुः श्राद्धं न कुर्वीत पतिभ्रात्रा सहोदरा ॥१६२॥
अपुत्रको पशुश्चैव व्याधितोल्पायुरेव च ।
वृत्तिहीनश्च मूर्खश्च जन्मे जन्मे भविष्यति ॥१६३॥
काले कर्म प्रकुर्वीत काले तिष्ठन्ति देवताः ।
वरमेकाहुतिः काले नाकाले कोटिसंख्यया ॥१६४॥
अकाले कुरुते कम काले प्राप्ते न कारयेत् ।
कालातीतं तु यत्कर्म अकृतं तं विनिर्दिशेत् ॥१६५॥
अपेक्षितं यो न दद्यात् श्राद्धार्थमुपकल्पितम् ।
कृपणो मन्दबुद्धिस्तु न तच्छ्राद्धफलं लभेत् ॥१६६॥
भोजनं कदलीपत्रे वामभागाग्रमाहितः ।
अग्रं चेद्दक्षिणेभागे भुक्त्वा चान्द्रायणं चरेत् ॥१६७॥
नित्यश्राद्धेषु तीर्थेषु भोजनं बलिपूर्वकम् ।
अन्यश्राद्धेषु सर्वेषु न बलिं नैव चाहुतिं ॥१६८॥

आत्ममातामही पत्नी दुहिता च स्वसा तथा ।
पितृष्वसा मातृभगिनीत्येते व मम गोत्रजा. ॥१६९॥
मृत्तिका गोशकृद्दर्भानुपवीतं तथोत्तमम् ।
दत्वा गुणाढ्यविप्राय कुलजाय तथोत्तरे ॥१७०॥
अग्नौकरं तु देवस्य पितृव्या द्विजतर्पणं ।
मानसात्पिण्डदानाश्च नरः क्रियाद्विकरेण तु ॥१७१॥
एक पंक्त्युपविष्टाना ब्राह्मणानां श्राद्धकर्मणि ।
भक्ष्यं भोज्य समं देयं दक्षिणात्वनुसारतः ॥१७२॥
पिडदानं च यजुषा वह्वृचा द्विजतर्पणम् ।
श्राद्धशब्दाभिधेयं स्यादुभयं सामगायिनाम् ॥१७३॥
स्वशाखोक्तं परित्यज्य परशाखोक्तं समाचरेत् ।
अप्रामाण्यमृषि कृत्वा-अंधं तमसि मज्जति ॥१७४॥
अनग्निर्ब्रह्मचारी च स्त्री च नैव च नैव च ।
चालयेत्पिडपात्राणि स्वयं शिष्योऽथवा सुतः ॥१७५॥
लेपभागश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिडदः सप्तमस्तेषां सापिण्ड्यं सप्तपूरुषम् ॥१७६॥
यच्च पाणितले दत्तं (?) पूर्वमबुद्धयः ।
निराशा पितरो यान्ति शेषमन्नं लभन्ति ते ॥१७७॥
केतकी धूतकी चैव बर्बरी करवीरकैः ।
जातिदर्शनमात्रेण निराशाः पितरो गताः ॥१७८॥
कूष्मांडं महिषीक्षीरं आढक्या राजसर्षपाः ।
मसूराश्चणकाश्चैव षडेते श्राद्धघातकाः ॥१७९॥

आचान्तोऽप्यशुचिस्तावन यावत्पात्रमनुद्धृतम ।
उद्धृतोऽप्यशुचिस्तावन यावन्नोन्मृज्यते मही ॥१८०॥
गृहेऽपि शिशुदेवानां यतीनां ब्रह्मचारिणाम ।
श्राद्धपाको न दातव्यो यावनपिंडान्ननिर्वयेत ॥१८१॥
शिखामात्रं तथापिंडान्पूर्वे पश्चिमतोनयेत ।
अनेनविधिना कार्यं पितॄणां दत्तमक्षयम ॥१८२॥
वह्वृचं भोजयेच्छ्राद्धे पितृस्थानेषु सर्वदा ।
श्रोत्रियं च गुणाढ्यं च पितृरूगातकुलं तथा ॥१८३॥
वह्वृच भोजयेच्छ्राद्धे याजुषैः सामगैस्तथा ।
अक्षयं तद्भवेच्छ्राद्धं व्याघ्रस्य वचनं यथा ॥१८४॥
वह्वृचं तु परित्यज्य श्राद्धे कर्मणि यो द्विजः ।
निष्फलं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥१८५॥
वह्वृचेन विनाश्राद्धं ये कुर्वन्त्यन्यशाखिनः ।
अज्ञानात्कुरुते श्राद्धं पितॄणां नोपतिष्ठति ॥१८६॥
द्वौ दैवाथर्वणौ विप्रौ ऋग्यजुः सामवेदिनः ।
क्रमाच्छ्राद्धे नियुंक्ते च व्याघ्रस्य वचनं यथा ॥१८७॥
अथवा द्वौ विश्वेदेवौ वह्वृचं पितरस्तथा ।
यजुषं पितामहं ज्ञेयं सामंस्यात् प्रपितामहम् ॥१८८॥
अनेन विधिना श्राद्धं कृतमक्षय्यतां व्रजेत ।
उक्तलक्षणकं न स्यात स्वशाखं भोजयेत्ततः ॥१८९॥
वह्वृचं यजुषं चैव सामगं च गुणान्वितम् ।
अहंकारेण संत्यक्त्वा श्राद्धकृन्निष्फलं भवेत् ॥१९०॥

उच्छिष्टशवचाण्डालनग्नं च खरकाकयोः ।
चन्द्रसूर्यग्रहे चैव स्नानं कुर्यादमंत्रकम ॥१६१॥
अपत्नीके प्रवासे च यस्य भार्या रजस्वला ।
आमश्राद्धं प्रकुर्वीत वर्जयित्वाक्षयेऽहनि ॥१६२॥
वृद्धावादौ क्षयेचान्ते मध्येजुह्वति पर्वणि ।
पितृपक्षे तथाचान्ते वैश्वदेवो विधीयते ॥१६३॥
वोदने परमान्ने वा द्रोणमासाद्य मूढ़धीः ।
तत्पात्रं पूरयेद्घृतं तद्घृतं रुधिरं भवेत ॥१६४॥
दशमीद्वादशीश्राद्धे अमापूर्णा तु संक्रमे ।
अस्ते नक्ते तु यो भुंक्ते भुक्त्वा चान्द्रायणं चरेत् ॥१६५॥
अग्निना भस्मनावापि स्तंबेन सलिलेन वा ।
द्वारस्य चोपमार्गेण पंक्तिदोषो न विद्यते ॥१६६॥
तिलकेन विनाविप्रो पुण्यस्त्री कुंकुमं विना ।
द्वावेतौ गर्हितौलोके दैवपित्र्ये च कर्मणि ॥१६७॥
यागं दानं च योगं च स्वाध्यायं पितृतर्पणम ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम ॥१६८॥
विना यज्ञोपवीतेन विना वद्धशिखेन च ।
विशेषोद्युपवीतेन यत्कृतं नैव तत्कृतम् ॥१६९॥
पूर्वतो सर्वदेवाश्च दक्षिणे पितरस्तथा ।
तस्मात्सर्वप्रयत्ने न वामे गंडूपमुत्सृजेत ॥२००॥
हस्तपात्रे च धौते च क्रियते पंक्तिवारणम् ।
प्रागुदीची विवाहे च प्रतीची दक्षिणस्तथा ॥२०१॥

आमंत्रितो जपेद्दोग्ध्री नियुक्तस्तु निषंगिणः।
उत्थायवामदेव्यं तु श्राद्धदोषैर्न लिप्यते ॥२०२॥
कन्यादानं पिंडदानं विप्राणां पादसिंचनम्।
आमन्त्रायां च भार्यायां केवलेन कृतं वृथा ॥२०३॥
भर्तृणा च हता नारी साहंकारा तथैव च।
तस्या हस्तान्नभुंजीत श्राद्धकालेषु वर्जयेत् ॥२०४॥
अनाश्रमी तु यः स्तेयो द्विजरूपधरस्तथा।
तस्मै श्राद्धानि यो दद्याद्राक्षसेभ्यः प्रयच्छति ॥२०५॥
घृतहीनं तु योऽधीते(भुङ्क्ते)नरस्त्वाहुतिपंचकम्।
पश्चाद् घृतं तु यो भुंक्ते द्विजश्चान्द्रायणं चरेत् ॥२०६॥
इक्षुरापः पयोमूलं फलं ताम्बूलमौषधम्।
भक्षयित्वाऽपि कर्तव्यं देवाग्निपितृतर्पणम् ॥२०७॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
गुरुरेवपतिः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥२०८॥
सर्वमन्नमुपादाय सतिलं दक्षिणामुखम्।
उच्छिष्टसन्निधौपिण्डं दद्याद्वै पितृयज्ञवत् ॥२०९॥
पादप्रक्षालनादूर्ध्वं यावद्विप्रविसर्जनम्।
तावच्छ्राद्धं प्रकुर्वीत नाशौचं न च सूतकम् ॥२१०॥
यजुषां पिंडदाने तु माषान्नं यः परित्यजेत्।
स वै नरकमाप्नोति निराशाः पितरोगताः ॥२११॥
प्रागादिप्रत्यगंतस्य इति वाजसनेयिनां।
उदगादि दक्षिणान्तं दैवेपित्र्ये च कर्मणि ॥२१२॥

एकालिंगे करे तिस्र उभयोर्मृद्द्वयं स्मृतम ।
पंचापाने दशैकस्मिन उभयोः सप्त मृत्तिका ॥२१३॥
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणाम ।
वानप्रस्थस्य त्रिगुणं यतीना च चतुर्गुणम ॥२१४॥
संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
इह जन्मनि शूद्रत्वं मृते श्वानोऽभिजायते ॥२१५॥
उष्णोदकेन सप्ताहं द्विजः शूद्रत्वमाप्नुयात ।
उष्णोदकैर्वृथा स्नानं वृथाजाप्यमवैदिकम ॥२१६॥
अश्रोत्रिये वृथादानं वृथाश्राद्धमदक्षिणम ।
असामर्थ्याच्छरीरस्य वैदिकं श्रुत्वा दृष्ट्वास्पृष्ट्वा
प्रभाषितम ॥२१७॥
संध्याविनाशयेज्जाप्यं तत्सर्वं निष्फलं भवेत ।
उल्लंघयति संध्या यः स याति नरकं ध्रुवम ॥२१८॥
तस्मान्न लंघयेत्संध्या सायंप्रातर्द्विजः सदा ।
अकृत्वा वैश्वदेवं तु भुंजंते ये द्विजाधमाः ॥२१९॥
वृथा तेनान्नपानेन काकयोनि व्रजन्ति ते ।
कृत्वालं पादशौचं विमलमथजलं त्रिःपिबेदुन्मृजेद्द्विः-
तर्जन्यंगुष्ठयुग्मात्सजलमभिमृशेन्नासिकारन्ध्रयुग्मं ॥
अंगुष्ठानामिकाभ्या नयनयुगयुतं कर्णयुग्मं कनिष्ठा-
गुष्ठाभ्या नाभिदेशं हृदयमथतलेनागुलीभिः शिरोंसौ ॥२२०
श्मशाने शूद्रसंपर्के चाण्डालादि प्रदर्शने ।
रोदने व्याकुले देशे न पठेत महालये ॥२२१॥

स्वयं वा पच्यते पाकः पत्नी वा पच्यते यदि ।
पुत्रेण पच्यते पाकः स्वयंपाकः स उच्यते ॥२२२॥
मातृपाकं तु भुंजीयात् स्त्रीपाकं तु विशेषतः ।
आत्मपाकं पवित्रं च व्याघ्रस्य वचनं यथा ॥२२३॥
यदि भार्या अशक्ते न श्राद्धपाकेषु कारिणम् ।
दृष्टिपूतः समंतोयं दरिद्रमजलं यथा ॥२२४॥
न कन्या क्रियतेपाकं न पाकं चान्यगोत्रजाः ।
विधवा च तथा वंध्या गर्भस्त्रावी च दुर्मुखी ॥२२५॥
एताः पाकं न भुंजीत पितॄणां नोपतिष्ठति ।
श्राद्धान्नपाके विधवापरस्त्री न वितृप्यते ये पितरो न देवाः
नोदके नैव चाज्येन नान्नेनैव कदाचन ।
चित्राहुतिवलिं चैव न कुर्याच्छ्राद्धभुक्द्विजः ॥२२७॥
तीर्थयात्राविवाहेषु संग्रामे देवतालये ।
उपनीतोत्सर्जनेषु स्पृष्टास्पृष्टं न विद्यते ॥२२८॥
सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च ।
हीनाचारद्विजस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥२२६॥
आसने पादमारूढं प्रत्यक्षं लवणं तथा ।
मुखेन धमितं चान्नं तुल्यं गोमांस भक्षणम् ॥२३०॥
समीपस्थानतिक्रम्य ब्राह्मणान् वेदपारगान ।
दाने भोजनकाले च तत्फलं निष्फलं भवेत ॥२३१॥
पूजयेत् श्राद्धकालेषु यतिनं ब्रह्मचारिणम् ।
विप्रानुद्धरते पापात् पितृमातृगणैरपि ॥२३२॥

आमंत्रिणो(तं)गतं विप्रं निवारयति दुमतिः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनिषु जायते ।।२३३।।
आमंत्रितस्तु यो विप्रो भोक्तु मन्यत्र गच्छति ।
नरकाणां शतं गत्वा चांडालेष्वभिजायते ।।२३४।।
सपवित्रेण हस्तेन न दद्याद्गंधलेपनम् ।
दीयते यदि मूढन निराशाः पितरोगताः ।।२३५।।
अनग्निकस्य विप्रस्य यदन्नं हूयते करे ।
तदन्नं प्रक्षिपेदग्नौ भुक्त्वा चान्द्रायणं चरेत् ।।२३६।।
अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।
न याचते द्विजोमूढः सविप्रः श्राद्धघातकः ।।२३७।।
अपेक्षितं न यो दद्याच्छ्राद्धे वै उपकल्पितम् ।
अधोगत्वा सुघोरासु तिर्यग्योनिषु जायते ।।२३८।।
शब्देनापोशनं पीत्वा शब्दे न घृतपायसम् ।
शब्देनापः पय. पीत्वा सुरापानसमं भवेत् ।।२३९।।
अत्युक्तमन्नं विप्रस्तु पाणिनास्पर्शते यदि ।
त्रयस्ते नरकं यान्ति दाता भोक्ता च पूर्वजाः ।।२४०।।
अप्रवाहोदकं स्नानं विप्रपादाभिषेचनम् ।
गायत्री जपमर्घ्यंच आदित्यभिमुखोभवेत् ।।२४१।।
ग्रन्थिर्यस्य पवित्रस्य विप्रपादाभिषेचनम् ।
यथा वज्रहतो वृक्षो देवता पितरस्तथा ।।२४२।।
नान्दीमुखोत्सवे दाने द्वादश्यादि व्रतेषु च ।
पूर्वाभिमुखतः कुर्याद्विप्रपादाभिषेचनं ।।२४३।।

विप्रपादाभिषेके तु कर्ता प्रत्यङ्मुखोभवेत् ।
द्विरात्राणि वा कुर्यात् नित्यश्राद्धं विधीयते ॥२४४॥
रजस्वलायां भार्यायां मृताहं यः परित्यजेत् ।
स वै नरकमाप्नोति हन्ति देवान पितृंस्तथा ॥२४५॥
पंडितोज्ञानिनो वापि मूर्खयोषित एव वा ।
मृताहः स्वामतिक्रम्य चांडालः कोटिजन्मसु ॥२४६॥
पित्रोः क्षयाहे संप्राप्ते यः कुर्यात्तिलतर्पणम ।
आसुरं तर्पणं ज्ञेयं तत्तोयं रुधिरंभवेत् ॥२४७॥
आपोशानं करे विप्रे संकल्पं यः समाचरेत् ।
नष्टं भवतितच्छ्राद्धं पितृणां नोपतिष्ठति ॥२४८॥
आपोशानं करे कृत्वा आशीर्वादं करोति यः ।
अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणं चरेत ॥२४९॥
भूमौ यस्तर्पणं कुर्यात् कांस्यतोयं तथैव च ।
तर्जन्यंगुष्ठमध्ये तु तज्जलं रुधिरं भवेत ॥२५०॥
अगोधूमं तु यच्छ्राद्धं मापमुद्गविवर्जितम् ।
तैलपक्वेन रहितं तच्छ्राद्धं निष्फलं भवेत ॥२५१॥
मापान्नं पायसं दद्याच्छ्राद्धे गव्यं विशेषतः ।
आचन्द्रार्कं भवेत्तृप्तिः भोजने पिंडदानयोः ॥२५२॥
नैककाले द्वयं स्नानं स्नानद्वये न तर्पणम् ।
नैकपादे द्वयं श्राद्धं न दिवा भोजनद्वयम ॥२५३॥
सूक्तस्तोत्रजपेत्युक्त्वा पिंडाघ्राणं च दक्षिणाम ।
आह्वानं चागतं चास्य विना च परिवेषणम् ॥२५४॥

विसर्जनं सौमनस्यमाशिष. प्रार्थना तथा ।
विप्रप्रदक्षिण चैव स्वस्तिवाचनकं विना ॥२५५॥
पितृमन्त्रत्प्रकर्तव्यं प्राचीनावीतिना सह ।
सम्बन्धं प्रथमं ब्रूयान गोत्रं नाम ततः परम ॥२५६॥
पश्चाद्रूपं विजानीयान् व्याघ्रस्य वचनं यथा ।
प्राचीनावीतिना पित्र्यं मव्यं जानुनिपाततम् ।
दक्षिणास्थेन कर्तव्यमप्रदक्षिणतस्तिलैः ॥२५७॥
यत्किंचिद्दीयते श्राद्धे देवतीर्थेन दैविके ।
पैत्रिके पितृतीर्थेन मर्वत्रैपविधिः स्मृत. ॥२५८॥
पितॄणमासनं दद्याद्वामपार्श्वे तथा सुधी ।
दक्षिणे चैव देवानां सर्वदा श्राद्धकर्मणि ॥२५९॥
देवाना ऋजवोदर्भा अच्छिन्नाग्राः अमूलकाः ।
समूलाः पितृकार्येषु दक्षिणाग्रा द्विभुग्नकाः ॥२६०॥
नाकस्था नरकस्थाश्च नानायोनिगता अपि ।
स्वपितृभ्योपधयत्येव(?)श्राद्धं कुर्यात्समाहितः ॥२६१॥
क्षणे चाह्वानसंकल्पे पिण्डदानान्नदानयोः ।
पिण्डाभ्यंजनकाले च तथैवाजनकर्मणि ॥२६२॥
अक्षय्यासनपाद्येषु गंधाद्याच्छादनेषु च ।
श्राद्धकर्मणि चैतेषु गोत्रं नाम प्रकाशयेत ॥२६३॥
दत्तंवाप्यथवादत्ते भूमौयो नि.क्षिपेद्बलि ।
तदन्नं निष्फलं भूयात निराशा पितरोगताः ॥२६४॥

अमावास्या मासिकं च मृताहे व्यतिरेकि यत् ।
त्रयं कर्तुमशक्तश्चेत् सुतं शिष्यं च कारयेत् ॥२६५॥
राजकार्ये नियुक्तस्य वंधनिग्रहवर्तिनः ।
व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥२६६॥
महालये गयाश्राद्धे प्रेतश्राद्धे तु मासिके ।
पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् ॥२६७॥
सर्वत्रोंकारमुच्चार्य श्राद्धमंत्रेषु नोच्चरेत् ।
आर्षच्छन्दांसि वै तद्वद्यत्नतः पूर्वकर्मणि ॥२६८॥
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥२६९॥
आयुः प्रशस्यमैश्वर्यं सर्वं च लभते शुभम् ।
नैमित्तिके यथाश्राद्धे न दद्यात्सूत्रवाससी ॥२७०॥
भ्रमन्ति पितरस्तस्य दीना नग्नाश्च वत्सरम् ।
गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः ॥२७१॥
निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत् ।
मातापित्रोश्च कर्तव्यमेकोद्दिष्टं क्वचित्क्वचित् ॥२७२॥
देशाचारं कुलाचारं प्रत्यब्दं विधिवन्नरैः ।
पितृव्यभ्रातृ मातॄणां ज्येष्ठानां पार्वणं स्मृतम् ॥
एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः ॥२७३॥
यजुषाः सामगाः पूर्वं मध्येजुह्वत्यथर्वणः ।
बह्वचाः श्राद्धशेषेण वैश्वदेवस्त्रिधामतः ॥२७४॥

ब्राह्मणं न परीक्षेत दैवेकर्मणि धर्मवित् ।
पित्र्ये कर्मणि संप्राप्ते परीक्षेत प्रयत्नतः ॥२७५॥
दक्षिणाप्रवणेदेशे तीर्थेवापि गृहेपिवा ।
स्वभूमौ तु नदीतीरे केशाद्युपद्रवे हते ॥२७६॥
श्राद्धकर्ता च पूर्वेद्युः संध्याद्युपासने कृते ।
श्वः श्राद्धं करिष्यामीत्यशक्तो वाचयेत्सुतान ॥२७७॥
इत्युक्तो गुणसंपन्नान ब्राह्मणान् पूर्ववासरे ।
निमंत्रयीत तान्भक्त्या नियोगाख्यानपूर्वकम् ॥२७८॥
न विना ब्रह्मचर्येण ब्राह्मणाः श्राद्धकर्मणि ।
यतिश्च ब्रह्मचारी च न दाने तौ निमंत्रयेत ॥२७९॥
अयातयामा विज्ञेया नियोज्याश्च पुनः पुनः ।
अकृते पिण्डदाने तु ब्राह्मणो वमते यदि ॥२८०॥
पुनः पाकं च कृत्वा तु श्राद्धं कुर्यात्प्रयत्नतः ।
पितृदेवक्रियां कृत्वा परपाकं तु सेवते ॥२८१॥
दातु. कर्मफलप्राप्तिर्भोक्ता भुंक्ते तु किल्विषम ।
अविभक्ताः सुताः सर्वे एकं कुर्युर्मृतादिकम ॥२८२॥
ग्रामान्तरे पृथक्कुर्याद्दर्शश्राद्धानुमासिकम ।
अविभक्ता. पृथग्ग्रामा. स्वस्वार्जितधनाशनाः ॥२८३॥
भ्रातरः कुर्वतेश्राद्धं मातापित्रो. पृथक् पृथक् ।
विप्रस्तु दक्षिणं पादं पितरस्तु उदङ्मुखाः ॥२८४॥
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवेश्राद्धमेकोद्दिष्टं न पार्वणम ॥२८५॥

पाणिहोमे कथं कुंडं कियन्मात्रं विधीयते।
तन्ममाचक्ष्वविप्रर्षे पृच्छतः शुद्धमानसः ॥२८६॥
दर्भैः कुंडं प्रकर्तव्यं चतुरस्रं सुशोभनम्।
साष्टैरष्टभिरेवस्यात् समूलैर्नात्र संशयः ॥२८७॥
दर्भस्य समिधं तत्र जुहुयान्मौनमास्थितः।
सोमाग्नीदेवते तत्र पितृमत्कव्यवाहने ॥२८८॥
अपसव्येन होतव्यमाहुतीद्वयमेव च।
यावत्पाणियजा(?)कुण्डं विपरीतं न कारयेत् ॥२८६॥
वह्निः कर्मणि कुण्डं च त्रिकोणं च सदाभवेत्।
नवश्राद्धेषु सर्वेषु कुण्डं पाणितले मतम् ॥२६०॥
परिस्तरणमुद्दिष्टं पात्रमेकं शिशोदये।
पाणिहोमे च ये दर्भा पात्रे वाधस्तु निःक्षिपेत् ॥२६१॥
पुनरग्नौ च तानहुत्वा दहन्ति पितरस्तथा।
आदौ पिता तथा माता सापत्नजननी तथा ॥२६२॥
मातामहाः सपत्नीका आत्मपत्न्यस्तदन्तरं।
सुतभ्रातृपितृव्याश्च मातुलाश्च सपत्निकाः ॥२६३॥
दुहिता च स्वसा प्रोक्ता दौहित्रो भागिनेयकः।
पितृष्वसा मातृष्वसा श्वशुरो गुरवस्तथा ॥२६४॥
एते स्युः पितरस्तीर्थे तर्पणे च महालये।
श्राद्धात्प्रागेव कुर्वन्ति वैश्वदेवं च ये द्विजाः ॥२६५॥
एकादशाह्निकं भुक्त्वा तत्र ह्येते विधीयते।
परान्नं पायसं क्षीरं कांजीपकं तथैव च ॥२६६॥

पितृशेषं तथोच्छिष्टं वैश्वदेवं न कारयेत् ।
पित्र्यर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ॥
वैश्वदेवं न पित्र्यर्थं न दार्शं वैश्वदेविकं ॥२९७॥
पितृपाकं समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितृणा नोपतिष्ठति ॥२९८॥
हुतशेषं न दातव्यं वायसेभ्यः कदाचन ।
यदि दद्याद्द्विजोमोहात् हुतं तस्य वृथा भवेत् ॥२९९॥
पाकान्तरेण कुर्यात्तु वैश्वदेवं यथाविधि ।
स्नाने दाने जपे होमे स्वाध्याये पितृकर्मणि ॥३००॥
सपवित्रौ सदर्भौवा करौ कुर्वीतनान्यथा ।
नित्यश्राद्धं न कुर्वीत प्रसंगाद्यत्र सिध्यति ॥३०१॥
श्राद्धान्तरे कृते तस्मिन् नित्यत्वात्तन्नहापयेत् ।
दर्शश्राद्धादिनिष्पत्तौ नित्यस्य न पृथक् क्रिया ॥३०२॥
ते नैव तस्यसिद्धिःस्यात् काम्येनित्याग्निहोत्रवत् ।
आविकेन तु वस्त्रेण मानवः श्राद्धमाचरेत् ॥३०३॥
गयाश्राद्धसमं प्रोक्तं पितृणा दत्तमक्षयम् ।
रेतस्पृष्टं शवस्पृष्टं स्पृष्ट्वा मूत्रपुरीषयोः ॥
रजस्वलादि संस्पृष्टमाविकं तु सदाशुचिः ॥३०४॥
अग्निराविक वस्त्रं हि विप्रास्तिलाः कुशाः यवाः ।
एतेषां न कृतो दोषो व्याघ्रस्य वचनं यथा ॥३०५॥
हव्यार्थं गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आज्यं वा तदलाभे त साक्षात्तैलं प्रगृह्यते ॥३०६॥

तैलाभावे गृहीतव्यं तैलं च तिलसंभवं ।
तदभावेऽतसीस्नेहः कौसुंभः सर्षपोद्भवः ॥३०७॥
वृक्षस्नेहोथवा ग्राह्यं पूर्वालाभे परः परः ।
तदलाभे यवव्रीहिः श्यामाकाभ्यन्तरोद्भवम् ॥३०८॥
पिण्माल्लोक्यते येन घृतार्थे योजयेत्सुधीः ।
वृक्षतैलेषु पुंनागं निंबैरण्डोद्भवं त्यजेत् ॥३०९॥
यद्वा गव्यं घृते छागं माहिष्यादेर्घृतं क्रमात् ।
तदलाभे गवादीनां क्रमात्क्षीरं विधीयते ॥३१०॥
तदलाभे दधिग्राह्यमलाभे तैलमिष्यते ।
मुख्यासनौ यथा ग्राह्य कार्यकारणसंततौ ॥३११॥
चणका राजामपाश्च रक्तायावन्नलास्तथा ।
श्यामाका ममूराश्चैव आढक्याश्च सचत्वका ॥३१२॥
अग्राह्याः श्राद्धपाके च कुलित्थाः सर्षपास्तथा ।
हविष्योगोधूमाश्चैव मुद्गामापा यवास्तथा ॥३१३॥
तण्डुला व्रीहयश्चैव कृष्णातिलास्तथैव च ।
आढक्यास्तुपरहिता शुभायावन्नलास्तथा ॥३१४॥
आर्द्रकं नारिकेलं च रंभा जंबूश्च चूतकाः ।
ऐक्षवं वदरं चैव सैंधवं लवणं तथा ॥३१५॥
मरीचं च मधुश्चैव क्षौद्रं शुंठिस्तथैव च ।
वसुरुद्रस्वरूपास्ते श्राद्धार्थे तर्पणे पितॄन् ॥३१६॥
नामगोत्रे समुच्चार्य तिलैस्तीर्थेषु संयुतः ।
न चस्मरेद्दर्पीश्छन्दान् श्राद्धे वैतानिके मखे ॥३१७॥

ब्रह्मयज्ञेन वै तद्वत्तथोंकारं तु नोच्चरेत् ।
अन्वारब्धेन सव्येन दक्षिणेन तु पाणिना ॥३१८॥
सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत् ।
ऊर्ध्वबाहुरधोयामं खातं प्राक्दक्षिणायतम ॥३१९॥
पंचारत्निमिता तिर्यक् अधस्ताद्दक्षिणायतम ।
पंचारत्निमितातिर्यगधस्ताद्द्वादशांगुलम ॥
पितुः पुत्रेण कर्तव्य प्रपितामहपूर्वकम ॥३२०॥
दैवात्प्रत्याब्दिके श्राद्धं अन्तरामृतसूतके ।
आशौचानन्तरं कुर्यात्तन्मासेन्दुक्षयेरपि ॥३२१॥
श्राद्धे विघ्न समुत्पन्ने ह्यविज्ञाते मृतेहनि ।
कुर्यादन्नेन कृष्णायामेकादश्यां विधुक्षये ॥३२२॥
आब्दिके चैव संप्राप्ते आशौचं जायते यदि ।
आशौचे तु व्यतिक्रान्ते तत्र श्राद्धं प्रदीयते ॥३२३॥
अपुत्रा तु यदाभार्या संप्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सातु कुर्यात्तत्पंचमेऽहनि ॥३२४॥
अमाश्राद्धे गयाश्राद्धे श्राद्धे चापरपक्षगे ।
न जीवत्पितृक कुर्यात्तिलैः कृष्णैश्च तर्पणम ॥३२५॥
भरणी प्रेतपक्षे तु महती परिकीर्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद् भवेत ॥३२६॥
मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ।
वर्षे वर्षे तु तच्छ्राद्धं मातापित्रोर्मृतेऽहनि ॥३२७॥

मासद्वयेऽपि तत्कार्यं व्याघ्रस्य वचनं यथा ।
गयायां सर्वकाले च पिण्डं दद्यात् विचक्षणः ॥३२८॥
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ।
आदित्यकिरणैः पूतं पुनः पूतं च वह्निना ॥३२६॥
अतोऽव्याध्यातुरः स्नायाद् ग्रहणे चन्द्रसूर्ययोः ।
सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ॥३३०॥
पिण्डजं चरुहोमं च सगोत्रेण न कारयेत् ।
स्पन्दनेषु द्विजातीनां भिन्नतो जनभोजने ॥३३१॥
पंचगव्येन शुद्धिःस्याद् व्याघ्रस्य वचनं यथा ।
पिण्डदानं मृदास्नानं तथैव तिलतर्पणम् ॥३३२॥
विदेशगमनं चैव न कुर्याद्गुर्विणीपतिः ।
पुंसोभार्या गुर्विणीतस्य नाशश्चौलं सूनोःक्षौरकर्मात्मनश्च ।
गेहारम्भं पिण्डसंस्थापनं च वार्द्धौस्नानं तीर्थयात्रां न कुर्यात्
भूमौ हस्तौ प्रतिष्ठाप्य मार्जनं चैव वर्जयेत् ।
न कुर्याद्यादि मूढात्मा रौरवं नरकं व्रजेत् ॥३३४॥
गंगायां वापिकायां च तड़ागे च तथैव च ।
वामहस्ते जलं गृह्णन् न कुर्यान्मार्जनं द्विजः ॥३३५॥
पात्रस्थितोदकेनैव वामहस्तोदकेन वा ।
संध्यायां मार्जनं कृत्वा नान्ययोस्तु कदाचन ॥३३६॥
उष्णोदकेन या सन्ध्या पदमध्ये तु मार्जनं ।
उपविश्य तु यत्रार्घ्यं तत्सर्वं निष्फलं भवेत् ॥३३७॥

वामहस्ते जलं धृत्वा यस्तुसंध्यामुपासते ।
सा संध्या तु वृथाज्ञेया आसुरस्तेन तृप्यति ॥३३८॥
कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रं तु गृहीकुर्याद्यद्वा कर्णे समाहितः ॥३३९॥
यद्येकवस्त्रो विप्रः स्यात् कर्णेकृत्वोपवीतकम् ।
अन्तर्धाय तृणैर्भूमि शिरः प्रावृत्यवाससा ॥३४०॥
अयज्ञीयस्तृणैस्तत्स्यात् (?) इतरानसतद्भवेत् ।
उभे मूत्रपुरीषे तु दिवाकुर्यादुदङ्मुखः ॥३४१॥
तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृत्य वारिणा ।
अरत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते ॥३४२॥
सन्ध्ययोर्भोजनार्थे च पित्र्यर्थे देवकर्मणि ।
शूद्राहृतेन नाचामेत्तथा चर्मेण वारिणा ॥३४३॥
प्रक्षाल्योदकं शुचौदेशे दंतधावनमुत्सृजेत् ।
निषिद्धाहे तृणैः कुर्याज्जिह्वोल्लेखस्तु सर्वदा ॥३४४॥
कार्पासमुपवीतं स्याद्विप्रोशौचधृतं त्रिवृत् ।
स्थाने पवित्रे संध्याया पणवत्यंगुलीष्वयत् ॥३४५॥
करंज-पिप्पल-वट-प्लक्ष-कुम्भ्यर्क-तंदुकाः ।
एषां पात्रेषु नाश्नीयात् कोविदाराम्रयोरपि ॥४६॥
विपरीतेषु पत्रेषु तिर्यक्पत्रे च दारुजे ।
नैकवासा समश्नीयात् नाश्नीयात् भिन्नभाजने ॥३४७॥
हस्तदत्तानि चान्नानि प्रत्यक्षंलवणं तथा ।
ताम्र-रजत-सौवर्ण-शंख स्फटिक-शुक्तिषु ॥३४८॥

अपात्रेषु च पत्रेषु भिन्नदोषो न विद्यते।
एक एव तु यो भुंक्ते विमले कांस्यभाजने ॥३४९॥
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशोबलम्।
कांस्यपात्रमनुज्ञातं विधवाब्रह्मचारिणौ ॥३५०॥
यद्यन्यस्मै भोजनाय न कदाचित्प्रयच्छति।
कर्मकाले न कुर्वीत मुसलोलूखलध्वनिम ॥३५१॥
तथा संघट्टशूर्पादेः संध्यायां च विशेषतः।
निशायाः पश्चिमे यामे धान्यसंस्करणादिकम ॥३५२॥
श्रूयमाणं हि नारीणां श्रूतश्रेयोधनावहम।
श्रोत्रियान्नं च भक्ष्यं च हुतशेषं च यद्धविः ॥३५३॥
आनखाच्छोधयेत्पापं तुषाग्निमिव कांचनम।
मातुर्यदग्रे जायेत द्वितीयं मौंजीबन्धनम ॥३५४॥
त्रितीयामग्निदीक्षी च त्रिजन्मपात्रमुत्तमम।
वृत्तिमन्तं शिल्पानि हीनादपि समाश्रयेन॥
राजद्रव्यं तु ये केचिद् वेदोदोपेण(?)गृह्यति ॥३५५॥
रजस्वलायां भार्यायां सूतके पर्वणि तथा।
तैलाभ्यंगं न कुर्वीत संध्यासु श्राद्धकर्मणि ॥३५६॥
अजागावो महिष्यश्च ब्राह्मणस्य प्रसूतिका।
दशरात्रेण शुध्यंति भूमिस्थं च नवोदकम ॥३५७॥
अतः परं प्रवक्ष्यामि संध्योपासननिर्णयम्।
अग्निहोत्र कृतैः पापैः यामुपास्य प्रमुच्यते ॥३५८॥

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
धनधान्येन वैश्यानां शूद्राणामग्रजन्मतः ॥३५९॥
यश्चाभिवादनो (दिनं) विप्र आशिषं न प्रयच्छति ।
श्मशाने जायते वृक्षो आशिषं न प्रयोजति ॥३६०॥
उदक्यां मूतिकां नारी भर्तृघ्नी गर्भघातिनी ।
पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ॥३६१॥
सोपानत्कं कृतघ्नं च मंत्रोच्चारकृतं रिपुम् ।
भुंजानमशुचिमंतं धावन्तं नास्तिकं तथा ॥३६२॥
वमंतं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥३६३॥
जपयज्ञजलस्थं च समित्पुष्पकुशान्तिलान् ।
उदपात्रार्थभैक्ष्यं च वहंतं नाभिवादयेत् ॥३६४॥
स्वयमेव विधानेन अभिवंदेभिवादकम् ।
मंध्याये(?) नियमानेति द्रष्टव्या अभिवादने ॥३६५॥
देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनम् ।
नमस्कारं न कुर्वीत प्रायश्चित्ती भवेन्नरः ॥३६६॥
जन्मप्रभृति यत्किंचित्सुकृतं समुपार्जितम् ।
तत्सर्वं निष्फलं याति एक हस्ताभिवादनात् ॥३६७॥
अग्निहोत्रफलावेदा षडंगसपदक्रमः ।
अग्निहोत्रात्परो धर्मो न भूतो न भविष्यति ॥३६८॥
न व्याहृतिसमो होमो न गायत्री समो जपः ।
नाग्निहोत्रात्परो यज्ञो न देवः केशवात्परः ॥३६९॥

अनलादर्शनं यावत् इतिवाजसनेयिनः ।
परान्नपक्वं नाश्नीयात् ह्यवसन् पर्वणि द्विजः ॥३७०॥
असन्तुष्टे सुखं नास्ति न धर्मः क्षुद्रमानसे ।
भाग्यहीने धनं नास्ति नास्ति पुण्येऽच्युतार्चनम् ॥३७१॥
सत्यानृताभ्यां जीवंतमृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्या कदाचन ॥३७२॥
सत्यानृतं तु वाणिज्यं श्ववृत्तिः नीचसेवनम् ।
सेवावृत्तिभि(स्तु)र्येरुक्ता नूनं ते नैव पंडिताः ॥३७३॥
दक्षिणास्योऽपसव्येन तर्पयेत् विधिवत्पितॄन् ।
वाह्वपूर्णतलैः कृत्वा जलस्थस्तर्पयेत पितॄन् ॥३७४॥
स्थलस्थेन तु कर्तव्यं पितॄणां तृप्तिमिच्छता ।
विनारौप्य सुवर्णेन विना ताम्रतिलैर्न च ॥३७५॥
विना दर्भैश्च मंत्रैश्च पितॄणां नोपतिष्ठति ।
विवाहस्त्वेकजन्यानां एकस्मिन्नुदये कुले ॥३७६॥
नाशंकरोत्येकवर्षे स्यादेका विधवातयोः ।
प्रत्युद्वाहो नैव कार्यो नैकस्मिन् दुहितृद्वयम ॥३७७॥
नैकजनन्योः पुंसो रेक (?) जनन्यके ।
मातामंगलसूत्रेण मृतायदि . चतुर्दिने ॥३७८॥
उद्दिश्यविप्रपंक्तौ तां भोजयेत्तु सुवासिनीम् ।
जानुदघ्नजलस्थोवाऽऽविलं स्नानशाकटः ॥३७९॥
सव्येनप्राङ्मुखोदेवान् निवीत्युत्तरतोनरान् ।
शिशोर्मातारिगर्भिण्यां चूडाकर्म न कारयेत् ॥३८०॥

गते तु पञ्चमेवर्षे गर्भिणी यदि वा भवेत् ।
गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् ॥३८१॥
पञ्चाब्दात्प्रागथोर्द्ध्वं च गर्भिण्यामपि कारयेत् ।
चूड़ाकर्म शिशोर्माता गर्भिणी यदि वा भवेत् ॥३८२॥
गर्भस्यैव विपत्तिः स्यात् दंपत्योर्वा शिशोरपि ।
सहोपनीत्या कुर्याच्चेत्तदादोषो न विद्यते ॥३८३॥
वेदान्तरमधीत्यैव ऋग्वेदं येत्वधीयते ।
उपनीतिरयं तेषामलंकरणवर्जिता ॥३८४॥
पार्श्वंड्यस्पृश्यसंस्पर्शे न स्नायादुष्णवारिणा ।
नद्यां तु विद्यमानायां न स्नायादन्यवारिषु ॥३८५॥
अस्नातमातुरस्नाने स तीर्थं तु श्रृतोदकम् ।
स्नात्वा तु वाससी धौते अक्लिन्ने परिधाय च ॥३८६॥
प्रक्षाल्योरुमृताचाद्भिर्हस्तौ प्रक्षालयेत्ततः ।
कापायं कृष्णवस्त्रं च मलिनं केशदूषितम् ॥३८७॥
जीर्ण नीलं संधितं च पारक्यं मैथुने धृतम् ।
अच्छिन्नाग्रमुपवस्त्रं कुत्सितं धर्मतो विदुः ॥३८८॥
यज्ञं दानं जपो होमं स्वाध्यायं पितृतर्पणम् ।
नैकवस्त्रो द्विजः कुर्याद्भोजनं तु सुरार्चनम् ॥३८९॥
तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पयत् ।
ततः सन्ध्यामुपासीत 'शुद्धचित्तोजितेन्द्रियः) ॥
मुहूर्तादग्निहोत्राणि नयंति परमां गतिम् ॥३९०॥

अत्रस्वर्गश्चमोक्षश्च यो यथा गन्तुमिच्छति ।
यदिच्छसि महासिद्धिं तीर्थराजाभिषेचनम् ॥३६१॥
विप्रपादविनिर्मुक्तं तोयं शिरसि धारय ।
दक्षिणां स ब्रह्मसूत्रं स्तेयेमे दक्षिणामुखः ॥३६२॥
कुशास्तान द्विगुणी कुर्वन् जानुसव्यं निधाय च
मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ॥३६३॥
करोति यदि मूढात्मा तत्सर्वं निष्फलं भवेत् ॥३६४॥
विद्वान् स्वयं तु यो ब्रूयात् स धर्मः परमः स्मृतः ।
अच्छिद्रमितितद्वाक्यं वदंति क्षितिदेवताः ॥३६५॥
प्रणम्यशिरसाग्राह्यमग्निष्टोमफलैः सह ।
व्याघ्रपादेन चाख्यातं धर्मशास्त्रोत्तमोत्तमम् ॥३६६॥

इति व्याघ्रपादप्रणीतं धर्मशास्त्रं समाप्तम् ।

॥ समाप्तश्चायं स्मृतिसन्दर्भस्य चतुर्थोभागः ॥

* ॐ तत्सद्ब्रह्मार्पणमस्तु *

---

